ध्यमवरं केवलमन्ततो येषु यज्ञेषु कर्म वर्तते। यदुक्तम्—"सप्तदशावराश्चतुर्विंशतिपरमा ऋत्विजः" इति। यद्वा। अवरं हीनं ज्ञानरहितं श्रेयः श्रेयस्कारणं ये जना अभिनन्दन्ति मन्यन्ते। जरामृत्युं जरासहितं मृत्युम् ॥ ७॥

अविद्यायामन्तरेऽविद्यारूप आवरणे स्वयं धीराः स्वयमेव धिय ईशाः प्रेरका गुरुनिरपेक्षा जङ्घन्यमाना भृशं पीड्यमाना जरारोगाद्यनेकानर्थजातैः परियन्ति परितः स्वर्गनरकादौ यन्ति गच्छन्ति मूढा अज्ञा अन्धेनैवाचेतनेन प्रकृतेन कर्मणा परियन्तीत्यन्वयः। यथाऽन्धा इति दृष्टान्तस्तेषामपि विशेषणमन्धेनैव नीयमाना इति ॥ ८॥

वयमेव कृतार्था इत्यभिमानं कुर्वन्ति बाला अज्ञानिनः। यद्यस्मादेवं कर्मिणो न प्रवेदयन्ति तत्त्वं न जानन्ति रागात्कर्मफलरागाभिभवनिमित्तम् ॥ ९॥

इष्टापूर्तमिष्टं यागादि श्रौतं कर्म। पूर्तं स्मार्तं वापीकूपतडागादि। सुकृतेन भूत्वा पुण्येनोत्पद्य शरीरं लब्ध्वा। अनुभूत्वेति पाठे तु सुकृते सति कर्मफलमनुभूय। छान्दसो ल्यबभावः। इमं लोकं मनुष्यलोकं हीनतरं वा मनुष्यतोऽपि हीनं वा तिर्यङ्नरकादिलक्षणं कर्मशेषवशेन विशन्ति॥१०॥

वानप्रस्थसंन्यासिनोर्गृहस्थसाधूनां च विशेषमाह—तपःश्रद्धे इति। तपः स्वाश्रमविहितं कर्म। श्रद्धा हिरण्यगर्भादिविषयास्तिक्यबुद्धिपूर्विका विद्या। ते ये ह्युपवसन्त्यरण्ये तपःश्रद्धे श्रितास्तृतीयाश्रमिणो ये च शान्ता उपरतकरणग्रामा विद्वांसो गृहस्थाश्च ज्ञानप्रधानाः सन्त उपवसन्ति भोगांस्त्यजन्ति। ये च भैक्षचर्यां चरन्तो यतय उपवसन्त्यपरिग्रहा इत्यन्वयः। तेषां फलमाह—सूर्येति। सूर्यद्वारेणोत्तरेण पथा विरजाः क्षीणपुण्यपापकर्माणः सन्तः। रजःशब्दोऽत्राकारान्तः। ते तत्र प्रयान्ति यत्र सत्यलोकादौ स पुरुषः प्रथमजोऽव्ययात्माऽऽसंसारक्षयात्। एतदन्ताः संसारगतयोऽपरविद्यागम्याः ॥ ११॥

इदानीं साध्यसाधनरूपात्संसाराद्विरक्तस्य परस्यां विद्यायामधिकारप्रदर्शनार्थमाह—परीक्ष्येति। निर्वेदमायाद्वैराग्यं गच्छेदिति विधिः। वैराग्ये हेतुमाह—नास्तीति। कृतेन कर्मणाऽकृतो नित्यो लोको नास्ति। तद्विज्ञानार्थमकृतनित्यब्रह्मज्ञानार्थं स गुरुमेवाभिगच्छेत्। अनेन स्वयं धीरा इति परिहृतम्। समित्पाणिः पुनरुपनयनार्थम्। श्रोत्रियंश्छन्दोऽधीते छन्दसः श्रोत्रभावो घंश्च प्रत्ययः। वाक्यार्थे वा पदं वचनं प्रवक्तारमित्यर्थः(?)। ब्रह्मनिष्ठं ब्रह्मैकाग्रचित्तमित्यर्थः ॥ १२॥

उपसन्नायोपगताय सम्यग्यथाशास्त्रं शमान्विताय बाह्येन्द्रियोपरमयु-

क्ताय येन विज्ञानेनाक्षरमद्रेश्यादिविशेषणं पुरुषं पूर्णं पुरिशयं वा सत्यं परमार्थस्वभावं येन ज्ञानेन वेद विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूयादित्यर्थः । आचार्यस्याप्ययं नियमो यन्न्यायप्राप्तशिष्यस्य निस्तारणमविद्याया इति भावः ॥ १३ ॥

इति मुण्डकोपनिषद्दीपिकायां प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥

इति नारायणविरचितमुण्डकोपनिषद्भाष्यदीपिकायां प्रथममुण्डकं समाप्तम् ॥ १ ॥

---

परविद्याविषयब्रह्मविज्ञानार्थ उत्तरो ग्रन्थः । अत्यन्तपरोक्षत्वात्कथं नाम प्रत्यक्षवत्सत्यमक्षरं प्रपद्येरन्निति दृष्टान्तमाह—यथेति । हे सोम्य सोममर्हति कोमलत्वादिति सोम्यः, सोमाद्यः । इदं शौनकं प्रत्याङ्गिरसोक्तं संबोधनम् । विस्फुलिङ्गा इत्यत्र 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इत्यनेन वैकल्पिकत्वात्षत्वाभावः । भावा जीवादयः । जीवोत्पत्तिस्तु घटाकाशस्येव महाकाशादौपाधिकी वेदितव्या ॥ १ ॥

दिव्यो द्योतनवान्स्वयंज्योतिष्ट्वात् । दिवि स्वात्मनि भवो वा दिव्यः । अलौकिको वा दिव्यः । सह बाह्याभ्यन्तरेण वर्तते सबाह्याभ्यन्तरः । अजः सर्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्वे भावविकारा जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति चेति यास्कोक्ताः प्रतिषिद्धाः । यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभेदेषु सप्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादिवाऽऽकाशं तथाऽपि तु स्वतः परमार्थदृष्टीनामप्राणोऽक्रियाशक्तिरमनाः संकल्पादिज्ञानशक्तिरहितः । अनेन सर्वजीवधर्मरहित इत्युक्तं भवति । अत एव शुभ्रः शुद्धः । अक्षरात्परतः परस्मादक्षराद्व्यक्तं परः "अव्यक्तात्पुरुषः परः" इति मन्त्रवर्णात् ॥ २ ॥

कथं प्राणादयो न सन्तीत्यत्राऽऽह—एतस्मादिति । प्रलीयते चेत्यपि द्रष्टव्यम् । धारिणी दधात्यवश्यम् । 'आवश्यकाधमर्ण्ययोर्णिनिः' ॥ ३ ॥

न केवलं सर्वजनिहेतुरपि तु सर्वमयश्चेत्याह—अग्निरिति । अग्निर्द्युलोकः "असौ वाव लोको गौतमाग्निः" इति श्रुतेः । मूर्धाऽस्योत्तमाङ्गम् । यस्य विवृता उद्घाटिताः प्रसिद्धा वेदा वाग्घृदयमन्तःकरणं विश्वं समस्तं जगदस्य सर्वं ह्यन्तःकरणविकार एव जगत् । मनस्येव सुषुप्ते प्रलयदर्शनात् । जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्धि प्रतिष्ठानादस्य च पद्भ्यां जाता पृथिवी । एष देवो विष्णुरनन्तः प्रथमः शरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मा सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकरणात्मा ॥ ४ ॥

पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अप्यस्मादेव पुरुषात्प्रजायन्त इत्याह—तस्मादिति। तस्मात्पुरुषात्प्रजावस्थानविशेषरूपो द्युलोकोऽग्निस्तस्य विशेषणं समिधो यस्य सूर्यः समिध इव समिधः। सूर्येण हि द्युलोकः समिध्यते। ततो हि द्युलोकान्निष्पन्नात्सोमात्पर्जन्यो द्वितीयोऽग्निः संभवति। तस्माच्च पर्जन्यादोषधयः पृथिव्यां तृतीयाग्नौ संभवन्ति। ओषधिभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुमानग्नी रेतः सिञ्चति योषितायां योषाग्नौ पञ्चमे स्त्रियामित्येवं क्रमेण बह्वीर्बह्वयः प्रजा ब्राह्मणाद्याः पुरुषात्परस्मात्संप्रसूताः समुत्पन्नाः॥ ५॥

किंच कर्मसाधनानि फलानि च तस्मादेवेत्याह—तस्माद्दच इति। नियताक्षरपादावसाना नियताक्षरपादा गायत्र्यादिच्छन्दोविशिष्टा मन्त्रा ऋचः। साम पाञ्चभक्तिकं साप्तभक्तिकं च स्तोभादिगीतविशिष्टम्। अनियताक्षरपादावसानानि वाक्यरूपाणि यजूंषि। दीक्षा मौञ्ज्यादिलक्षणा नियमविशेषाः। यज्ञाश्चायूपा अग्निहोत्रादयः। क्रतवः सयूपाः। अत एव शिष्टप्रयोगः क्रतुयज्ञाख्येभ्यश्चेति। दक्षिणाश्चैकगवाद्यपरिमितसर्वस्वान्ताः। संवत्सरः कालः। यजमानः कर्ता। लोकाः फलभूताः। ते विशेष्यन्ते। सोमो यत्र येषु लोकेषु पवते पुनाति लोकान्। यत्र च सूर्यस्तपति। ते च दक्षिणोत्तरमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः॥ ६॥

तस्मात्पुरुषाद्देवाः कर्माङ्गभूता बहुधा वस्वादिगणभेदेन सम्यक्प्रसूताः साध्या देवविशेषा मनुष्याः कर्माधिकृताः पशवो ग्राम्या आरण्याश्च वयांसि पक्षिणः प्राणापानौ मनुष्यादीनां जीवनं व्रीहियवौ हविरर्थौ। तपश्च कर्माङ्गं पुरुषसंस्कारलक्षणं स्वतन्त्रं च फलसाधनम्। श्रद्धाऽऽस्तिक्यबुद्धिः। सत्यमनृतवर्जनं यथाभूतार्थवचनं चापीडाकरम्। ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम्। विधिश्चेतिकर्तव्यता॥ ७॥

किंच सप्त शीर्षण्याः प्राणास्तेषां च सप्तार्चिषो दीप्तयः स्वविषयावद्योतनानि ज्ञानानि तथा सप्त समिधः सप्त विषया विषयैर्हि समिध्यन्ते प्राणाः सप्त होमास्तद्विषयविज्ञानानि "यदस्य विज्ञानं तज्जुहोति" इति श्रुत्यन्तरात्। सप्तेमे लोका इन्द्रियस्थानानि। इमेग्रहणाच्च बाह्याः। येषु चरन्ति प्राणा इति विशेषणाच्च। किं प्राणापानादयो नेत्याह। गुहाशयाः प्राणा गुहायां शरीरे हृदये वा शेरते स्वापकाल इति गुहाशया निहिताः स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदं शीर्षण्याः सर्वरूपा बहुरूपाः॥ ८॥

येन रसेन भूतैः पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मशरीरं स ह्यन्तराले शरीरस्याऽऽत्मनश्चाऽऽत्मवद्वर्तत इत्यन्तरात्मा॥ ९॥

विश्वं सर्वं न विश्वं नाम पुरुषादन्यत्किंचिदस्ति। अतो यत्पृष्टं "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति तदुत्तरितम्। पुरुषे ज्ञाते पुरुष एवेदं नान्यदस्तीति विज्ञातं भवतीति विश्वस्वरूपमाह। कर्म तपः। कर्माग्निहोत्रादि तपो ज्ञानं जडाजडात्मकं जगद्ब्रह्म परामृतमेव ततोऽन्यत्कार्यस्य कारणाव्यतिरेकात्। एतज्जगदात्मकं ब्रह्म सर्वप्राणिनां हृदि निहितमर्पितं यो वेद सोऽविद्याग्रन्थिमज्ञानवासनां विकिरति नाशयतीह जीवन्नेव न मृतः सन्हे सोम्य प्रियदर्शन ॥ १० ॥

इति मुण्डकोपनिषद्दीपिकायां द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमत आह—आविरिति। आविराविर्भूतप्रकाशं संनिहितवागाद्युपाधिभिर्ज्वलति यतो गुहाचरं गुहायां चरति हृदि चरति दर्शनश्रवणादिप्रकारैः। महत्सर्वमहत्त्वात्। पदं पद्यते सर्वेणेति सर्वपदार्थास्पदत्वात्। कथं महत्पदमित्यत आह—अत्रैतदिति। अर्पितं संनिवेशितं रथनाभाविवाराः। एजज्ज्वलत्पक्ष्यादि। प्राणन्मनुष्यपश्वादि निमिषन्निमेषादिक्रियावत्। चकारादनिमिषच्च यत्तदत्रैव ब्रह्मणि समर्पितमेतदास्पदं सर्वस्य जानथ हे शिष्या अवगच्छत। सदसन्मूर्तामूर्तं स्थूलसूक्ष्मं तद्व्यतिरेकेण तयोरभावाद्यत्प्रजानां विज्ञानादैन्द्रियकज्ञानात्परं दूरे वर्तते पराञ्चि खानीति श्रुतेः। वरिष्ठमतिशयेनोरु ॥ १ ॥

यदर्चिमद्दीप्तिमत्। अर्चिशब्द इकारान्तः। अणुभ्योऽणु स्थूलधियामगम्यत्वात्। लोका भूरादयो लोकिनो मनुष्यादयः। स प्राण इत्यादि। अन्तश्चैतन्यो हि प्राणेन्द्रियसंघातः प्राणस्य प्राणमिति श्रुत्यन्तरात्। यत्प्राणादीनामन्तश्चैतन्यमक्षरं तत्सत्यमवितथं तद्वेद्धव्यं मनसा भावयितव्यमित्यर्थः। हे सोम्य सोमाद्यश्छन्दसि 'सोममर्हति यः' इति सूत्रेण। विद्धि विद्धं कुर्वक्षरे चेतः समाधत्स्व ॥ २ ॥

कथं वेद्धव्यमत आह—धनुरिति। औपनिषदमुपनिषत्सु भवं ज्ञानमुपासानिशितं संतताभिध्यानेन तनूकृतं बुद्धिलक्षणं संधयीत संधानं कुर्यात्। आयम्याऽऽकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्य लक्ष्य एवाऽऽवर्जितं कृत्वेत्यर्थः ॥ ३ ॥

यदुक्तं धनुरादि तदाह—प्रणव इति। धनुर्यथा शरस्य लक्ष्ये प्रवेशकारणं तथाऽऽत्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमभ्यस्यमान ओंकारः। अयं मन्त्रो ध्यानबिन्दौ चाऽऽम्नातः। आत्मा जलसूर्यकादिवदिह प्रविष्टो देहे सर्वबौ-

द्धप्रत्ययसाक्षी ब्रह्म पूर्वोक्तमक्षरमप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन ब्रह्म लक्ष्यं वेद्धव्यं वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति तथा देहाद्यात्मप्रत्ययतिरस्कारेणाक्षरैकात्मत्वं फलमापद्येदित्यर्थः । लक्ष्यं सर्वगतं चैवेत्यादि, ऋग्धनुर्यजुर्बाणेनेत्यादि च मन्त्रद्वयं क्वचिद्वाऽर्थपाठे दृश्यते न सर्वत्रेति न शिष्टैर्व्याख्यातम् ॥ ४ ॥

अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचनं सुलक्षणार्थमित्यभिप्रायेणाऽऽह—यस्मिन्निति । ओतं समर्पितं प्राणैर्वागादिभिः करणैर्जानथ जानीत हे शिष्या आत्मानं प्रत्यक्स्वरूपं ज्ञात्वाऽन्या वाचोऽपरविद्यारूपा विमुञ्चथ परित्यजत । यतोऽमृतस्यैष सेतुर्मोक्षस्य सेतुरिव सेतुः संसारमहोदधेरुत्तरणहेतुत्वात्तमेव विदित्वेतिश्रुत्यन्तरात् ॥ ५ ॥

संहताः संप्रविष्टाः । यत्र यस्मिन्हृदये नाड्यस्तत्रेति शेषः । स एष प्रकृत आत्मा चरते चरत्यन्तर्हृदयमध्ये जायमान इव जायमानोऽन्तःकरणोपाध्यनुविधायित्वात् । वदन्ति च लौकिका हृष्टो जातो मुग्धो जात इति । ओमित्येवमोंकारालम्बनाः सन्तो ध्यायथ चिन्तयत पाराय परकूलाय तमसः परस्तात् ॥ ६ ॥

संसारमहोदधिं तीर्त्वा यो गन्तव्यः परविद्याविषयः स कस्मिन्प्रतिष्ठित इत्यत आह—यः सर्वज्ञ इति । सर्वं विन्दति लभते सर्ववित्सामान्यविशेषभावेन वा वेदनम् । दिव्ये सर्वबुद्धिप्रत्ययद्योतके ब्रह्मपुरे ब्रह्मणश्चैतन्यस्य स्थाने हृदयपुण्डरीके व्योम्न्याकाशे पुण्डरीकमध्यस्थे प्रतिष्ठित उपलभ्यः । मनोमयो वृत्तिभिरेव विभाव्य इति । मनउपाधित्वात्प्राणशरीरनेता प्राणानां शरीरान्तरं प्रति प्रापकः । प्रतिष्ठितोऽन्ने प्रत्यहं भुज्यमानेऽन्नेन विना देहत्यागात् । हृदयं बुद्धिं पुण्डरीकच्छिद्रे संनिधाय समवस्थाप्य हृदयावस्थानेन ह्यात्मनः स्थितिरन्ने तदात्मतत्त्वं विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानवैराग्यसंस्कृतेन परि सर्वतः पूर्णं पश्यन्त्युपलभन्ते धीरा विवेकिनः ॥ ७ ॥

अस्य परमात्मज्ञानस्य फलमाह—भिद्यत इति । हृदयग्रन्थिरविद्यावासनाप्रचयो बुद्ध्याश्रयः "कामा येऽस्य हृदि स्थिताः" इति श्रुत्यन्तरात् । कर्माणि प्राक्तनान्यप्रवृत्तफलानि न त्वेतज्जन्मारम्भकारीणि प्रवृत्तफलत्वात् । परावरे परं च कारणात्मनाऽवरं च कार्यात्मना । तस्मिन्साक्षादहमस्मीति दृष्टे संसारकारणोच्छेदान्मुच्यत इत्यर्थः ॥ ८ ॥

उक्तस्यैवार्थस्य संक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि । हिरण्मये

ज्योतिर्मये बुद्धिविज्ञानप्रकाशे पर उत्कृष्टे परमात्मस्वरूपोपलब्धिस्थानत्वात्। कोशे कोशतुल्ये पुण्डरीके विरजमविद्यादोषरजोमलवर्जितं निष्कलं निरवयवमत एव शुभ्रं ज्योतिरग्न्यादीनामपि प्रकाशकमेवंविधं यत्तदात्मविदस्तादात्म्यप्रत्ययानुसारिणो नेतरे बाह्यप्रत्ययानुसारिणः। अत्र "न तत्र चन्द्रार्कवपुः प्रकाशते" इति क्षेपको मन्त्रस्तस्यार्थः। प्रकाशते भासकं भवति। न वान्ति वाता व्यापारं न कुर्वन्ति। देवता न यान्ति देवानामप्यगम्यम्॥ ९॥

यत्र स्वरूपे भूतिभावना यज्ञफलप्रदा तत्कथं ज्योतिषां ज्योतिरत आह—न तत्रेति। भाति प्रकाशयति। तस्य स्वतःप्रकाशनसामर्थ्याभावात्। यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि जगद्विभाति। यत एवं तदेव ब्रह्म भाति भासयति कार्यगतेन विविधेन भासाऽतस्तस्य ब्रह्मणो भारूपत्वमवगम्यते। नहि स्वतोऽविद्यमानभासनमन्यस्य कर्तुं शक्नोति। घटादीनामन्यावभासकत्वादर्शनात्। भासरूपाणां त्वादित्यादीनां तद्दर्शनात्॥ १०॥

प्रतिपादितमक्षरं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति—ब्रह्मैवेति। प्रसृतं प्रगतं नामरूपवदवभासमानमित्यर्थः। किं बहुना ब्रह्मैवेदं विश्वमिदं ब्रह्म वरिष्ठमूरुतमम्। अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययो ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम्॥ ११॥

इति मुण्डकोपनिषद्दीपिकायां द्वितीयमुण्डके द्वितीयः खण्डः॥ २॥

इति नारायणविरचितायां मुण्डकोपनिषद्दीपिकायां द्वितीयं मुण्डकं समाप्तम्॥ २॥

---

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते। यदधिगमे हृदयग्रन्थ्यादिसंसारकारणस्याऽऽत्यन्तिको विनाशः स्यात्। तद्दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्तः। अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थमुत्तरारम्भः। प्राधान्येन तत्त्वनिर्धारणं नात्यन्तदुःखग्राह्यत्वात्कृतमपि प्रकारान्तरेण क्रियते तत्र सूत्रभूतो मन्त्रः परोऽयमुपन्यस्यते—द्वा सुपर्णेति। औविभक्तेरात्वं छान्दसम्। द्वौ सुपर्णौ सहैव सर्वदा युक्तौ सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ तावेवंभूतौ समानमविशेषमुपलब्ध्यधिष्ठानतयैकं वृक्षमुच्छेदसामान्याच्छरीरम्। ओव्रश्चू छेदने। परिषस्वजाते परिष्वक्तवन्तौ सुपर्णाविवैकवृक्षं फलोपभोगार्थम्। तयोर्मध्येऽन्य एकोऽविद्याकामकर्मवासनाश्रयलिङ्गोपाधिरात्मा पिप्पलं कर्मफलं स्वादु प्रियमत्त्युपभुङ्क्तेऽविवेकतः।

नाश्नन्ननश्नन्नन्य ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावो यः सर्वज्ञः सर्वसत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण सन्नभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥

समाने तत्रैव वृक्षे पुरुषो भोक्ता जीवो निमग्नो निश्चयेन मग्नोऽलाबुरिव सामुद्रे जलेऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽनीशया दीनभावोऽनीशा तया शोचति संतप्यते मुह्यमानोऽनेकैरनर्थप्रकारैरविवेकितया चिन्तामापद्यमानः । जुष्टं सेवितमनेकैर्योगमार्गैः कर्मभिश्च यदा यस्मिन्काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमीशितारमस्य महिमानं जगद्रूपमस्यैव मम परस्यैव ममेश्वरस्येति यदैवं द्रष्टा तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विमुच्यते हृष्टो भवतीत्यर्थः ॥२॥

अन्योऽपि मन्त्रः सविस्तरमिममेवार्थमाह—यदेति । यदा यस्मिन्काले पश्यो विद्वान्साधकः पश्यते पश्यति रुक्मवर्णं स्वयंज्योतिःस्वभावं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ तं ब्रह्मणो वाऽपरस्य योनिं साम्यमद्वयलक्षणम् ॥ ३ ॥

सर्वभूतैः सर्वैर्भूतैर्ब्रह्मादिस्तम्बपर्यन्तैः । इत्थंभूतलक्षणे तृतीया । सर्वभूतप्रकारः सर्वात्मा सन्नित्यर्थः । विभाति विविधं दीप्यते । एवं भूतस्थं यः साक्षादात्मभावेनायमहमस्मीति विजानन्विद्वान्वाक्यार्थज्ञानमात्रेण भवते भवति । न भवतीत्येतत्किमतिवादी, अतीत्य सर्वानन्यान्वदितुं शीलमस्येत्यतिवादी यस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विजानन्सोऽतिवादी न भवतीत्यर्थः । सर्वं यदाऽऽत्मैव नान्यदस्तीति दृष्टं तदा किं पुनरसावतीत्य वदेद्यस्य त्वपरमन्यद्दृष्टमस्ति स तदतीत्य वदति । अयं तु विद्वानात्मनोऽन्यन्न पश्यति नान्यच्छृणोति नान्यद्विजानात्यतो नातीत्य वदति । किंच । आत्मक्रीडो न पुत्रकलत्रादिषु क्रीडति । आत्मरतिरात्मप्रीतिः । क्रीडा बाह्यसाधनसापेक्षा रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः । क्रियावाञ्ज्ञानध्यानवैराग्यादिक्रियायुक्तः । समासान्तपाठे आत्मरतिरेव क्रीडा तद्युक्तः । एष संन्यासी ब्रह्मविदामध्यात्मनिष्ठानां वरिष्ठो गरिष्ठः श्रेष्ठः ॥ ४ ॥

इदानीं सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि विदधाति—सत्येनेति । मृषावदनत्यागेन तपसा "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मृतिः । तेन तपसा तदेवाऽऽत्मदर्शनानुकूलं न चान्द्रायणादि । सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन । नित्यमिति सर्वत्र संबध्यते । क्रासा-

वात्मा य एतैः साधनैर्लभ्यतेऽत आह—अन्तःशरीर इति । शरीरमध्ये हृदयाकाश इत्यर्थः । ज्योतिर्मयो रुक्मवर्णः । शुभ्रः शुद्धः । क्षीणदोषा रागद्वेषमोहरहिताः ॥ ५ ॥

सत्याख्यसाधनस्य स्तुतिमाह—सत्यमेवेति । सत्यवाञ्जयति नानृतं नानृतवादीत्यर्थः । सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः । येन यथाभूतसत्यवर्तित्वेनाऽऽक्रमन्त्याक्रमन्त ऋषयो दर्शनवन्त आप्तकामा विगततृष्णा यत्र यस्मिन्सत्यवर्तित्वे तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य संबन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयत इति निधानं वर्तते । तत्र च येन पथा क्रमन्ति सत्येन वितत इति पूर्वेण संबन्धः ॥ ६ ॥

किं तद्ब्रह्म किंधर्मकं चेत्यत आह—बृहच्चेति । विविधमादित्यचन्द्राद्याकारेण भाति दीप्यते दूरात्सुदूरेऽविदुषामगम्यत्वात् । अन्तिके समीपे विदुषामात्मत्वात् । सर्वान्तरत्वाच्च । पश्यत्सु चेतनावत्स्विहैव न दूरे निहितं स्थितं गुहायां बुद्धिलक्षणायाम् ॥ ७ ॥

देवैरिन्द्रियैः । असाधारणमुपलब्धिसाधनमाह—ज्ञानेति । आत्मावबोधेन विशुद्धसत्त्वो निर्मलान्तःकरणस्ततस्तस्मात्सत्त्वान्निष्कलमवयवभेदरहितं ध्यायमानश्चिन्तयन् ॥ ८ ॥

क्वासौ चेतसा वेद्योऽत आह—यस्मिन्निति । यस्मिञ्शरीरे हृत्पद्मे प्राणो वायुः पञ्चधा व्यानादिभेदेन । कीदृशेन चेतसा वेदितव्य इत्यत आह—प्राणैरिति । प्राणैः सहेन्द्रियैश्चित्तं सर्वमन्तःकरणं प्रजानामोतं व्याप्तं क्षीरमिव स्नेहेन काष्ठमिवाग्निना । सर्वं हि प्रजानामन्तःकरणं चेतनावत्प्रसिद्धं लोके । यस्मिंश्चित्ते विशुद्धे शोकादिमलविमुक्ते विभवति विशेषेण स्वेनाऽऽत्मना भवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥

य एवं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमित्याह—यं यमिति । लोकं पित्रादिलक्षणं संविभाति संकल्पयति । जयते प्राप्नोति । स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्त इत्यादिश्रुत्यन्तरात् । अर्चयेत्पादप्रक्षालनशुश्रूषणनमस्कारादिभिः ॥ १० ॥

इति मुण्डकोपनिषद्दीपिकायां तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

सोऽर्चको वेद जानाति यथोक्तलक्षणं ब्रह्म धाम सर्वकामानामास्पदं निहितमर्पितम् । यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धं पुरुषमात्मज्ञं

परमिव देवमकामा विभूतितृष्णारहिताः सन्तः शुक्रं बीजं शरीरोपादानकारणमतिवर्तन्त्यतिगच्छन्ति धीरा धीमन्तः। अपुनर्भवमिच्छंस्तं पूजयेदिति भावः ॥ १ ॥

कामत्याग एव प्रधानं साधनमिति दर्शयति—कामान्य इति। मन्यमानस्तत्तद्गुणाश्चिन्तयमानः कर्मभिः काम्यकर्मभिस्तत्र तत्र स्वर्गनरकादौ पर्याप्तकामस्याकामत्वेन परि समन्तत आप्ताः कामा येन तस्य कृतात्मनो विद्यया परेण रूपेण कृत आत्मा यस्येहैव तिष्ठत्येव शरीरे कामा जन्महेतवः प्रविलीयन्ति नश्यन्ति ॥ २ ॥

यद्येवं सर्वलाभात्परम आत्मलाभस्तर्हि तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्त इदमुच्यते—नायमिति। प्रवचनेन वेदशास्त्राध्ययनबाहुल्येन मेधया ग्रन्थार्थधारणशक्त्या बहुना श्रुतेन भूयसा तात्पर्यावधारणेन। केन तर्हि लभ्यत इत्यत आह—यमेवेति। यं साधकमेवाऽऽत्मा वृणुते वरं ददाति कृपयति तेन लभ्यः "यं साधु निनीषति तं साधु कारयति यमसाधु निनीषति तमसाधु कारयति" इति श्रुत्यन्तरात्। कं वृणुत इति चेत्तत्र तन्त्रेणेदमेवोत्तरम्। यं प्रसिद्धमात्मानमेष साधको वृणुते भजति। वृङ् संभक्तौ संभक्तिः सेवा। तेन लभ्यः "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति स्मृतेः। तस्मादन्यत्यागेनाऽऽत्मलाभप्रार्थनैवैकाग्रतयाऽऽत्मलाभसाधनमित्यर्थः। विवृणुते प्रकाशयत्यविद्यावच्छिन्नां स्वां तनुम् ॥ ३ ॥

आत्मप्रार्थनासहायभूतानि च साधनानि बलाप्रमादतपांसि लिङ्गयुक्तानि संन्याससहितानीत्याह—नायमात्मा बलहीनेनेति। बलहीनेनाऽऽत्मनिष्ठाजनितवीर्यहीनेन प्रमादात्पुत्रपश्वाद्यासङ्गादलिङ्गात्संन्यासरहितात्तपसो ज्ञानात्। एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्विद्वान्विवेक्यात्मवित्तस्य विदुष एष आत्मा जीवो ब्रह्माख्यं धाम विशते प्रविशति ॥ ४ ॥

कथं ब्रह्म प्रविशतीत्याशङ्क्यैतिह्येनोत्तरयति—संप्राप्येति। कृतात्मानः परमात्मरूपेणैव निष्पन्नात्मानः सन्तः। सर्वगं सर्वव्यापि सर्वतः सर्वत्र प्राप्य नोपाधिपरिच्छिन्नेनैकदेशेन युक्तात्मानो नित्यं समाहितस्वभावाः सर्वमेव समस्तं शरीरपातकाल आविशन्ति भिन्नघटाद्याकाशवदविद्याकृतोपाधिपरिच्छेदं जहति ॥ ५ ॥

ब्रह्मैव लोको ब्रह्मलोकः। एकोऽप्यनेकवद्दृश्यत इति बहुवचनम्। तेषु परान्तकालः संसारावसाने देहपरित्यागकालस्तस्मिन्काले परामृताः परममृतं ब्रह्माऽऽत्मभूतं येषां ते जीवन्मुक्ताः सन्तः परि समन्तात्प्रदीप-

निर्वाणवद्घटाकाशवच्च मुच्यन्ति ब्रह्मणि निवृत्तिमुपयान्ति न देशान्तरे गमनमपेक्षन्ते।

"शकुनीनामिवाऽऽकाशे जले वारिचरस्य वा।
पदं यथा न दृश्येत तथा ज्ञानवतां गतिः" ॥ ६ ॥

किंच मोक्षकाले या देहारम्भिकाः कलाः प्राणाद्यास्ताः प्रतिष्ठाः स्वानि कारणानि गता भवन्ति। पञ्चदश पञ्चदशसंख्याकाः प्रश्नोपनिषदि षष्ठप्रश्नोक्तास्ता यथा—

"कलाः षोडश भूतानि प्राणोऽक्षं जन्म कर्म च।
श्रद्धा यज्ञास्तपो मन्त्रा मनोमात्रं शरीरकम्" इति ॥

षोडशं शरीरं तु पतितं तिष्ठति। देवाश्चक्षुरादिकरणाद्यधिष्ठातारः प्रतिदेवतास्वादित्यादिषु गता भवन्ति। कर्माण्यप्रवृत्तफलानि विज्ञानमयश्चाऽऽत्माऽविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्त्वा जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वादतो विज्ञानमयो विज्ञानप्राय आत्मा तिष्ठत उपाध्यपनये सति सर्वे परेऽव्यये ब्रह्मण्येकी भवन्त्यविशेषत्वमापद्यन्ते जलाद्याधारापनय इव सूर्यादिप्रतिबिम्बाः सूर्यादौ। घटाद्यपनय इवाऽऽकाशो महाकाशे ॥ ७ ॥

दृष्टान्तान्तरमाह—यथेति। अस्तमदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति परादक्षरात्पूर्वोक्तात्परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वा देवादिना विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छेन्न ब्रह्मैवेति चेन्न। विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वादविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्धो नित्यत्वादात्मभूतत्वाच्चेत्यभिप्रेत्याऽऽह—स य इति। वेद साक्षादहममस्मीति विजानाति यः स ब्रह्मैव भवति। नान्यां गतिं गच्छति देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुमात्मा ह्येषां स भवति तस्माद्विद्वान्ब्रह्मैव भवति। फलान्तरमाह—नास्येति। फलान्तरं तरतीति, तरति जीवन्नेवातिक्रान्तो भवति गुहाग्रन्थिभ्यो हृदयाविद्याग्रन्थिभ्यः ॥ ९ ॥

अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते—तदेतदिति। ऋचा मन्त्रान्तरेणाभ्युक्तमभिप्रकाशितं क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ता ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकऋषिनामानमग्निं जुह्वते जुह्वति। श्रद्धयन्तः श्रद्धां कुर्वन्तः

सन्तस्तेषामेव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणं प्रसिद्धं व्रतम् ॥ १० ॥

तदेतदक्षरं सत्यं पुरा पूर्वमुवाच शौनकाय विधिवदुपसन्नाय पृष्टवते निगदितवान् । अन्योऽपि तथैवोपसन्नाय ब्रूयादित्यर्थः । एतद्ग्रन्थरूपमचीर्णव्रतोऽव्रती नाधीते न पठति । चीर्णव्रतस्य हि संस्कृता फलाय विद्या भवतीति । समाप्ता ब्रह्मविद्या । सा येभ्यो ब्रह्मादिभ्यः पारम्पर्यक्रमेण संप्राप्ता तेभ्यो नमः परमर्षिभ्यः परमं ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः । द्विरुक्तिरत्यन्तादरार्था । शिरस्यग्निधारणव्रतादस्य ग्रन्थस्य मुण्डकोपाख्या प्रसिद्धा ॥ ११ ॥

इति मुण्डकोपनिषद्दीपिकायां तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

इति तृतीयमुण्डकं समाप्तम् ॥ ३ ॥

नारायणेन रचिता शंकरोक्त्युपजीविना ॥
अस्पष्टपदवाक्यानां दीपिका मुण्डके शुभा ॥ १ ॥

इति श्रीनारायणविरचिताऽथर्ववेदीयमुण्कोपनिषद्दीपिका समाप्ता ॥



# अथास्या मुण्डकोपनिषदः खण्डान्तर्गतमन्त्रप्रतीकानां वर्णानुक्रमणिका ।

समाप्तिमगमदियं वर्णानुक्रमणिका ।

---

२८

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०

# सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषत्

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

शंकरानन्दभगवत्कृता माण्डूक्योपनिषद्दीपिका च ।

एतत्पुस्तकद्वयम्

ब्याचेलर् ऑफ् आर्ट्स् इत्युपपदधारिभिः अहमदाबाद-
कालेजस्थसंस्कृतभाषाध्यापकैः
'काथवटे' इत्युपाह्वैः विष्णुतनुजैः आबाजीशर्मभिः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८३३
खिस्ताब्दाः १९११



मूल्यं रूपकद्वयं पञ्चाऽऽणकाश्च ( २।५ ) ।

# आदर्शपुस्तकोल्लेखपत्रिका।

अथास्याः " सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषदः " पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते।

( क. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च, कलिकातानगरस्थमुद्रणालये मुद्रितं, कैलासवासिनां " देव " इत्युपाह्वानां पुण्यपत्तननिवासिनां वे. शा. रा. रा. बालशास्त्रिणाम्।

( ख. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च, करवीरपुरनिवासिनां वे. शा. रा. रा. श्रीमतां गुरुमहाराजानाम्। पत्राणां संख्या १३२। एकपत्रस्थपङ्क्तिसंख्या २८। एकपङ्क्तिस्थानामक्षराणां संख्या ४९। लेखनकालस्तु शतसंवत्सरमित इत्यनुमीयते।

( ग. ) इति संज्ञिता—केवला टीका. करवीरपुरनिवासिनां वे. शा. रा. रा. " नानाशास्त्री द्रविड " इत्येतेषाम्। पत्राणि ३१। पङ्क्तयः ४०। अक्षराणि ७६। लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते।

( घ. ) इतिं संज्ञितम्—मूलं सभाष्यं टीकोपेतं च, वटोदरनिवासिनां श्री. रा. रा. " कृष्णराव भीमाशंकर " इत्येतेषाम्। पत्राणि १४१। पङ्क्तयः २६। अक्षराणि ५०। लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते।

( ङ. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च, श्री. रा. रा. " महादेव चिमणाजी आपटे " इत्येतेषाम्। काश्यां मुद्रणालये मुद्रितम्। मुद्रणकालः संवत् १९४२।

( च. ) इति संज्ञितम्—मूलं सभाष्यम्, इन्दूरपुरनिवासिनां श्री. रा. रा. " भाऊसाहेब बाळासाहेब " इत्येतेषाम्। पत्राणि ६१। पङ्क्तयः २३। अक्षराणि ४५। लेखनकालः १७७२।

( छ. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च। मोहमयीराजधानीनिवासिनां श्री. वे. शा. सं. रा. रा. " जयकृष्णम

हाराज " इत्येतेषाम् । पत्राणि ४९ । पङ्क्तयः । ४८ । अक्षराणि ७७ । लेखनकालः संवत् । १९१५ ।

( ज. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च, अष्टेग्रामनिवासिनां " लिमये " इत्युपाह्वानां रा. रा. गोविन्दशर्मणाम् । पत्राणि ७१ । पङ्क्तयः ४६ । अक्षराणि ७१ । लेखनकालः शके १७४६ ।

( झ. ) इति संज्ञितम्—केवलभाष्यं टीकोपेतं, श्री. रा. रा. " रावसाहेब अण्णासाहेब विंचूरकर " इत्येतेषाम् । पत्राणि १८१ । पङ्क्तयः २४ । अक्षराणि ३५ । लेखनकालः शके १६३२ ।

( ञ. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च । इन्दूरपुरनिवासिनां " किबे " इत्युपाह्वानां श्री. रा. रा. " भाऊसाहेब बाळासाहेब " इत्येतेषाम् । पत्राणि ५७। पङ्क्तयः ५० । अक्षराणि ६७ । लेखनकालः शके १७७३ ।

( ट. ) इति संज्ञितम्—मूलं सभाष्यं टीकोपेतं च । मोहमयीराजधानीनिवासिनां " साठे " इत्युपाह्वानां रा. रा. " गोपालराव " इत्येतेषाम् । पत्राणि १४२ । पङ्क्तयः ३१ । अक्षराणि ४८ । लेखनकालः शके १७११ ।

( ठ. ) इति संज्ञितम्—केवलं मूलम् । करवीरपुरनिवासिनां वे. शा. सं. रा. रा. श्रीमतां गुरुमहाराजानाम् । पत्राणि १४। पङ्क्तयः २३ । अक्षराणि २५ । लेखनकालः सार्धशतसंवत्सरमित इत्यनुमीयते ।

( ड. ) इति संज्ञितम्—केवलं मूलं करवीरपुरनिवासिनां वे. शा. सं. रा. रा. श्रीमतां गुरुमहाराजानाम् । पत्राणि १२ । पङ्क्तयः २२ । अक्षराणि ३८ । लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते ।

( क. ) इति संज्ञिता—माण्डूक्योपनिषद्दीपिका, मोहमयीराजधानीनिवासिनां श्री. वे. शा. रा. रा. " जयकृष्णमहा-

राज" इत्येतेषाम्। पत्राणि ५। पङ्क्तयः २४। अक्षराणि ३२। लेखनकालः संवत् १९०२।

(ख.) इति संज्ञिता—माण्डूक्योपनिषद्दीपिका, वटोदरनिवासिनां "पटवर्धन" इत्युपाह्वानां श्री. रा. रा. "कृष्णराव भीमाशंकर" इत्येतेषाम्। पत्राणि ६। पङ्क्तयः १८। अक्षराणि ३८। लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते।

(ग.) इति संज्ञिता—माण्डूक्योपनिषद्दीपिका, वटोदरनिवासिनां "पटवर्धन" इत्युपाह्वानां श्री. रा. रा. "कृष्णराव भीमाशंकर" इत्येतेषाम्। पत्राणि ६। पङ्क्तयः १८। अक्षराणि ३७। अस्या अपि लेखनकालः शतसंवत्सरमित इत्येवमेवानुमीयते।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका।



ॐ तत्सद्ब्रह्मणे नमः ।

गौडपादीयकारिकासहिता

# अथर्ववेदीयमाण्डूक्योपनिषत् ।

---

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

---

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
भद्रं नो अपि वातय मनः ॥
ॐ शान्तिः शान्तिः शान्तिः ।

---

इति शान्तिः ।

---

( अथ श्रीमच्छंकरभगवत्पादविरचितं भाष्यम् । )

प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान्
भुक्त्वा भोगान्स्थविष्ठान्पुनरपि धिषणोद्भासितान्कामजन्यान् ॥
पीत्वा सर्वान्विशेषान्स्वपिति मधुरभुङ्मायया भोजयन्नो
मायासंख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥

( अथाऽऽनन्दगिरिकृता टीका । )

परिपूर्णपरिज्ञानपरितृप्तिमते सते ।
विष्णवे जिष्णवे तस्मै कृष्णनाम्नेभृते नमः ॥ १ ॥
शुद्धानन्दपदाम्भोजद्वंद्वमद्वंद्वतास्पदम् ।
नमस्कुर्वे पुरस्कर्तुं तत्त्वज्ञानमहोदयम् ॥ २ ॥
गौडपादीयभाष्यं हि प्रसन्नमिव लक्ष्यते ।
तदर्थतोऽतिगम्भीरं व्याकरिष्ये स्वशक्तितः ॥ ३ ॥

---

१ च. ॰या मोहय॰ । २ ग. घ. ज. झ. ट. ॰मवते । ३ झ. ॰द्वंद्वं मद्वन्दनास्प॰ ।

पूर्वै यद्यपि विद्वांसो व्याख्यानमिह चक्रिरे ।
तथाऽपि मन्दबुद्धीनामुपकाराय यत्यते ॥ ४ ॥

श्रीगौडपादाचार्यस्य नारायणप्रसादतः प्रतिपन्नान्माण्डूक्योपनिषदर्थाविष्करणपरानपि श्लोकानाचार्यप्रणीतान्व्याचिख्यासुर्भगवान्भाष्यकारश्चिकीर्षितस्य भाष्यस्याविघ्नपरिसमाप्त्यादिसिद्धये परदेवतातत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं[3] मङ्गलाचरणं शिष्टाचारप्रमाणकं मुखतः समाचरन्नर्थादपेक्षितमभिधेयाद्यनुबन्धमपि सूचयति—**प्रज्ञानेत्यादिना**। तत्र विधिमुखेन वस्तुप्रतिपादनमिति प्रक्रियां प्रदर्शयति—**ब्रह्म यत्तन्नतोऽस्मीति**। अस्मदर्थस्य तदैक्यस्मरणरूपं नमनं सूचयता ब्रह्मणस्तदर्थस्य प्रत्यक्त्वं सूचितमिति तत्त्वमर्थयोरैक्यं विषयो ध्वनितः। यच्छब्दस्य प्रसिद्धार्थावद्योतकत्वाद्वेदान्तप्रसिद्धं यद्ब्रह्म तन्नतोऽस्मीति संबन्धेन मङ्गलाचरणमपि श्रुत्या क्रियते। ब्रह्मणोऽद्वितीयत्वादेव जननमरणकारणाभावादमृतमजमित्युक्तम्। जननमरणप्रबन्धस्य संसारत्वात्तन्निषेधेन स्वतोऽसंसारित्वं दर्शयता संसारानर्थनिवृत्तिरिह प्रयोजनमिति द्योतितम्। यद्यद्वितीयं स्वतोऽसंसारि ब्रह्म वेदान्तप्रमाणकं तर्हि कथमवस्थात्रयविशिष्टा जीवा भोक्तारोऽनुभूयन्ते भोजयिता चेश्वरः श्रूयते भोज्यं च विषयजातं पृथगुपलभ्यते। तदेतदद्वैते विरुध्येतेत्याशङ्क्य ब्रह्मण्येव जीवा जगदीश्वरश्चेति सर्वं काल्पनिकं संभवतीत्यभिप्रेत्याऽऽह—**प्रज्ञानेति**। प्रकृष्टं जन्मादिविक्रियाविरहितं कूटस्थं ज्ञानं ज्ञप्तिरूपं वस्तु प्रज्ञानम्। तच्च ब्रह्म। प्रज्ञानं ब्रह्मेति[12] हि श्रूयते। तस्यांशवो रश्मयो जीवाश्चिदाभासाः सूर्यप्रतिबिम्बकल्पा[13] निरूप्यमाणा[14] बिम्बकल्पाद्ब्रह्मणो भेदेनासन्तस्तेषां प्रताना विस्तारास्तैरपर्यायमेवाशेषशरीरव्यापिभिः[16]। तदेवाऽऽह—**स्थिरेति**। स्थिरा वृक्षादयः। चरा मनुष्यादयः। तेषां निकरः समूहस्तं व्याप्तुं शीलमेषामिति तथा तैरिति यावत्। लोका लोक्यमाना विषयास्तान्व्याप्येति विषयसंबन्धोक्तिस्तत्फलं कथयति। भोगाः सुखदुःखादिसाक्षात्कारास्तेषां स्थविष्ठत्वं स्थूलतमत्वं देवतानुगृहीतबाह्येन्द्रियद्वारा बुद्धेस्तत्तद्विषयाकारपरिणामजन्यत्वं तान्भुक्त्वा स्वपितीति संबन्धः। एतेन जागरितं ब्रह्मणि कल्पितमुक्तम्। तत्रैव स्वप्नकल्पनां दर्शयति—**पुनरपीति**। जाग्रद्धेतुधर्माधर्मक्षयानन्तर्यं पुनः-

---

१ ज. °वत° । २ ग. झ. °रपूर्वकं म° । छ. °रलक्षणं म° । ३ घ. °रूपम° । ४ घ. ज. ट. °यां द° । ५ ग. ङ. छ ज. झ. ट. °द्वात्° । ६ ग. ङ. ज. झ. °न्तसि° । ७ ग. °पि श्रूयते । ख. छ. ज. °पिशब्देन क्रि° । ८ ग. झ. °णविकाराणामभा° । ९ ग. झ. °णसंब° । ज. °णप्रतिब° । १० घ. तदद्वै° । ११ ग. °यार° । १२ क. °ति श्रुतेः । त° । ङ. °ति श्रू° । १३ घ. °कल्पनि° । १४ घ. ज. ट. °माणे वि° । झ. °माना । १५ झ. °यत्वेनैवा° । १६ झ. °मेव स्थावराद्यशे° । १७ ङ. छ. °मानवि ।

शब्दार्थः । स्वप्नहेतुकर्मोद्भवे च सतीत्यपिनोच्यते । न च तत्र बाह्यानीन्द्रियाणि स्थूला विषयाश्च सन्ति किं तु धिषणाशब्दितबुद्ध्यात्मानो वासनात्मानो विषया भासन्तेताननुभूय स्वपितीत्यर्थः । तेषां प्रापकमुपन्यस्यति—**कामजन्यानिति** । कामग्रहणं कर्माविद्ययोरुपलक्षणार्थम् । अवस्थाद्वयकल्पनां ब्रह्मणि दर्शयित्वा तत्रैव सुषुप्तिकल्पनां दर्शयति—**पीत्वेति** । सर्वे विशेषाः सर्वे विषयाः स्थूलाः सूक्ष्माश्च जागरितस्वप्नरूपास्तान्पीत्वा स्वात्मन्यज्ञाते प्रविलाप्य स्वपिति कारणभावेन तिष्ठतीत्यर्थः । तत्राऽऽनन्दप्राधान्यमभिप्रेत्य विशिनष्टि—**मधुरभुगिति** । अवस्थात्रयस्य मायाकृतस्य मिथ्याभूतस्य प्रतिबिम्बकल्पेष्वस्मासु संबन्धितामिवाऽऽपाद्यास्मान्भोजयद्ब्रह्म वर्तते । अतो ब्रह्मण्येवावस्थात्रयम् । तद्वन्तो जीवा मायापि ब्रह्म च ब्रह्मणि परिशुद्धे परिकल्पितं सर्वमित्याह—**माययेति** । तस्यैव ब्रह्मणोऽवस्थात्रयातीतत्वेन विज्ञप्तिमात्रत्वं दर्शयति—**तुरीयमिति** । चतुर्णां पूरणं तुरीयमिति व्युत्पत्तेर्ब्रह्मणस्तुरीयत्वेन निर्देशात्प्राप्तं सद्वितीयत्वमित्याशङ्क्य कल्पितस्थानत्रयसंख्यापेक्षया तुरीयत्वं न सद्वितीयत्वेनेत्याह—**मायेति** । मायावित्वेन निकृष्टत्वमाशङ्क्योक्तम्—**परमिति** । मायाद्वारा ब्रह्मणस्तत्संबन्धेऽपि स्वरूपद्वारा न तत्संबन्धोऽस्तीति कुतो निकृष्टतेत्यर्थः ॥ १ ॥

> **यो विश्वात्मा विधिजविषयान्प्राश्य[10] भोगान्स्थविष्ठा-**
> **न्पश्चाच्चान्यान्स्वमतिविभवाज्ज्योतिषा स्वेन सूक्ष्मान् ।**
> **सर्वानेतान्पुनरपि शनैः स्वात्मनि स्थापयित्वा**
> **हित्वा सर्वान्विशेषान्विगतगुणगणः पात्वसौ नस्तुरीयः ॥ २ ॥**

विधिमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य तदर्थेनोपक्रम्य तस्य त्वमर्थप्रत्यगात्ममात्रत्वमुक्तम् । अभिधेयफलोक्त्या संबन्धाधिकारिणौ[12] च सूचितौ । संप्रति[13] निषेधद्वारा वस्तुप्रतिपादनप्रक्रियामाश्रित्य त्वमर्थेनोपक्रम्य तस्य तदर्थासंसारिब्रह्ममात्रत्वं प्रत्याययति—**यो विश्वात्मेति** । तत्र त्वमर्थः स्वतः सिद्धश्चिद्धातुः सर्वनाम्ना परामृश्यते । तस्मिञ्जागरितमारोपितं[14] तमुदाहरति—**विश्वात्मेति** । विश्वं पञ्चीकृतपञ्चमहाभूत[15]तत्कार्यात्मकं स्थूलं जगद्वैराजं शरीरम् । तस्मिञ्जागरिते चाहं ममेत्यभिमानवा[16]नित्यर्थः । तस्यार्थ[17]क्रियामुपन्यस्यति—**विधिजेति** । विधीयत इति विधिर्धर्मो नञा[18]ऽनुबन्धेन ततो व्यतिरिक्तोऽविधिरधर्म-

---

१ छ. स्थूलवि° । २ ख. छ. झ. °ध्यात्मना वा° । ३ छ. झ. °नात्मनो । ४ झ. °न्यसति । ५ ख. ग. घ. ङ. ज. झ. °षाः स्थू° । ६ घ. झ. °ज्ञानं प्र° । ७ ग. छ. झ. च प° । ८ ङ. °ल्पितत्र-वस्थात्र° । ९ च. ट. विविधवि° । १० च. °न्प्राप्य भो° । ११ छ. °नामिति प्र° । १२ ज झ. °णौ सू° । १३ ग. घ. ङ. ज. झ. °ति प्रतिषे° । १४ घ. ज. °पितमु° । १५ झ. भूतं त° । १६ छ. °मानीत्य° । १७ ग. झ. °र्थप्रक्रि° । १८ ग. ङ. ज. झ. नञनु° ।

स्ताभ्यां धर्माधर्माभ्यामविद्याकामप्र[1]सूताभ्यां विषयाः शब्दादयो जन्यन्ते। तान्[2]भोगयोग्यतया भोगशब्दितानादित्याद्यनुगृहीतबाह्येन्द्रियद्वारकबुद्धिपरिणामगोचरतया स्थूलतमान्प्राश्य साक्षादनुभूय स्थि[3]तोऽयं प्रत्यगात्मेत्यर्थः। तत्रैव[4] स्वप्नाव[5]स्थामध्यस्यति—**पश्चाच्चेति।** जाग्रद्धेतुकर्मक्षयानन्तरं स्वप्नहेतुकर्मोद्भवे च सति स्थूलेभ्यो विषयेभ्योऽन्यानस्मादेव हेतोः सूक्ष्मान्बाह्येन्द्रियाणामुपरतत्वादविद्याकामकर्मप्रेरितात्मीयमतिप्रभावादेव प्रसूतानन्तःकरणा[6]त्मनो वासनामयानादित्यादिज्योतिषामस्तमितत्वादात्मभूतेनैव ज्योतिषा विषयीकृताननुभूयापञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सू[7]क्ष्मप्रपञ्चं हैरण्यगर्भ[8] शरीरं स्वप्नस्थानं चाभिमन्यमानस्तैजसो भवतीत्यर्थः। तत्रैव सुषु[9]प्तकल्पनां दर्शयति—**सर्वानिति।** स्थूलसूक्ष्मविभागेन स्थानद्वयावच्छिन्नान्प्रकृतानेतानशेषा[10]नपि विशेषानुपाधिद्वय[11]भूतानुपाधिद्वयद्वारकस्थानद्वयसंचारप्रयुक्तश्रमोद्भवानन्तरं तस्यापि परिजिही[12]र्षयां शनैरनुक्रमेणाक्रमेण वा स्वात्मन्यज्ञा[13]ते कारणात्मनि स्थापयित्वोपसंहृत्याव्याकृतप्रधानः सन्प्राज्ञो भवतीत्यर्थः। तस्यैव प्रत्यगात्मनः स्थानत्रयविशिष्टस्य नान्तःप्रज्ञं न बहिष्प्रज्ञमित्यादिप्रतिषेधशास्त्रप्रसूतप्रमाणज्ञानसमारूढस्य सर्वान[14]र्थविशेषान्कार्यकारणरूपान्प्रमाणज्ञानप्र[15]भावादेव हित्वा निरुपाधिकपरिपूर्णपरिज्ञानपरमात्मस्वरूपेण परिनिष्प[16]न्नं तत्त्वं कथयति-**हित्वेति**[17]। प्रथमश्लोकेन प्रदर्शितप्रणामस्य प्रत्यूहप्रवाहप्रशमनात्मकं प्रयोजनं स्थानत्रयप्रकल्पनातीतपरवस्तुप्रयुक्तं प्रार्थयते द्वितीयेन—**पात्विति।** नोऽस्मान्व्याख्यातृत्वेन श्रोतृत्वेन च व्यवस्थितान्पुरुषार्थपरिपन्थि[18]कृत्कारणीनरासपुरःसरं परमात्मा पराकृताशेषकल्पनो नित्य[19]विज्ञप्तिस्वभावो मोक्षप्रदानेन तद्धेतुज्ञानप्रदानेन च परिरक्षतादित्यर्थः। केचित्तु प्रकरणचतुष्टयात्मनो ग्रन्थस्य वेदान्तैकदेशसंब[20]द्धत्वज्ञापनार्थं निष्प्रप[21]ञ्चं वाक्यप्रतिपाद्यं ब्रह्म प्रथमश्लोकेन सूचितम्। द्वितीयेन[22] माण्डूक्यश्रुतिव्याख्यानरूपेणाऽऽद्यप्रकरणेन प्रणवमात्राणामात्मपादानां चैकीकरणेन प्रतिपाद्यं ब्रह्म सूचितमिति मन्यन्ते। न च द्वितीयश्लोके चतुर्थपादे वृत्तलक्षणाभावादसाङ्गत्यमाशङ्कनीयम्। गाथालक्षणस्य तत्र सुसंपादत्वादिति द्रष्टव्यम्। अन्ये त्वाद्यश्लोकं मूलश्लोकान्तर्भूत[23]मभ्युपगच्छन्तो द्वितीयश्लोकं

---

१ ज. °प्रभूता°। झ. °प्रस्तुता°। २ ख. °न्भोगान्भोग°। ३ ग. झ. °तो यः प्र°। ४ छ. °व च स्व°। ५ ग. झ. °स्थामुपन्यस्य°। ६ ग. झ. °त्मना वा°। ७ क. ख. ङ. सूक्ष्मं प्र°। ८ ङ. ज. °गर्भंश°। ९ छ. °षुप्तिक° १० छ. °षान्विशे°। ११ क. छ. °यद्वा°। १२ ग. घ. °हीर्षया श°। १३ ग. झ. °ज्ञाने का°। १४ ग. घ. ज. °प्यर्थं°। १५ ज. प्रभवा°। १६ ग. छ. झ. °ष्पन्नत्वं क°। १७ क. झ. °ती तं प°। १८ ख. ग. °न्थिभूतकार°। १९ ज. °त्यचिज्ञ°। २० ग. घ. झ. °बन्धत्व°। ज. °बन्धत्वं ज्ञानार्थं। २१ ज. °पञ्चवा°। २२ ख. ग. झ. °न तु मा°। २३ ज. °तमुप°।

भाष्यकारप्रणीतमभ्युपयन्ति । तदसत् । उत्तरश्लोकेष्विवाऽऽद्येऽपि श्लोके भाष्यकृतो व्याख्यानप्रणयनप्रसङ्गात् । ओमित्येतदक्षरमित्यादिभाष्यविरोधाच्च । अपरे पुनराद्येन श्लोकेन शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणद्वारेण नमनक्रिया प्रकरणप्रारम्भोपयोगित्वेन क्रियते । परदेवताभक्तिवदपरदेवताभक्तेरपि विद्याप्राप्तावन्तरङ्गत्वस्य शास्त्रीयस्य शिष्यशिक्षायै ज्ञापनार्थमवस्थात्रयातीतान्नित्यसिद्धविज्ञानमूर्तेराचार्यान्मोक्षौपयिकज्ञानप्राप्तिराचार्यवान्पुरुषो वेदेत्यादिश्रुत्यवष्टम्भेन मुमुक्षुणा प्रार्थ्यते द्वितीयश्लोकेनेति कल्पयन्ति ॥ २ ॥

**ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम् । वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते । अत एव न पृथक्संबन्धाभिधेयप्रयोजनानि वक्तव्यानि । यान्येव तु वेदान्ते संबन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति । तथाऽपि प्रकरणव्याचिख्यासुना संक्षेपतो वक्तव्यानि ।**

यदुद्दिश्य मङ्गलाचरणं कृतं तन्निर्देष्टुमादौ व्याख्येयस्य प्रतीकं गृह्णाति—**ओमित्येतदिति** । ओमित्येतदक्षरमित्यादिप्रकरणचतुष्टयविशिष्टमिदमारभ्यते व्याख्यायतेऽस्माभिरित्युद्देश्यं प्रतिजानीते । किमिदं शास्त्रत्वेन वा प्रकरणत्वेन वा व्याचिख्यासितम् । नाऽऽद्यः । शास्त्रलक्षणाभावादस्याशास्त्रत्वात् । एकप्रयोजनोपनिबद्धमशेषार्थप्रतिपादकं हि शास्त्रम् । अत्र च मोक्षलक्षणैकप्रयोजनवत्त्वेऽपि नाशेषार्थप्रतिपादकत्वम् । न द्वितीयः । प्रकरणलक्षणाभावादित्याशङ्क्याऽऽह—**वेदान्तेति** । शास्त्रं वेदान्तशब्दार्थः । तस्यार्थोऽधिकारिनिर्णयगुरूपसदनपदार्थद्वयतदैक्यविरोधपरिहारसाधनफलाख्यः । तत्र सारो जीवपरैक्यं तस्य सम्यग्ग्रहः संग्रहः संशयविपर्यासादिप्रतिबन्धव्युदासेन तदुपायोपदेशो यस्मिन्प्रकरणे तत्तथेति यावत् । तथा च शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् । इदं प्रकरणत्वेन व्याख्यातुमिष्टम् । निर्गुणवस्तुमात्रप्रतिपादकत्वात् । तत्प्रतिपादनसंक्षेपस्य च कार्यान्तरत्वात्प्रकरणत्वलक्षणस्य चात्र संपूर्णत्वादित्यर्थः । प्रकरणत्वेऽपि निर्विषयत्वादिप्रयुक्तमव्याख्येयत्वमाशङ्क्याऽऽह—**अत एवेति** । प्रकरणत्वादेव प्रकृतशास्त्राभेदेन संबन्धादीनामवाच्यत्वेऽपि प्रकरणप्रवृत्त्यङ्गतया तानि त्ववश्यं वक्तव्या-

---

१ ग. घ. ङ. ज. झ. °मस्क्रिया । २ ग. छ. झ. °तीतनित्य° । ३ ख. ज. °न्मोक्षोपयोगिक° । ४ क. °र्थ्यत इति द्वितीयश्लोकेन कल्पयन्तीति ॥ २ ॥ ५ ग. झ. °तीयेन श्लो° । ६ झ. °त्यार° । ७ झ °व्यानीति मन्यन्ते व्याख्यातारः । त° । ८ झ. °ते । ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानमित्यादि । किं° । ९ ख. ग. छ. झ. °न प्र° । १० घ. °दशा° । ११ झ. °नत्वेऽपि । १२ झ. °शब्दः । त° । १३ छ. °वब्रह्मणोरै° । १४ ज. °बन्धं शा° । १५ घ. ज. °स्य का° ।

नीत्याशङ्क्य शास्त्रीयसंबन्धादीनां तदीये प्रकरणेऽर्थात्प्राप्तत्वान्नास्ति वक्तव्यत्वमर्थ[1]पुन-रुक्तेरित्याह—**यान्येवेति**। श्रोतारो हि शास्त्रीयं प्रकरणं प्रतिपद्यमानाः शास्त्रीया-ण्येव संबन्धा[2]दीन्यत्र वचनाभावेऽपि बुध्यमानाः प्रवृत्तिं तस्मिन्प्रकुर्वन्तीत्यर्थः। तर्हि प्रकरणकर्तृवदेव तद्भाष्यकृताऽपि विषयादीनामत्रावक्तव्यत्वाद्भाष्यकृतो विषयाद्युपन्या[3]सायासो वृथा स्यादित्याशङ्क्याऽऽह—**तथाऽपीति**। प्रकरणकर्तुरवक्तव्यान्यपि तद्भाष्यकृ[4]तां तानि संक्षेपतो वक्तव्यानीति व्याख्यातॄ[5]णां मतम्। द्वाभ्यामनु[6]क्तत्वे तेषा-नाश्वा[7]साशङ्कावकाशादित्यर्थः।

**तत्र प्रयोजनवत्साधनाभिव्यञ्जकत्वेनाभिधेयसंबद्धं शास्त्रं पारम्पर्येण विशिष्टसंबन्धाभिधेयप्रयोजनव[9]द्भवति।**

भाष्यकृता प्रयोजनादीनां वक्तव्यत्वे सिद्धे शास्त्रप्रकरणयोर्मोक्षलक्षणप्रयोजनवत्त्वं प्रतिजानीते—**तत्रेति**। प्रयोजनवच्छास्त्रमिति संबन्धः। शास्त्रग्रहणं प्रकरणोपलक्षणार्थम्। मोक्षलक्षणं फलं ब्रह्मज्ञान[10]स्येष्यते न शास्त्रप्रकरणयोरित्याशङ्क्याऽऽह—**साधनेति**। सत्यं मोक्षस्य साधनं ब्रह्मात्मैकत्वज्ञानम्। तस्य ज[11]नकं शास्त्रादि तद्भावेन ज्ञानव्यवधा-नेन मोक्षफलवद्भवति शास्त्रादीत्यर्थः। तथाऽपि ब्रह्मणा विषयेण संबन्धो वेदा[12]न्तानामि-ष्यते तत्कथमभिधेय[13]संब[14]द्धं शास्त्रादीत्याशङ्क्य ब्र[15]ह्मविचारमन्तरेण तज्ज्ञानजनकत्वायोगा[16]त्त-ज्ज्ञान[17]जननद्वारा विषयसंबन्धसिद्धिरित्याह—**अभिधेयेति**। उक्तं ज्ञानव्यवहि[18]तं प्रयो-जनादि शास्त्रादेरुपसंहरति—**पारम्पर्येणेति**। तत्र संबन्धो ब्रह्मज्ञानं शास्त्रादिना जन्यमेवेत्ययोगव्यवच्छेदादुक्तः। शास्त्रादिनैव जन्य[19]मित्य[20]न्ययोगव्यवच्छेदाद्विषयोऽपि दर्शितः।

**किं पुनस्तत्प्रयोजनमित्युच्यते। रोगार्तस्येव रोगनिवृत्तौ स्वस्थता। त[21]था दुःखात्मकस्याऽऽत्मनो द्वैतप्रपञ्चोपशमे स्वस्थता। अद्वैतभावः प्रयोजनम्। द्वैतप्रपञ्चस्याविद्याकृतत्वाद्विद्यया तदुपशमः स्यादिति ब्रह्म-विद्याप्रकाशनायास्याऽऽरम्भः क्रियते। "यत्र हि द्वैतमिव भवति। यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्प[22]श्येदन्योऽन्याद्विजानीयात्। यत्र**

---

१ क. °र्थस्य पु°। २ क. °दीन्यन्य°। ३ क. ग. झ. °न्यासो। ४ छ. ता सं°। ज °ताऽतिसं°। ५ क. °णां संम°। ६ ज. °नुक्तत्वेते°। ७ ख. °श्वासश°। ८ झ ढ. ज °ङ्का स्यादि°। ९ च. झ °वत्। किं। १० घ. ज. °नस्योच्यते। ११ ग. झ. व्यञ्जकं। १२ ग. °दान्तज्ञानानां°। १३ क. °यत्त्वसं°। १४ ग ज. झ. °बन्धं शा°। १५ ग. झ. ब्रह्माभिधानम°। १६ घ. ज. °गाज्ज्ञान°। १७ झ. °नद्वा°। १८ क. छ. °हितप्र°। १९ ग. °न्यमेवेत्य°। २० क. °त्ययो°। २१ घ. ङ. ज. ट. तथैव दु°। २२ च. छ. झ. °श्येद्वि°।

त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयात् " इत्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः ।

यदुक्तं प्रयोजनवत्त्वं तदाक्षिपति—किं पुनरिति । साध्यत्वे स्वर्गवदनित्यत्वं नित्यत्वे साधनानधीनत्वान्न तादर्थ्येन शास्त्रादि प्रयोक्तव्यमित्यर्थः । मोक्षस्याऽऽत्मैस्वरूपत्वान्नानित्यत्वं नापि साधनानर्थक्यम् । स्वरूपभूतमोक्षप्रतिबन्धनिवर्तकत्वेनार्थवत्त्वादित्युत्तरमाह—उच्यत इति । यथा देवदत्तस्य ज्वरादिना रोगेणाभिभूतस्य स्वस्थता स्वरूपादप्रच्युतिरूपा स्वरूपभूतैव प्रागपि सती रोगप्रतिबद्धाऽसतीवं स्थिता चिकित्साशास्त्रीयोपायप्रयोगवशात्प्रतिबन्धभूतरोगापगमे सत्यभिव्यज्यते । न हि तत्रोपायवैयर्थ्यं प्रतिबन्धप्रध्वंसार्थत्वात् । न चानित्यत्वं स्वस्थतायाः शंङ्क्येत । तस्यास्तदसाध्यत्वादित्युक्तेऽर्थे दृष्टान्तमाह—रोगार्तस्येवेति । यथोदितदृष्टान्तानुरोधादात्मनः स्वतःसमुत्खातनिखिलदुःखस्य निरतिशयानन्दैकतानस्यापि स्वाविद्याप्रसूताहंकारादिद्वैतप्रपञ्चसंबन्धादात्मनि दुःखमारोप्याहं दुःखी सुखं मया प्राप्तव्यमिति प्रतिपद्यमानस्य परमकारुणिकाचार्योपदिष्टवाक्योत्थाद्वैतविद्यातो द्वैतनिवृत्तौ प्रतिबन्धप्रध्वंसे स्वभावभूता परमानन्दता निरस्तसमस्तानर्थता च स्वारस्येनाभिव्यक्ता भवति । सा च स्वस्थता परिपूर्णवस्तुस्वभावान्नातिरिच्यते । तदिदं शास्त्रीयं प्रयोजनम् । तस्य च स्वरूपत्वेनासाध्यत्वान्नानित्यत्वं शङ्कितव्यम् । न च साधनवैयर्थ्यं प्रदर्शितप्रतिबन्धनिवृत्तिफलत्वादिति दार्ष्टान्तिकमाह—तथेति । ननु द्वैतस्याहंकाराद्यात्मनो वस्तुत्वाद्वस्तुनश्च विद्यानपोद्यत्वा[15]न्नित्यनैमित्तिककर्मायत्तत्वा[16]त्तन्निवृत्तेरलं विद्यार्थेन प्रकरणारम्भेणेति तत्राऽऽह—द्वैतेति । आत्माविद्याकृतस्य द्वैतस्याऽऽत्मविद्यया कारणनिवृत्त्या निवृत्तेरात्मविद्याभिव्यक्तये शास्त्रारम्भो युज्यते । न च द्वैतस्याविद्याकृतस्य विद्यमानदेहत्वे प्रमाणमस्तीत्याशङ्क्यान्वयव्यतिरेकानुविधायिनीं श्रुतिमुदाहरति-यत्र हीति । इवशब्दाभ्यामविद्यावस्थायां प्रतिभातद्वैतस्य तत्प्रतिभानस्य चाऽऽभासत्वेनाविद्यामयत्वमुच्यते-आत्मैवाभूदिति । विदुषो विद्यावस्थायां कर्तृ[20]करणादिसर्वमात्ममात्रं नातिरिक्तमस्तीत्युक्त्या विद्याद्वारा सर्वस्य द्वैतस्याऽऽत्ममात्रत्ववचनाद्विद्यानि[21]मित्ता कार्यकारणात्मकद्वैतनिवृत्तिरात्मैवेत्यभिलप्यते ।

---

१ च. छ. झ. °श्येद्विजा° । २ क. कं तद्विजा° । ३ ग. छ. ज. झ. °त्मरू° । ४ छ. °न्धक-नि° । ५ घ. ङ. ज. °दिरो° । ६ ग. ङ °द्धा सती स्वात्मस्थि° । ७ छ. °व स्वात्मस्थि° । ८ ग. घ. ज. °न्धरूपरो° । ९ छ. ज. °न्धध्वं° । १० घ. शङ्क्यते । ११ झ. °न्धध्वं° । १२ ख. °ता या प° । १३ क. ख. °पूर्णा व° । १४ घ. ङ. ज. तथैवेति । १५ ङ, छ. झ. °पोद्यत्वा° । १६ घ. ङ. ज. °र्मापेक्षत्वा° । १७ क. °त्वान्नि° । १८ ख. घ. ङ. छ. ज. °द्यावि° । १९ ख. °ब्दाभ्यां त्वावि° । २० घ. °र्तृकार° । २१ क. °मित्तका° ।

तथा च विद्यातो द्वैतनिवृत्तिनिर्देशात्तस्याविद्यात्वमवद्योत्यते। आदिशब्दान्नेह नानेत्यधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं द्वैतस्याभिदधद्वाक्यं वाचारम्भणवाक्यं च गृहीतम्। अस्यार्थस्येति। द्वैतगताविद्याकृतत्वस्येत्यर्थः।

**तत्र तावदोंकारनिर्णयाय प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम्। यस्य द्वैतप्रपञ्चस्योपशमेऽद्वैतप्रतिपत्ती रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिः। तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम्। तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ युक्तितस्तथात्वदर्शनाय तृतीयं प्रकरणम्। अद्वैतस्य तथात्वप्रतिपत्तिप्रतिपक्षभूतानि यानि वादान्तराण्यवैदिकानि तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम्।**

विषयप्रयोजनाद्यनुबन्धोपन्यासमुखेन ग्रन्थारम्भे स्थिते सत्यादौ प्रकरणचतुष्टयस्य प्रत्येकमसंकीर्णं प्रमेयं प्रतिपत्तिसौकर्यार्थं सूचयितव्यमित्याह—**तत्र तावदिति**। ओंकारप्रकरणस्यासंकीर्णं प्रमेयं संगृह्णाति—**ओंकारेति**। तन्निर्णयाय प्रकरणमारब्धमित्ययुक्तम्। तन्निर्णये प्रमाणाभावात्तस्य चानुपयोगित्वात्। आत्मप्रतिपत्तिर्हि पुरुषार्थोपयोगिनीत्याशङ्क्याऽऽगमेत्यादिविशेषणद्वयम्। तदुपदेशप्रधानं माण्डूक्योपनिषद्व्याख्यानरूपम्। तेन तत्प्रामाण्यादुक्तो निर्णयः सेत्स्यति न त्विदं युक्तिप्रधानं युक्तिलेशस्य सतोऽपि गुणत्वादप्रधानत्वात्। न चायमोंकारनिर्णयो नोपयुज्यते। यदात्मनस्तत्त्वमनारोपितरूपं तत्प्रतिपत्तावुपायत्वात्। तत्प्रतिपत्तेश्च मुक्तिफलत्वात्। अतश्चाऽऽद्यं प्रकरणमोंकारनिर्णयावान्तरफलद्वारेण तत्त्वज्ञाने परमफले पर्यवस्यतीत्युपदेशवशादधिगन्तव्यमित्यर्थः। वैतथ्यप्रकरणस्यावान्तरविषयविशेषं दर्शयति—**यस्येति**। आरोपितनिषेधे सत्यनारोपितप्रतिपत्तिः स्वाभाविकीत्यत्र दृष्टान्तमाह—**रज्ज्वामिवेति**। हेतुतो दृश्यत्वाद्यन्तवत्त्वादियुक्तिवशादित्यर्थः। अद्वैतप्रकरणस्यार्थविशेषमुपन्यस्यति—**तथाऽद्वैतस्यापीति**। तस्यापि द्वैतवद्व्यवस्थानुपपत्त्या मिथ्यात्वप्रसङ्गः शङ्क्यते। तस्यां सत्यामौपाधिकभेदैर्व्यवस्थायाः सुस्थत्वादव्यभिचारादियुक्तिवशादद्वैतस्य परमार्थत्वं प्रतिपादयितुं तृतीयं प्रकरणमित्यर्थः। अलातशान्तिप्रकरणस्यार्थविशेषं कथयति—**अद्वैतस्येति**।

---

१ च. °तस्य प्र°। २ छ. °पञ्चोप°। ३ क. ख. °य प्रकरणं तृतीयम्। ४ च. °पत्तेर्विपक्षभूतानि वा°। ५ छ. झ. °तत्त्वार्थं°। ६ घ. ङ. ज. क. झ. °कीर्णप्र°। ७ क. °मित्युक्त°। ८ ग. ङ. छ. झ. तत्प्रधा°। ९ ग. °लवत्त्वात्। १० ग. झ. °थ्यार्थत्व°। ११ ग. °दाद्वय°। १२ ग. झ. °तीयप्र°।

तस्य तथात्वमबाधितत्वेन वस्तुत्वं तत्प्रतिपक्षत्वं पक्षान्तराणामित्यत्र हेतुमाह—**अवैदिकानीति** । तेषां निराकार्यत्वे हेतुमाह—**अतथार्थत्वेनेति**[1] । मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः । तदुपपत्तिभिरेव निराकरणे हेतुमाह—**अन्योन्येति** । पक्षान्तरप्रतिषेधमुखेनाद्वैतमेव द्रढयितुमन्त्यं[2] प्रकरणमित्यर्थः ।

**कथं पुनरोंकारनिर्णय[3] आत्मतत्त्व[4]प्रतिपत्त्युपायत्वं प्रतिपद्यत इति । उच्यते । "ओमित्येतत्[6]" । "एतदालम्बनम्" । एतद्वै सत्यकामं[7]" "ओमित्यात्मानं युञ्जीत" । "ओमिति ब्रह्म" "ओंकार एवेदं सर्वम्" इत्यादिश्रुतिभ्यः । रज्ज्वादिरिव सर्पादिविकल्पस्याऽऽस्पदोऽ[8]द्वय आत्मा परमार्थः[9] सन्प्राणादिविकल्पस्याऽऽस्पदो यथा तथा सर्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषय ओंकार एव ।**

ओंकारनिर्णयद्वारेणाऽऽत्मप्रतिपत्त्युपायभूतमाद्यं प्रकरणमित्ययुक्तम् । तन्निर्णयस्य तद्धीहेतुत्वायोगात् । न[10] खल्वर्थान्तरज्ञानमर्थान्तरज्ञाने व्याप्तिमन्तरेणोपयुज्यते । न चात्र धूमाग्न्योरिव व्याप्तिरुपलभ्यते । न चाऽऽत्मकार्यत्वमोंकारस्य युक्तम् । आकाशादेरविशेषात् । तस्य च सर्वात्मत्वेनाऽऽत्मवत्तत्कार्यत्वव्याघातादिति मन्वानः सन्प्रथमप्रकरणार्थं प्रागुक्तमाक्षिपति—**कथमिति** । न वयमनुमानावष्टम्भादोंकारनिर्णयमात्मप्रतिपत्त्युपायमभ्युपगच्छामो येन व्याप्त्यभावो दोषमावहेत् । किं तु श्रुतिप्रामाण्यात्तन्निर्णयस्तद्धीहेतुरिति परिहरति—**उच्यत इति** । तत्र मृत्युना नचिकेतसं प्रत्योमि[11]त्येतदित्यनेन वाक्येन ब्रह्मत्वेनोमित्येतदुपदिष्टम् । समाहितेनोंकारोच्चारणे यच्चैतन्यं स्फुरति तदोंकारसामीप्यादेव शाखाचन्द्रन्यायेनों[12]कारशब्देन लक्ष्यते । तेन लक्षणयोंकारनिर्णयो ब्रह्मधीहेतुरिति विव[13]क्षित्वा श्रुतिमुदाहरति—**ओमित्येतदिति** । प्रतिमायां विष्णुबुद्धिवदोंकारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवतीत्यभिप्रेत्य वाक्यान्तरं पठति—**एतदालम्बनमिति** । किं चायमोंकारो यदा परापरब्रह्मदृष्ट्योपास्यते तदा तज्ज्ञानोपायतामुपारोहतीति मत्वा पुनः श्रुतिं दर्शयति—**एतद्वै (द्वा इ) ति** । किं च समाधिनिष्ठो यदो[14]मित्युच्चार्याऽऽ-

१ छ. झ. °तत्त्वार्थ° । २ क. °मन्त्यप्र° । ३ च. °र्णयस्याऽऽत्म° । ४ झ. तत्त्वं प्रत्युपा° । ५ घ. °प्रत्युपा । ६ छ. °तदा° । ७ क. °म परं चापरं च ब्रह्म यदोंकारः । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति । ओं° । च. °म परं चापरं च ब्रह्म यदोंकारः । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेतीति शेषः । ओं° । ८ छ. °स्पदेऽद्व° । ९ क. ख. ज °मार्थतः स° । १० ख. ग. झ. नो । ११ ङ. °मित्य° । १२ ग. छ. झ. °नोंश° । १३ झ. °क्षितत्वाच्छ्रुति° । १४ ग. छ. °यदेतदों° ।

त्मानमनुसंधत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तं च कारणे मकारे तमपि कार्यकारणातीते प्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेणोंकारस्य तत्प्रतिपत्त्युपायतेति विधान्तरेणाऽऽह—ओमित्यात्मानमिति । किं च योऽयं स्थाणुः स पुमानितिवद्यदेतदोमित्युच्यते तद्ब्रह्मेति बाधायां सामानाधिकरण्येन समाहितो ब्रह्म बोध्यते । तथा च युक्तमोंकारस्य ब्रह्मज्ञानहेतुत्वमित्याह—ओमिति ब्रह्मेति । किं च सर्वास्पदत्वादोंकारस्य ब्रह्मणश्च तथात्वादेकलक्षणत्वादन्यत्वासिद्धेरोंकारप्रतिपत्तिर्ब्रह्मप्रतिपत्तिरेवेत्याह—ओंकार एवेति । ओमितीदं सर्वमित्यादिवाक्यान्तरसंग्रहार्थमादिपदमित्यादिश्रुतिभ्यो ब्रह्मप्रतिपत्त्युपायत्वमोंकारस्य प्रमितमिति शेषः । ननु स्वानुगतप्रतिभासे सन्मात्रे चिदात्मनि प्राणादिविकल्पस्य कल्पितत्वादात्मनः सर्वास्पदत्वं न पुनरोंकारस्य तदस्त्यननुगमादिति तत्राऽऽह—रज्ज्वादिरिवेति । यथा रज्जुः शुक्तिरित्यादिरधिष्ठानविशेषः सर्पो रजतमित्यादिविकल्पस्याऽऽस्पदोऽभ्युपगतस्तथाऽऽत्माऽद्वयत्वान्मिथ्यात्वहेत्वभावात्परमार्थसत्स्वभावो वक्ष्यमाणस्तस्य प्राणादिविकल्पस्याऽऽस्पदोऽभ्युपगम्यते । यथैष दृष्टान्तस्तथैव प्राणादिरात्मविकल्पो यस्तद्विषयः सर्वो वाक्प्रपञ्चो यथोक्तोंकारमात्रात्मकस्तदास्पदो गम्यते । न च जगत्योंकारस्याननुगमः । ओंकारेण सर्वा वाक्संतृण्णेति श्रुतेः । अतो युक्तमोंकारस्य सर्वास्पदत्वमित्यर्थः ।

**स चाऽऽत्मस्वरूपमेव । तदभिधायकत्वात् । ओंकारविकारशब्दाभिधेयश्च सर्वः प्राणादिरात्मविकल्पोऽभिधानव्यतिरेकेण नास्ति । " वाचारम्भणं विकारो नामधेयं " " तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् " । " सर्वं हीदं नामनि " इत्यादिश्रुतिभ्यः ।**

मन्वर्थजातस्याऽऽत्मास्पदत्वादोंकारास्पदत्वं च वाक्प्रपञ्चस्य प्राप्तमास्पदद्वयत्वमिति नेत्याह—स चेति । आत्मवाचकत्वेऽपि नास्त्योंकारस्याऽऽत्ममात्रत्वं तद्वाचकस्य तन्मात्रत्वमिति व्याप्त्यभावात् । प्राणादेरात्मविकल्पस्याभिधानव्यतिरेकदर्शनादित्याशङ्क्याऽऽह—ओंकारेति । तस्य विकारः सर्वो वाग्विशेषः । अकारो वै सर्वा वागिति श्रुतेः । ओंकारस्य च तत्प्रधानत्वात्तेन प्राणादिशब्देन वाच्यः प्राणादिरात्मविकल्पः सर्वः स्वाभिधानव्यतिरेकेण नास्ति । तच्चाभिधानं प्राणादिशब्दविशेषात्मकमोंकारविकारभूतमोंकारातिरेकेण न संभवतीत्योंकारमात्रं सर्वमिति निश्चीयते । आत्मनोऽपि तद्वा-

---

१ ख. °ति यदे° । २ क. °ज्ञाने हे° । ३ क. ख. प्रतिपादित° । ४ झ. °दत्वात् । म । ५ क. °ध्य त्वे° । ६ ख. °रमोऽर्थः स° । ७ ग. °मार्थः । स° । झ. °मार्थः सन्स्वमा° । ८ घ. ज. °णप्रा° । ९ झ. °थैव द° । १० ज. °वों वा वा° । ११ क. °तृणोति । १२ क. ख. च. छ. °भिधानाभिधे । १३ च. ज. तस्ये° । १४ छ. नास्त्योंका° । १५ ग. घ. ट. वोध्यः । १६ झ. °धानःदिव्य° ।

च्यस्य तन्मात्रत्वाभिधानादित्यर्थः । शब्दातिरिक्तार्थाभावे शब्दस्यार्थवाचकत्वानुपपत्तेरेकत्र विपर्ययविषयित्वायोगान्निर्विकल्पं सन्मात्रं वस्तु वाच्यवाचकविभागशून्यं पर्यवस्यतीत्यभिप्रेत्य कार्यस्य वस्तुतोऽसत्त्वे प्रमाणमाह—वाचारम्भणमिति । कार्यस्य सर्वस्यैवं मिथ्यात्वेऽपि कथमोंकारनिर्णयस्य ब्रह्मप्रतिपत्त्युपायत्वसिद्धिरित्याशङ्क्याऽऽह—तदस्येति । तदिदं विकारजातमस्य ब्रह्मणः संबन्धि वाचा सामान्यरूपया तन्त्या प्रसारितरज्जुतुल्यया सितं बद्धं व्याप्तमिति संबन्धः । शब्दसामान्येनार्थसामान्यस्य व्याप्तावपि कथमर्थविशेषस्य शब्दविशेषव्याप्तिरित्याशङ्क्याऽऽह—नामभिरिति । शब्दविशेषैर्दामभिर्दामस्थानीयैर्विशेषरूपमपीदमर्थजातं व्याप्तं वक्तव्यं न्यायस्य तुल्यत्वादित्यर्थः । उक्तमर्थं समर्थयते—सर्वं हीति । इदं हि सर्वं सामान्यविशेषात्मकमर्थजातं सामान्यविशेषरूपेण नाम्ना नीयते व्यवहारपथं प्राप्यते तेन नामनीत्युच्यते । तदेवं वागनुरक्तबुद्धिबोध्यत्वाद्वाङ्मात्रं सर्वं वाग्जातं च सर्वमोंकारानुविद्धत्वादोंकारमात्रम् । स चोंकारो लक्षणादिनाऽऽत्मधीहेतुरित्याद्यप्रकरणारम्भः संभवतीत्यर्थः । तद्यथा शङ्कुनेतिश्रुतिसंग्रहार्थमादिपदं प्रतिज्ञातप्रथमप्रकरणार्थसिद्धिरिति शेषः ।

अत आह—

(अथ माण्डूक्योपनिषत् ।)

**हरिः ॐ । ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ॥**

ओमित्येतदक्षरमिदं[11] सर्वमिति । यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्यतिरेकात् । अभिधानस्य चोंकाराव्यतिरेकादोंकार एवेदं सर्वम् । परं च ब्रह्माभिधानाभिधेयोपायपूर्वकमेव गम्यत इत्योंकार एव । तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमित्येतस्योपव्याख्यानम् । ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया विस्पष्टं[12] प्रकथनमुपव्याख्यानं प्रस्तुतं वेदितव्यमिति वाक्यशेषः । भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्तदप्योंकार एवोक्तन्यायतः । यच्चान्यत्त्रिकालातीतं कार्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि तदप्योंकार एव ॥ १ ॥

---

१ ग. घ. ङ. छ. ज. झ. ट. °ब्दस्य शब्दत्वा° । २ घ. ट. °षये वि° । ३ ग. छ ज. °त्वाभावान्नि° । ४ ग. झ. °कल्पविषयस° । ५ क. °स्यैव मि° । ६ ग. घ. झ. °मस्या° । ७ ग. झ. °यतु° । ८ ख. झ. ञ. °यति—स° । ९ ख. म. हि सा° । १० क. ख. य. °कार उपासनेना° । ११ छ. °मिति । १२ ज. °ष्टं क° ।

भूताविवाकारोकारौ । तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे । अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः । विद्वत्फलमाह । मिनोति ह वा इदं सर्वं जगद्याथात्म्यं जानातीत्यर्थः । अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः । अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम् ॥ ११ ॥

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वमुपन्यस्यति—सुषुप्तेति । पूर्ववदेकत्वप्रयोजनकमत्रापि प्रश्नपूर्वकमुपवर्णयति—केनेत्यादिना । मानमेव विवृणोति—मीयेते इति । ओमित्योंकारस्य नैरन्तर्येणोच्चारणे सत्यकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः । एकीभावमेव स्फोरयति—ओंकारेति । मकारवत्प्राज्ञेऽपि तदस्ति सामान्यमित्याह—तथेति । उक्तस्यापि सामान्यस्य फलमाह—अतो वेति । सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह—विद्वदिति । अविदुषोऽपि जगद्विषयं ज्ञानमस्तीत्याशङ्क्य विशिनष्टि—जगद्याथात्म्यमिति । तद्याथात्म्यं चाव्याकृतत्वं प्रलयभवनमनिष्टत्वान्न फलमित्याशङ्क्याऽऽह—जगदिति । तत्र तत्रैकत्वज्ञाने फलभेदकथनादुपासनाभेदमाशङ्क्याङ्गेषु फलभेदश्रुतेरर्थवादत्वमुपेत्याऽऽह—अत्रेति । पादानां मात्राणां च क्रमादेकत्वविज्ञाने फलकथनं सर्वान्पादान्मात्राश्च सर्वाः स्वात्मन्यन्तर्भाव्य प्रधानस्य ब्रह्मध्यानस्य साधनं यदोंकाराख्यमक्षरं तस्य स्तुतावुपयुज्यते तेन च तदेवैकमुपासनमितरस्य तदङ्गत्वान्नोपास्तिभेदकत्वमित्यर्थः ॥ ११ ॥

अत्रैते श्लोका भवन्ति—

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासंप्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १९ ॥

विश्वस्यात्वमकारमात्रत्वं यदा विवक्ष्यते तदाऽऽदित्वसामान्यमुक्तन्यायेनोत्कटमुद्भूतं दृश्यत इत्यर्थः । अत्वविवक्षायामित्यस्य व्याख्यानं मात्रासंप्रतिपत्ताविति । विश्वस्याकारमात्रत्वं यदा संप्रतिपद्यत इत्यर्थः । आप्तिसामान्यमेव चोत्कटमित्यनुवर्तते चशब्दात् ॥ १९ ॥

पादानां मात्राणां च यदेकत्वं सनिमित्तं श्रुत्योपन्यस्तं तत्र श्रुत्यर्थविवरणरूपान्पूर्ववदेव श्लोकानवतारयति—अत्रेति । प्रथमपादस्य प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति—विश्वस्येति । उक्तन्यायेनाऽऽदिरस्येत्यादाविति शेषः । पुनरुक्तिपरिहारद्वारा विवक्षितमर्थमाह—अत्वेति । अनुवृत्तिद्योतकं दर्शयति—चशब्दादिति ॥ १९ ॥

१ घ. ङ. °षुप्तिका° । २ घ. ङ. झ. °न्यमतिव्यक्तमि° । ३ छ. °यविज्ञा° । ४ ग. घ ङ. ज. झ. °ङ्गे फलश्रु° । ५ ग. छ. ङ. ज. °कत्वज्ञा° । ६ ग. °लभेदक° । ७ ख. °रस्यापि त° । ८ क. ख. ज. °दा विवक्ष्यते सं° । ९ ङ. °थमाया मा° ।

तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम् ।
मात्रासंप्रतिपत्तौ स्याद्रुभयत्वं तथाविधम् ॥ २० ॥

तैजसस्योत्वविज्ञान उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट[1] इत्यर्थः । उभयत्वं च स्फुटमेवे[2]ति । पूर्ववत्[3]सर्वम् ॥ २० ॥

द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वारोपप्रयोजकद्वयं श्रुत्युक्तं व्यनक्ति—तैजसस्येति । स्फुटमिति क्रियाविशेषणम् । तथाविधमित्यस्या[4]र्थं स्फुटमित्याह—स्फुटमेवेति । उत्कविज्ञान इत्यस्य व्याख्यानं मात्रासंप्रतिपत्ताविति तस्य व्याख्यानं सर्वमित्युच्यते तत्पूर्ववद्द्रष्टव्यमि[5]त्युच्यते—पूर्ववदिति ॥ २० ॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासंप्रतिपत्तौ तु लयसामान्यमेव च ॥ २१ ॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्ये इत्यर्थः ॥ २१ ॥

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्रुत्या दर्शितं विशदयति—मकारेति । अक्षरार्थस्य पूर्ववदेव सुज्ञानत्वात्तात्पर्यार्थमाह—मकारत्व इति ॥ २१ ॥

त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः ।
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥

यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमे[6]वैतदिति निश्चितो यः स पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति ॥ २२ ॥

विश्वादीनामकारादीनां च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति—त्रिष्विति । य[7]थोक्तस्थानत्रयं जागरितं स्वप्नं सुषुप्तं चेति त्रितयं तुल्यं पादानां मात्राणां चेति शेषः । उक्तं सामान्यमाप्तिरुत्कर्षो मितिरित्यादि । महामुनिरित्यस्यार्थमाह—ब्रह्मविदिति॥२२॥

अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ २३ ॥

---

१ छ. ज. °ष्टमित्य° । २ ङ. °वेत्यर्थः । पू° । ३ ज. °वत् ॥ २० ॥ ४ छ. °स्यार्थः स्फु° । ५ छ. झ. °मित्याह पू° । ६ घ. ज. °मेव त° । ७ ख. ग. छ. झ. °थोक्तं स्था° ।

यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं कृत्वा यथोक्तोंकारं प्रतिपद्य यो ध्यायति तमकारो नयते विश्वं प्रापयति । अकारालम्बनोंकारं विद्वान्वैश्वानरो भवतीत्यर्थः । तथोकारस्तैजसम् । मकारश्चापि पुनः प्राज्ञं चशब्दान्नयत इत्यनुवर्तते । क्षीणे तु मकारे बीजभावक्षयादमात्र ओंकारे गतिर्न विद्यते क्वचिदित्यर्थः ॥ २३ ॥

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति—अकार इति । यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिन्नोंकारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्तव्यप्राप्तिविभागो नास्तीत्याह—नामात्र इति । ओंकारं[1]ध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम् । विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात् । अकारस्य चाध्येयस्योक्तफलप्रापकत्वायोगादित्याशङ्क्याऽऽह—अकारेति । तदालम्बनं तत्प्रधानमिति यावत् । अकारप्रधानमोंकारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य[2] हिरण्यगर्भस्य[3] प्राप्तिर्भवतीत्याह—तथेति । यश्च मकारप्रधानमोंकारं ध्यायति तस्य प्राज्ञाव्याकृतप्राप्ति[4]र्युक्तेत्याह—मकारश्चेति । क्रियापदानुवृत्तिरुभयत्र विवक्षिता । चतुर्थपादं व्याचष्टे—क्षीणे त्विति । स्थूलप्रपञ्चो जागरितं विश्वश्चेत्येतत्त्रितयमकारमात्रं सूक्ष्मप्रपञ्चः स्वप्नस्तैजसश्चैतत्त्रितयमुकारमात्रं प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चेत्येतत्त्रितयं मकारमात्रं तत्रापि पूर्वं पूर्वमुत्तरोत्तरभावमापद्यते । तदेवं सर्वमोंकारमात्रमिति ध्यात्वा स्थितस्य यदेतावन्तं कालमोमितिरूपेण प्रतिपन्नं तत्परिशुद्धं ब्रह्मैवेत्याचार्योपदेशसमुत्थसम्यग्ज्ञानेन पूर्वोक्तसर्वविभागनिमित्ताज्ञानस्य मकारत्वेन गृहीतस्य क्षये ब्रह्मण्येव शुद्धे पर्यवसितस्य न क्वचिद्गतिरुपपद्यते परिच्छेदाभावादित्यर्थः ॥ २३ ॥

( उपनिषद् )

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद ॥ १२ ॥**

( इति माण्डूक्योपनिषत्समाप्ता । )

अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओंकारश्चतुर्थस्तुरीय आत्मैव

---

१ घ. ङ. °म्बनमोंका° । २ ख. ग. छ. झ. तस्मिंश्चोंका । ३ घ. ङ. ज. °रस्य ध्या° । ४ ज. °सहि° । ५ क. ज. °र्भप्रा° । । ६ ख. ज. झ. प्राज्ञस्याव्याकृतस्य प्रा° । ७ छ. °प्तिर्भवतीया° । ८ घ. ङ. ज. °देव स° । ९ ख. °वत्काल° । १० ग. छ. ङ. °क्यग्दर्शने° । ११ क. छ. °द य एवं वेद ॥ १२ ॥

केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्यः। प्रपञ्चो-पशमः शिवोऽद्वैतः संवृत[1] एवं यथोक्तविज्ञानवता प्रयुक्त ओंकारस्त्रिमा-त्रस्त्रिपादः। आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद। परमार्थ[2]दर्शिनां ब्रह्मविदां तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याबीजत्वात्। न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पो[3] बुद्धिसंस्कारात्पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति। मन्दमध्यमधियां तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां(णां) संन्यासिनां मात्राणां पादानां च क्लृप्तसामान्यविदां यथावदुपास्यमान ओंकारो ब्रह्मप्रतिपत्तय आलम्बनी भवति तथा च वक्ष्यति—"आश्र-मास्त्रिविधा हीनाः[4]" इत्यादि[5] ॥ १२ ॥

( इति माण्डूक्यमूलमन्त्रभाष्यम् )

प्रत्यक्चैतन्यमोंकारसंवेदनं त्रिमात्रेणोंकारेणाध्यस्तेन तादात्म्यादोंकारो निरुच्यते[6]। तस्य परेण ब्रह्मण्यैक्य[7]ममात्रादिश्रुत्या विवक्ष्यते तामवतार्य व्याकरोति—**अमात्र इत्यादिना**। केवलत्वमद्वितीयत्वम्। विशेषणान्तरमुपपादयति—**अभिधानेति**। अभिधानं वागभिधेयं मनश्चित्तातिरिक्तार्थाभावस्याभिधास्यमानत्वात्तयोर्मूला[8]ज्ञानक्षयेण क्षीणत्वादिति हेत्वर्थः। अव्यवहार्यश्चेदात्मा नास्त्येवेत्याशङ्क्य विकारजातविनाशावधित्वेनाऽऽत्मनो[9]ऽवशेषान्नैवमि-त्याह—**प्रपञ्चेति**। तस्य च सर्वानर्थाभावोपलक्षितस्य परमानन्दत्वेन पर्यवसानं सूच-यति—**शिव इति**। तस्यैव सर्वद्वैतकल्पनाधिष्ठानत्वेनावस्थानमभिप्रेत्याऽऽह—**अद्वैत इति**। ओंकारस्तुरीयः सन्नात्मैवेति यदुक्तं तदुपसंहरति—**एवमिति**। यथोक्तं विज्ञानं पादानां मात्राणां चैकत्वम्। न च पादा मात्राश्च तुरीयात्मन्योंकारे सन्ति। पूर्वपूर्व-विभागश्चोत्तरोत्तरान्तर्भावेन क्रमादात्मनि पर्यवस्यतीत्येवंलक्षणतद्वता प्रयुक्तः सन्नोंकारो मात्राः पादांश्च स्वस्मिन्नन्तर्भाव्यावस्थितस्याऽऽत्मनो भेदमसहमानस्तद्रूपो भवतीत्यर्थः। उक्तै-क्यज्ञानस्य फलमाह—**संविशतीति**। सुषुप्ते ब्रह्मप्राप्तस्य पुनरुत्थानवन्मुक्तस्यापि पुनर्जन्म स्यादित्याशङ्क्याऽऽह—**परमार्थेति**। सुषुप्तस्य[10] पुनरुत्थानं बीजभूताज्ञानस्य सत्त्वादुपपद्यते। इह तु बीजभूतमज्ञानं तृतीयं सुषुप्ताख्यं दग्ध्वैव तेषामात्मानं तुरीयं प्रविष्टो विद्वानिति नासौ पुनरुत्थानमर्हति। कारणमन्तरेण तदयोगादित्यर्थः। तुरीयमेव पुनरुत्थानबीजभूतं भविष्यतीत्या-

---

१ ज. झ. संवृत्त। च. संप्रवृत्त। २ ख. घ. झ. °दर्शी ब्रह्मवित्तृती°। ३ च. सर्पबु°। ४ ख. घ. छ. ज. हीन इ°। ५ ङ. झ. 'दिपूर्ववद°। ६ छ. निरुष्यते। ७ ङ. ब्रह्मैक्य°। ८ ग. झ. 'ये क्षी'। ९ क. ख. घ. ङ. छ. ज. °नोऽवशे°। १० झ. ङ. सुप्तस्य।

शङ्क्य कार्यकारणविनिर्मुक्तस्य तस्य तदयोगान्नैवमित्याह—तुरीयस्येति। मुक्तस्यापि पूर्वसंस्कारात्पुनरुत्थानमाशङ्क्य दृष्टान्तेन निराचष्टे—न हीति। पूर्ववदित्यविवेकावस्थायामिवेत्यर्थः। तद्विवेकिनां रज्जुसर्पविवेकविज्ञानवतामिति यावत्। बुद्धिसंस्कारादित्यत्र बुद्धिशब्देन सर्पभ्रान्तिर्गृह्यते। उत्तमाधिकारिणामोंकारद्वारेण परिशुद्धब्रह्मात्मैक्यविदामपुनरावृत्तिलक्षणमुक्तं फलम्। इदानीं मन्दानां मध्यमानां च कथं ब्रह्मप्रतिपत्त्या फलप्राप्तिरित्याशङ्क्याऽऽह—मन्देति। तेषामपि क्रममुक्तिरविरुद्धेत्यर्थः। तत्रैव वाक्यशेषानुकूल्यं कथयति—तथा चेति॥ १२॥

( इति माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता। )

पूर्ववत्—

अत्रैते श्लोका भवन्ति—

( गौडपादीयश्लोकाः। )

ओंकारं पादशो विद्यात्पादा मात्रा न संशयः।
ओंकारं पादशो ज्ञात्वा न किंचिदपि चिन्तयेत्॥ २४॥

यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोंकारं पादशो विद्यादित्यर्थः। एवमोंकारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किंचित्प्रयोजनं चिन्तयेत्कृतार्थत्वादित्यर्थः॥ २४॥

यथा पूर्वमाचार्येण श्रुत्यर्थप्रकाशकाः श्लोकाः प्रणीतास्तथोत्तरेऽपि श्लोकाः श्रुत्युक्तेऽर्थे एव संभवन्तीत्याह—पूर्ववदिति। ओंकारस्य पादशो विद्या कीदृशीत्याशङ्क्याऽऽह—पादा इति। पादानां मात्राणां चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोंकारं ब्रह्मबुद्ध्या ध्यायतो भवति कृतार्थतेति दर्शयति—ओंकारमिति। तस्मात्पादानां मात्राणां चान्योन्यमेकत्वादित्यर्थः। तदेकत्वं पुरस्कृत्योंकारमुभयविभागशून्यं ब्रह्मबुद्ध्या जानीयादित्याह—ओंकारमिति। उत्तरार्धस्य तात्पर्यमाह—एवमिति॥ २४॥

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्॥ २५॥

युञ्जीत समादध्याद्यथाव्याख्याते परमार्थरूपे प्रणवे चेतो मनः।

---

१ ग. ज. झ. तद॰। २ क. ॰रादीय॰। ३ घ. ङ. च. ब्रह्मैक्य॰। ४ ग. छ. झ. ॰क्षणं फलमुक्तम्। इ॰। ५ ग. क्ष. ॰मनुक्र॰। ६ छ. ॰कारे पा॰। ७ च. न चिन्तयेन्न किं॰। ८ घ. ॰काः प्र॰। ९ क. एवं। १० ख. ख. ॰कत्वात्तद्वि॰।

यस्मात्प्रणवो ब्रह्म निर्भयम् । न हि तत्र सदा युक्तस्य भयं विद्यते क्वचित् "विद्वान्न बिभेति कुतश्चन" इति श्रुतेः ॥ २५ ॥

प्रणवानुसंधानकुशलस्य प्रणवज्ञानेनैव सर्वद्वैतापवादकेन कृतार्थता भवतीत्युक्तम् । इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्तव्यतां कथयति—युञ्जीतेति । ननु मनःसमाधानं ब्रह्मणि कर्तव्यम् । किमिति प्रणवे तत्कर्तव्यतोच्यते । तत्राऽऽह—प्रणव इति । संप्रति प्रणवे समाहितचित्तस्य फलं दर्शयति—प्रणवे नित्येति । समाधानविषयमाह-यथेति । तुरीयरूपं यथो( थेत्यु )च्यते तत्र हेतुमाह—यस्मादिति । तदेव साधयति-न हीति । तत्र तैत्तिरीयकश्रुत्यानुकूल्यमाह—विद्वानिति ॥ २५ ॥

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः । अपू-
र्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ २६ ॥

परापरे ब्रह्मणि प्रणवः परमार्थतः क्षीणेषु मात्रापादेषु पर एवाऽऽत्मा ब्रह्मेति न पूर्वं कारणमस्य विद्यत इत्यपूर्वः । नास्यान्तरं भिन्नजातीयं किंचिद्विद्यत इत्यनन्तरः । तथा बाह्यमन्यन्न विद्यत इत्यबाह्यः । अपरं कार्यमस्य न विद्यत इत्यनपरः । सबाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः ॥ २६ ॥

कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानां चाधिकारिणां ध्येयो भवतीत्याशङ्क्याऽऽह—प्रणवो हीति । उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राऽऽह—अपूर्व इति । परापरब्रह्मात्मना प्रणवो मन्दमध्यमाधिका[10]रिणोर्ध्येयतामुपगच्छतीति पूर्वार्धं व्याचष्टे—परेति । उत्तमाधिकारिणस्तु सर्वविशेषशून्यमेकरसं प्रत्यग्भूतं यद्ब्रह्म तद्रूपेण प्रणवः सम्यग्ज्ञानाधिगम्यो भवतीत्युत्तरार्धं विभजते—परमार्थत इत्यादिना । उक्तेऽर्थे प्रमाणं सूचयति—सबाह्येति ।

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥

आदिमध्यान्ता उत्पत्तिस्थि[12]तिप्रलयाः सर्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायां[13]

१ झ. °वो नि° । २ झ. समायु° । ३ घ. ङ. झ. °ज्ञानेन स° । ४ छ. ध्यानं क° । ५ क. ख. मनसः स° । ६ ग. घ. ङ. छ. ज. °रीयं रू° । ७ घ. °ति पू° । ८ च. र्वं कर° । ९ क. पूर्वं । १० ग. °रिणो ध्येय° । घ. °रिणां ध्येय° । ११ छ. उक्तार्थे । १२ घ. झ. छ. ज. °तिल° । १३ च. °याख्याद° ।

ञ्यादयः । एवं हि प्रणवमात्मानं मायोव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव तदात्मभावं व्यश्नुत इत्यर्थः ॥ २७ ॥

यदोंकारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्या पूर्व[1]त्वमनन्तरत्वमित्यादिविशेषणमुक्तं तत्र हेतुमाह—**सर्वस्येति** । यथोक्तविशेषणं प्रणवं प्रत्य[2]ञ्चं प्रतिपद्य कृतकृत्यो भवतीत्याह—**एवं हीति** । पूर्वार्धं व्याकरोति—**आदीति** । सर्वस्यैवोत्पद्यमानस्योत्पत्तिस्थितिलया यथोक्तप्रणवाधीना भवन्ति । अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः[4] । तत्र परिणामवादं[5] व्यावर्त्य[6] विवर्तवादं द्योतयितुमुदाहरति—**मायेति** । अनेकोदाहरणमुत्पद्यमानस्यानेकविधत्वबोधनार्थं प्रणवस्य प्रत्यगात्म[7]त्वं प्राप्तस्याविकृतस्यैव स्वमायाशक्तिवशाज्जगद्धेतुत्वमित्यत्र दृष्टान्तमाह—**यथेति** । यथा मायावी स्वगतविकारमन्तरेण माया[8]हस्त्या[9]देरिन्द्रजालस्य स्वमायावशादेव हेतुः । यथा[10] वा रज्ज्वादयः स्वगतविकारविरहिणः स्वाज्ञानादेव सर्पादिहेतवस्तथाऽयमात्मा[11] प्रणवभूतो व्यवहारदशायां स्वाविद्यया सर्वस्य हेतुर्भवति । अतो युक्तं तस्य परमार्थावस्थायां[12] पूर्वोक्तविशेषणवत्त्वमित्यर्थः । द्वितीयार्धं विभजते—**एवं हीति** । पूर्वोक्तविशेषणसंपन्नमिति यावत् । ज्ञानस्य मुक्तिहेतोः सहायान्तरापेक्षा नास्तीति सूचयति—**तत्क्षणादेवेति** । तदात्मभावमित्यत्र तच्छब्देनापूर्वादिविशेषणं परमार्थवस्तु परामृश्यते ॥ २७ ॥

**प्रणवं हीश्वरं विद्यात्सर्वस्य हृदि[13] संस्थितम् ।**
**सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति ॥ २८ ॥**

सर्व[14]प्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये स्थितमीश्वरं प्रणवं विद्यात्सर्वव्यापिनं व्योमवदोंकारमात्मानमसंसारिणं धीरो बुद्धिमान्मत्वा न शोचति । शोकनिमित्तानुपपत्तेः । "तरति शोकमात्मवित्" इत्या[15]दिश्रुतिभ्यः ॥ २८ ॥

ब्रह्मबुद्ध्या प्रणवमभिध्यायतो हृदयाख्यं देशमुपदिशति—**प्रणवमिति** । परमार्थदर्शिनस्तु[16] देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकं[17] शोकाभावं तत्र को मोहः कः शोक इत्यादिश्रुतिसिद्धमनुवदति—**सर्वव्यापिनमिति** । हृदयदेशे प्रणवभूतस्य ब्रह्मणो ध्येयत्वे हेतुं सूचयति—**स्मृतिप्रत्ययेति** । बुद्धिमानिति विवेकित्वमुच्यते । मत्वेति

---

१ घ. ङ. ज. °याख्यादि° । २ घ. ङ. ज. °वंम° । ३ घ. प्रत्ययं । ४ ग. घ. ङ. ज. ञ. °र्थः । प° । ५ ज. °दं द्यो । ६ छ. व्यावृत्य । ७ क. °त्मत्वप्रा° । ८ घ. मायया ह° । ९ ग. छ. °स्त्यादीन्द्र° । १० घ. छ. °था र° । ११ च. ङ. ज. ञ. च । १२ ग. °त्मा प्रागनुभू° । १३ घ. ङ. छ. ज. हृदये स्थि° । १४ ञ. °र्वस्य प्रा° । १५ क. इतिश्रु° । १६ घ. ङ. म. र्शिनो दे° । १७ क. थिकशो° ।

साक्षात्कारसंपत्तिर्विवक्ष्यते। विवेकद्वारा तत्त्वसाक्षात्कारे सति शोकनिवृत्तौ हेतुमाह— शोकेति। तस्य हि निमित्तमात्माज्ञानम्। तस्याऽऽत्मसाक्षात्कारतो निवृत्तौ शोकानुपपत्तिरित्यत्र प्रमाणमाह—तरतीति। आदिशब्देन भिद्यते हृदयग्रन्थिरित्यादिश्रुतिर्गृह्यते ॥ २८ ॥

**अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।**
**ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ २९ ॥**

**इति माण्डूक्योपनिषदर्थाविष्करणपरायां (सु) गौडपादीयकारिकायां (सु) प्रथममागमप्रकरणम् ॥ १ ॥**

**ॐ तत्सत् ।**

अमात्रस्तुरीय ओंकारो मीयतेऽनयेति मात्रा परिच्छित्तिः साऽनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्वद्वैतोपशमत्वादेव शिवः। ओंकारो यथाव्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिः। नेतरो जनः शास्त्रविदपीत्यर्थः ॥ २९ ॥

**इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतावागमशास्त्रविवरणे गौडपादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथममागमप्रकरणम् ॥ १ ॥**

**ॐ तत्सत् ।**

ओंकारं तुरीयमात्मानमापन्नं यः प्रतिपन्नस्तं स्तौति—**अमात्र इति**। यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभोगी न पुरुषार्थभाग्भवतीति विद्यारहितं निन्दति—**नेतर इति**। पादविभागस्य मात्राविभागस्य चाभावादोंकारस्तुरीयः सन्नमात्रो भवतीत्याह—**अमात्र इति**। ननु कथमनन्ता परिच्छित्तिरोंकारस्य तुरीयस्योच्यते। न हि तत्र परिच्छित्तिरेवास्तीत्याशङ्क्याऽऽह—**नैतावत्त्वमिति**। अनर्थात्मकद्वैतसंस्पर्शाभावादप्रतिबन्धेन परमानन्दत्वं तस्मिन्नाविर्भवतीत्यभिप्रेत्याऽऽह—**सर्वेति**। यथाव्याख्यातः पूर्वार्धेनोक्तविशेषणवानित्यर्थः। ननु यथोक्तप्रणवपरिज्ञानरहितस्यापि शास्त्र-

१ ग. ङ. छ. °वक्षिता। वि°। २ घ. छ. ज. °रा सा। ३ छ. °स्य नि°। ४ घ. °त्का-रान्निवृ°। ५ घ. °शमादे°। ६ ज. °मवत्वादे°। ७ छ. °कारतु°। ८ ख. ङ. °वमात्रमा°। ९ ङ. °पन्नो यः। १० ख. °ति—स मुनिरिति। अ°। ११ ख. °भाङ् न पु°। १२ छ. °वज्ञा°।

परिज्ञानवत्त्वाच्च जन्मोपलक्षितसंसारभाक्त्वेन पुरुषार्थासिद्धिः । मैवम् । शास्त्रविदोऽपि तत्त्वज्ञानाभावे मुख्यपुरुषार्थासिद्धि(द्धे)रित्यभिप्रेत्याऽऽह—नेतर इति । तदेवं प्रणवद्वारेण निरुपाधिकमात्मानमनुसंदधानस्य पुरुषार्थपरिसमाप्तिर्नेतरेषां बहिर्मुखाना(णा)मिति स्थितम् ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां माण्डूक्योपनिषदाविष्करणपरगौडपादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणम् ॥ १ ॥

ॐ तत्सत् ।

# अथ गौडपादीयकारिकायां(सु) वैतथ्याख्यं द्वितीयं प्रकरणम् ।

## हरिः ॐ

**वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ।**
**अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥**

ॐ । ज्ञाते द्वैतं न विद्यत इत्युक्तम् । एकमेवाद्वितीयमित्यादिश्रुतिभ्यः[2] । आगममात्रं तत् । तत्रोपपत्त्याऽपि द्वैतस्य[3] वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते[6]—वैतथ्यमित्यादिना । वितथस्य भावो वैतथ्यम्, असत्यत्वमित्यर्थः । कस्य । सर्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानाम् । आहुः कथयन्ति । मनीषिणः प्रमाणकुशलाः[11] । वैतथ्ये हेतुमाह—अन्तःस्थानात् । अन्तःशरीरस्य मध्ये स्थानं येषाम् । तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादयो न बहिः शरीरात् । तस्मात्ते वितथा भवितुमर्हन्ति । नन्वपवरकाद्यन्तरुपलभ्यमानैर्घटादिभिरनैकान्तिको हेतुरित्याशङ्क्याऽऽह—संवृतत्वेन हेतुनेति । अन्तः संवृतस्थानादित्यर्थः[12] । न ह्यन्तः संवृते देहान्तर्नाडीषु पर्वतहस्त्यादीनां[13] संभवोऽस्ति । न हि देहे पर्वतोऽस्ति ॥ १ ॥

---

१ च. °तीयं ब्रह्मेत्या° । २ च. °भ्यः, न, आ° । ३ घ. ज. झ. °तवै° । ४ ज. झ. °तीयप्र° । ५ छ. °रभते । ६ ख. झ. °ते । वि° । ७ च. °ह्यात्मि° । झ. °ह्याध्यात्मका° । ८ घ. °कादीनां । ९ ज. °नां स्व° । १० झ. °रम° । ११ च. येषां ते त° । १२ घ. °वृते स्था° । १३ क. °नां भावोऽ° ।

ॐ ॥ आगमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्यं द्वैतस्य मिथ्यात्वमर्थादुक्तम्। इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि प्रतिपत्तुं सुशकमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तासिद्ध्यर्थं तस्मिन्वृद्धसंमतिमाह—**वैतथ्यमिति**। न केवलमागमोक्तिवशादेव स्वप्नमिथ्यात्वं किं तु युक्तितोऽपीत्याह—**अन्तःस्थानादिति**। पूर्वोत्तरप्रकरणयोः संबन्धसिद्ध्यर्थं पूर्वप्रकरणे वृत्तं संक्षिप्यानुवदति—**ज्ञात इति**। आदिशब्देन यत्र हि द्वैतमिव भवतीत्यादिश्रुतिर्गृह्यते तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरं प्रकरणमनर्थकमित्याशङ्क्याऽऽह—**आगमेति**। यद्द्वैतमिथ्यात्वं पूर्वमुक्तं तदागममात्रम्। आगमप्राधान्येनाधिगतम्। न युक्तितः सिद्धम्। तस्मिन्नागमतोऽवगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगन्तव्यमिति प्रकरणान्तरं प्रारब्धमित्यर्थः। प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात्तदधीनविचारानन्तरं तर्काधीनविचारस्य सावकाशत्वाद्युक्तं पौर्वापर्यं पूर्वोत्तरप्रकरणयोरित्युक्तम्। संप्रति श्लोकाक्षराणि योजयति—**वितथस्येत्यादिना**। बाह्या घटादयः। सुखादयस्त्वाध्यात्मिका भावाः। शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यत्रानुभवं प्रमाणयति—**तत्र हीति**। तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं व्यभिचारादित्याशङ्कामनूद्य परिहरति—**नन्वित्यादिना**। हेत्वन्तरशङ्कां वारयति—**अन्तरिति**। यद्यपि देहान्तःसंकुचिते देशे स्वाप्ना भावा भवन्ति तथाऽपि कथं तेषां मृषात्वमित्यत आह—**न हीति**। अन्तरित्युक्तं स्फुटयति—**संवृत इति**। तमेव संकुचितं देशं विशेषणान्तरेण स्फोरयति—**देहान्तर्नाडीष्विति**। उक्तमर्थं कैमुतिकन्यायेन स्फुटयति—**न हीति**। यदा देहेऽपि पर्वतादयो न संभाव्यन्ते तदा तदन्तर्वर्तिनीषु नाडीष्वतिसूक्ष्मासु तेषां संभावना नास्तीति किमु वक्तव्यमित्यर्थः। स्वाप्ना भावाः सत्या न भवन्ति। उचितदेशशून्यत्वाद्रजतभुजंगादिवदिति भावः ॥ १ ॥

**अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति।**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ २ ॥**

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धम्। यस्मात्प्रा-

---

१ ग. ºयतां तº। २ झ. स्य मिº। ३ घ. ºर्थाद्वक्तव्यम्। ४ झ. ºप्यानुद्रवति। ५ ङ. ºत्याद्या श्रुº। ६ ग. झ. यद्द्वैतं वैतथ्यं पूº। ७ ङ. ºतस्य मिº। ८ क. नानुगº। ९ क. ºकतर्कानुº। १० झ. ºप्रधानस्यº। ११ ग. झ. ºन्तराºº। १२ छ. स्वप्नानां। १३ घ. ङ. ºचितदेº। १४ छ. स्वप्ना। १५ ङ. स्वप्ना। १६ क. भावा आगममात्रं सº। १७ क. ºदेहशूº। १८ छ. ºमन्तस्थº। १९ घ. ºत्प्राच्यादिषु।

[1]ध्येषु [2]सुप्त उदक्षु स्वप्नान्पश्यन्निव दृश्यते[3]। [4]इत्येतदाशङ्क्याऽऽह। [5]न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान्पश्यति। यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्रा[6]प्ये देशे स्वप्नान्पश्यन्निव दृश्यते। न च [7]तद्देशप्राप्तेरागमनस्य च दीर्घः का[8]लोऽस्ति। अतो दीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति। किं च प्रतिबुद्धश्च वै सर्वः स्वप्नदृक्स्वप्नदर्शनदेशे न विद्यते। यदि च स्वप्ने देशान्तरं गच्छेद्यस्मिन्देशे स्वप्नान्पश्येत्तत्रैव [9]प्रतिबुध्येत। न चैतदस्ति। रात्रौ [10]सुप्तोऽ[11]हनी[12]व भावान्पश्यति बहुभिः संगतो यैश्च संगतो भवति तैर्गृह्येत। न च गृह्यते। गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः। न चैतदस्ति। तस्मान्न देशान्तरं गच्छति स्वप्ने ॥ २ ॥

देहाद्बहिरेव देशान्तरं गत्वा स्वाप्नानां भावानामुपलम्भात्तेषां देहान्तः [13]संवृते नाडीप्रदेशे दर्शनमसंप्रतिपन्नमित्या[14]शङ्क्य परिहरति—**अदीर्घत्वाच्चेति**। बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह—**प्रतिबुद्धश्चेति**। व्यावर्त्यामाशङ्कामनुवदति—**स्वप्नेति**। तेषां देहान्तःसंकुचिते नाडीदेशे स्थितिदर्शनान्मिथ्यात्वमित्येतदप्यसंप्रातिपन्नमित्यत्र हेतुमाह—**यस्मादिति**। पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते। एतच्छब्देन चोद्यं परामृश्यते। स्वप्नद्रष्टा गत्वा स्वप्नान्न पश्यतीत्यत्र हेतुमाह—**यस्मादिति**। इवशब्दस्तु पूर्ववत्। तथाऽपि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्धारितमित्या[15]शङ्क्याऽऽह—**न चेति**। स्वप्नः सत्यो न भवति उचितकालविकलत्वादसंप्रतिपन्नत्वादित्यभिप्रेत्य फलितमाह—**अत इति**। इतश्च न [16]देहाद्बहिर्देशान्तरे स्वप्नदर्शनमित्याह—**किं चेति**। सर्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान्पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति किं तु शयनदेशे वर्तते तथाऽपि गत्वा स्वप्नदर्शने काऽनुपपत्तिरित्याशङ्क्याऽऽह—**यदि चेति**। अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति—**रात्राविति**। यद्यपि रात्रौ निद्रामुपगतस्तथाऽपि भावानहनि पश्यन्निव तिष्ठति [17]सुप्तः संहृतचक्षुरा[18]दिकरणोऽपि पश्यति। शया[19]नोऽपि पर्यटनं प्रतिपद्यते। यद्यपि सहायविहीनः सुप्तस्तथाऽपि बहुभिः [20]सहायैः स्वप्नानुपलभते। तस्मादुचितस्य काल[21]स्य करणस्य

---

१ ज. °ध्ये सु°। २ ग. °सुषुप्त°। ३ ज. °त न च दे°। ४ झ. इत्याश°। ५ छ. न बहिर्देहा°। ६ च. °प्राप्यदे°। ७ छ. °द्देशे प्रा°। ८ छ. °लो अ°। ९ छ. प्रबु°। १० ख. सुषुप्तोऽ°। ११ च. °हनि भा°। १२ छ. ज. °व च भा°। १३ घ. संवृतेन १४ ग. झ. °शङ्कां प°। १५ ग. त्याह°। १६ ङ. देशाद्ब°। १७ ख. ग. झ. सुषुप्तः। १८ घ. °दिकार° १९ ग. °नो प°। २० क. ग. सहायः। २१ घ. झ. °स्य कार°।

सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्[1]मिथ्यात्वं सिद्धमित्यर्थः। स्वप्नमिथ्यात्वे हेत्वन्तरमाह—यैश्चेति। सहदर्शिभिरगृह्यमाणत्वं[2] स्वप्नद्रष्टुरसंप्रतिपन्नामित्याशङ्क्याऽऽह-गृहीतश्चेदिति। पुरुषान्तरसंवादादर्शनात्तद्दे[3]शान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मि[4]थ्यात्वं सिद्धमित्युपसंहरति—तस्मान्नेति ॥ २ ॥

**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।**
**वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥ ३ ॥**

इतश्च स्वप्नदृश्या[5] भावा वितथाः। यतोऽभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं[6] युक्तितः श्रुतौ "न तत्र रथाः" इत्यत्र। देहान्तःस्थानसंवृतत्वादिहेतुना[7] प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयंज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥ ३ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह—अभावश्चेदिति। न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयंज्योतिष्ट्वमात्मनो दर्शयन्त्या[8] तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभावद्योतकन्यायपुरःसरं श्रूयते। अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्यभावानामस्ति[10] मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति। तथा च स्वप्ने[9] भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः। हेत्वन्तरपरत्वं[11] श्लोकस्य दर्शयति—इतश्चेति। इतःशब्दार्थमेव स्फुटयति—यत इति। ज्ञेयाभावे ज्ञानाभावादर्थाज्ज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं चशब्दः। श्रूयते न तत्रेत्याद्यायां श्रुताविति संबन्धः। न्यायपूर्वकमिति व्याचष्टे—युक्तित इति। योग्यदेशाद्यभावो युक्तिः। तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राऽऽह—तेनेति। अन्तःशरीरमध्यस्थानं[12] नाडीलक्षणम्। तत्रातिसूक्ष्मे संवृतत्वेन संकुचितत्वेनावस्थानं पर्वतादीनामुपलभ्यते ततश्चोचितदेशाभावो[13] योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां[14] भावानां वैतथ्यं तदेव[15] तदनुवादिन्या श्रुत्याऽपि प्रकाशितमित्याहुर्ब्रह्मविदः[16]। जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादासनादिव्यवहारस्य तन्निमित्तत्व[17]संभवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्धारयितुं शक्यते। स्वप्ने पुनः सूर्याद्यभावेऽपि व्यवहारदर्शनात्तस्य च निमित्तापेक्ष्य(क्ष)त्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात्तत्राऽऽत्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं न तत्रे-

१ ग. ज. °त्तन्मि°। २ घ. °णत्वद्र°। °णत्वाद्द्रष्टु°। ३ ख. °नाद्दे°। ४ घ. ङ. °वान्मि°। ५ घ. ङ. °दृश्यभा°। ६ झ. °वैकयु°। ७ झ. 'दितिहे'। ८ ख. °यन्त्यां व°। ९ ख. स्वप्ने द°। १० ग. झ. स्वप्नभा°। ११ ग. °रत्वं। १२ ख. ग. झ. °मध्ये स्था°। १३ छ. °श्चोदित°। १४ घ. ज. झ. °नां वै°। १५ ग. सदेव। १६ घ. ङ. ज. °मिति ब्रह्म°। १७ झ. °त्तत्त्वं सं°।

स्याद्या श्रुतिः । तया तत्परया न्यायसिद्धं[1] स्वप्नमिथ्यात्वमनुवदन्त्या तदं[2]प्रतिपादितमपि प्रकाशितामिष्यते । तथा[3] च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तासिद्धि[4]रित्यर्थः ॥ ३ ॥

**अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।**
**यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥**

**जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा । दृश्यत्वादिति हेतुः । स्वप्नदृश्यभाववदिति दृष्टान्तः । यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं तथा[5] जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः । तस्माज्जागरितेऽपि[6] वैतथ्यं स्मृतमिति निगमनम् । अन्तःस्थानात्संवृतत्वेन[7] च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः । दृश्यत्वमसत्यत्वं[8] चाविशिष्टमुभयत्र ॥ ४ ॥**

उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह—**अन्तःस्थानादिति** । भेदानामित्यत्र सूचितमनुमानमारचयति[9]—**जाग्रदिति** । तृतीयेन पादेन पक्षधर्मत्वं व्याप्तस्य[10] हेतोरुच्यते तद्दर्शयति—**यथेति** । द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूत्रित[11]मित्याह—**तस्मादिति** । सर्वद्वैत[12]वैतथ्यवादिनां केन विशेषेण[13] पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह—**अन्तःस्थानादिति** । स्वप्नदृश्यानामन्तःस्थानं संवृतत्वं च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटम् । सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वम् । जागरितस्य पुनरुचितदेशादिसद्भावादस्फुट[14]मिथ्यात्वमिति पक्षत्वमित्यर्थः । तर्हि सर्वथा वैषम्याद्दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याऽऽह—**दृश्यत्वमिति** ॥ ४ ॥

**स्वप्नजागरि[15]तस्थाने ह्येकमाहुर्मनीषिणः ।**
**भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥**

**प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयो[16]रेकत्वमाहुर्विवेकिन इति पूर्वप्रमाणसिद्धस्यैव फलम् ॥ ५ ॥**

---

१ घ. ज. °सिद्धस्व° । २ घ. °दपि प्र° । ३ ख. °थाऽपि श्रु° । ४ झ. °सिद्धेरि° । ५ घ. ङ. च. ज. झ. तथा जाग° । ६ झ. °ते दृ° । ७ क. °न न च स्व° । ८ ख. घ. ङ. ज. °सत्वं चा° । ९ छ. °मानं र° । १० छ. व्याप्यस्य । ११ ग. छ. झ. सूचित° । १२ घ. द्वैतीयेन पादेन प्रतिकूलप्रभावै° । १३ छ. °शेषणेन प° । १४ ङ. झ. °स्फुटं मि° । १५ क. °रिते स्था° । १६ क. °योरैक्यत्व° ।

स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ[2] जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह—स्वप्नेति । उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह—भेदानामिति । भेदा भिद्यमाना भावाः । तेषामवस्थाद्वयवर्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम् । तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं साधन[3]स्थान[4]द्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति—प्रसिद्धेनैवेति ॥ ५ ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥

इतश्च वैतथ्यं जाग्रद्दृश्यानां[5] भेदानामाद्यन्तयोरभावाद्यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके । तथेमे जाग्रद्दृश्या भेदाः । आद्यन्तयोरभावाद्वितथैरेव[6] मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव तथाऽप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः ॥ ६ ॥

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह—आदाविति । यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धस्वप्नादिभिः समत्वान्मिथ्या[7] कथं तर्हि तेषां घटः सन्पटः सन्नित्यमृषात्वेन प्रतीतिरित्याशङ्क्याऽऽह—वितथैरिति । प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपरत्वं[8] श्लोकस्योपन्यस्यति—इतश्चेति । विमतं मिथ्या[9]ऽऽदिमत्त्वादन्तवत्त्वात्स्वप्नादिवदित्यर्थः । उक्तानुमान[10]द्रढिम्ने[11] व्याप्तिं कथयति—यदादा[12]विति । यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः । व्याप्तिमतः साधनस्य पक्षधर्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं[13] निगमनं दर्शयति—तथेति । अनुमानस्य घटादिषु सत्त्व[14]ग्राहकप्रत्यक्षविरोधमाशङ्क्य सद्गन्धर्वनगरमितिवत्तस्याऽऽपातिकसत्त्वविषयत्वान्नैवमित्याह—तथाऽपीति ॥ ६ ॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

स्वप्नदृश्यवज्जागरित[15]दृश्यानामप्यसत्त्व[16]मिति यदुक्तं तदयुक्तम् ।

१ ग. °प्रजाग° । २ घ. ज. °त्यादिजा° । ३ ख. °धनं स्था° । ४ ग. ज. झ. °नद्व° । ५ छ. °श्यानामा° । ६ झ. °वाद्वि° । ७ छ. °थ्या त° । ८ ख. °र्हि घ° । ९ छ. °रत्वे श्लो° । १० घ. ङ. ज. °थ्याद्यन्तव° । ११ क. °नजडिम्ने । १२ छ. °दावन्त इति । १३ ङ. °चने नि° । १४ क. °त्वसाधक° । १५ क. °रितं दृ° । १६ ग. घ. ज. झ. °सत्यत्वमि° ।

यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादि[1]निवृत्तिं कुर्वन्तो गमनागमनादिकार्यं च सम्प्रयोजना[2] दृष्टाः। न तु स्वप्नदृश्यानां तदस्ति। तस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं[3] मनोरथमात्रमिति। तन्न[4]। कस्मात्। यस्मात्सप्रयोजनता दृष्टा याऽन्नपानादीनां सा स्वप्ने[5] विप्रतिपद्यते। जागरिते हि भुक्त्वा पीत्वा[6] च तृप्तो विनिवर्तिततृट्सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोषितम[7]भुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा चातृप्तोत्थितस्तथा। तस्माज्जाग्रद्दृश्यानां स्वप्ने विप्रतिपत्तिर्दृष्टा। अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः॥ ७॥

स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति किं तु फलपर्यन्तत्वाभावाज्जागरितस्य फलपर्यन्तत्वान्न मिथ्यात्वमित्याशङ्क्याऽऽह—**सम्प्रयोजनतेति**। फलपर्यन्ततारा हित्योपाधेः साधनव्यापकत्वे फलितमाह—**तस्मादिति**। जाग्रद्दृश्या भावा बहूक्त्या[11] गृह्यन्ते। श्लोकस्य व्यावर्त्यामुपाध्याशङ्कामुत्थापयति[12]—**स्वप्नेति**। जाग्रद्दृश्यानामिव स्वप्नदृश्यानामपि[13] तुल्यं सप्रयोजनत्वमित्युपाधेरसंभवमा[14]शङ्क्याऽऽह—**न त्विति**। अनुमानस्य सोपाधिकत्वेनासाधकत्वे फलितमाह—**तस्मादिति**। हेतोः सोपाधिकत्वं[15] दूषयति—**तन्नेति**[16]। साधनव्याप्त्यादिदोषादृते नोपाधिनिरसनं सुशकमित्याह[17]—**कस्मादिति**। फलपर्यन्ततावि[18]रहित्वो[19]पाधेः साधनव्याप्तिमाह—**यस्मादित्यादिना**। तामेव विप्रतिपत्तिं प्रकटयति—**जागरिते हीति**। उक्तमर्थं दृष्टान्तेन[20] स्पष्टयति—**यथेत्यादिना**। उपाधेः साधनव्याप्तिं निगमयति—**तस्मादिति**। हेतोः[21] सोपाधिकत्वाभावे फलितमाह—**अत इति**। हेतुद्वयमुपसंहरति—**तस्मादिति**॥ ७॥

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्।
तानयं प्रेक्षते गत्वा यथैवेह[22] सुशिक्षितः॥ ८॥

स्वप्नजाग्रद्भेदयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत्।

---

१ छ. °सानि°। २ छ. °जनता दृ°। ३ च. °सत्यत्वं म°। ४ क. तत्र क.। ५ छ. °प्ने प्र°। ६ क. °त्वा चातृ°। झ. °त्वा तृ°। ७ छ. °मनुभु°। ८ ख. °त्वा च तृ°। घ. ङ. च. °त्वा तृ°। ९ क. °प्नेऽपि वि°। १० च. °दृश्यतेऽतो°। ११ ग. झ. बहुयुक्त्या। १२ ख. °मुपपादय°। १३ ज. °श्यानां तु°। १४ क. °वामित्याश°। १५ छ. °कत्वे दू°। १६ क. तत्रेति। १७ क. °त्याशङ्क्याऽऽह। १८ क. °हिसोपा°। ख. ग. झ. °हितत्वोपा°। १९ छ सिफलमा°। २० क. °न स्फुटय°। २१। ग. हेतोरौपा°। २२ क. यदैवे°।

कस्मात् । दृष्टान्तस्यासिद्धत्वात् । कथम् । न हि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते । किं तर्हि । अपूर्वं स्वप्ने पश्यति चतुर्दन्त[1]गजमारूढमष्टभुजमात्मानं मन्यते । अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने । तन्नान्येनासता[2] सममिति सदेव । अतो दृष्टान्तोऽसिद्धः । तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम् । तन्न । स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः सिद्धम् । किं तर्हि । अपूर्वंस्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः । यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः । न स्वतःसिद्धो द्रष्टुः स्वरूपवत् । तानेवंप्रकारानपूर्वान्स्वचित्तविकल्पानयं स्थानी स्वप्नदृक्स्वप्नस्थानं गत्वा प्रेक्षते । यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान्पदार्थान्पश्यति तद्वत् । तस्माद्यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वमतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥ ८ ॥

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति—**अपूर्वमिति** । यथा स्वर्गनिवासनशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वस्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः । तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः । कथं तेनैव दृष्टं तत्राऽऽह—**तानयमिति** । यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रत्यान्पदार्थान्वीक्षते तथाऽयं स्वप्नद्रष्टा स्वप्नगतान्पदार्थान्यथोक्तप्रकारान्प्रतिपद्यते । ततश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः । श्लोकैक्यावर्त्यामाशङ्कामुपन्यस्यति—**स्वप्नेति** । समत्वमाद्यन्तवत्त्वादि । अनुमानसिद्धस्यार्थस्यानुमानदोषोक्तिमन्तरेणासत्त्वमयुक्तमिति पृच्छति—**कस्मादिति** । व्याप्तिभूमिं दूषयन्व्याप्तिभङ्गं दोषमाह—**दृष्टान्तस्येति** । असिद्धत्वं प्रश्नपूर्वकं विशदयति—**कथमित्यादिना** । अपूर्वदर्शनमेव विवृणोति—**चतुर्दन्तमिति** । अन्यदपि त्रिनेत्रत्वादि । दृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह—**तस्मादिति** । दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति—**तन्नेति** । तर्हि-

१ ग. घ. ङ. च. छ. °दंन्तं ग° । २ च तत्रान्ये° । ३ क. °देवातो दृ° । ४ क. तत्र स्व° । ५ क. तत्तु स्वतः । ६ ख. च. छ. ज. झ. °र्धमित्यपूर्वं स्था° । ७ घ. ङ. च. ज. झ. °व स्व° । ८ क. °काशन° । ९ ज. °नीयस्व° । १० ज. झ. °शितं दे° । ११ घ. ङ. च. ज. झ. °त्वा पश्य° । १२ घ. ङ. ज. °णां च स्था° । १३ झ. °स्राक्षादि° । १४ झ. °पूर्वं स्व° । १५ °ति । तथै° । १६ क. °त्नग° । १७ छ. °सर्पव° । १८ छ. °कस्य व्या° । १९ ग. ङ. छ. झ. °दिति । अ° । २० क. °पूर्वं द° । २१ घ. ज. °नुपप° ।

स्वभावतः सिद्धं परतो वा। नाऽऽद्यः। जडस्य तदयोगादित्याह—न तदिति। द्वितीये तन्मिथ्यात्वमित्यभिप्रेत्य प्रश्नपूर्वकमाद्यपादमवतारयति—किं तर्हीति। तद्गतान्यक्षराणि व्याकरोति—स्थानिन इति। अपूर्वस्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टान्तेन साधयति—यथेत्यादिना। अपूर्वदर्शनं स्वप्नद्रष्टृधर्मोऽपि चैतन्यवत्किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमित्याह—न स्वत इति। उत्तरार्धं विभजते—तानित्यादिना। अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेऽपि किमायातमित्याशङ्क्याऽऽह—तस्मादिति। स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति—अतो नेति। पूर्वस्यापूर्वस्य वा स्वप्नदर्शनस्य स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वाद्दृष्टान्ते साध्यसंप्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः ॥ ८ ॥

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्।
बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥

**अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह—स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसंकल्पितमसत्। संकल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टम् ॥ ९ ॥**

जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते—स्वप्नवृत्ताविति। श्लोकस्य तात्पर्यार्थमाह—अपूर्वत्वेति स्वप्नदृष्टान्तस्यापूर्वदर्शनेस्वप्रयुक्तां साध्यविकलत्वशङ्कां परिहृत्येति यावत्। स्वप्नस्थाने सर्वस्य मिथ्यात्वा-

---

१ ख. छ. झ. स्वतः। २ घ. सिद्धिं किं वा प°। ३ ख. ज. झ. °द्धं किं वा प°। ४ ख. ङ. छ. ज. झ. °त्वसिद्धिरित्य°। ५ घ. ङ. झ. °र्वस्य स्व°। ६ ग. झ. °ति। तथे°। ७ ज. °प्नदृष्टध°। ८ छ. °द्रष्टृध°। ९ ज. °त्वे कि°। १० क. °ति। अपूर्वस्यानपू°। ११ क. °सित्वा°। १२ घ. च. °त्ताऽप्यन्त°। १३ ज. झ. °वप्यन्त। १४ घ. ज. झ. °ल्पितमस°। १५ च. ज. ङ. झ. °श्चेतसा गृ°। १६ च. °तं सदसतोवैतथ्यं दृष्टम् ॥ ९ ॥ १७ झ. °पि स्था°। १८ ज. °सत्कल्पनान°। १९ घ. ङ. च. झ. °कल्पनान°। २० च. °न्तरं स्वप्नस°। २१ च. °मेव द°। २२ च. °तसां गृ°। २३ छ. °सत्वमि°। २४ च. °ततया वैत° २५ घ. ङ. च. ज. झ. °म् ॥ ९ ॥ अ°। २६ घ ज. मिथ्यात्वे। २७ ज. °र्शनात्प्रयु°। २८ घ. °नवत्प्रयु°। २९ घ. ज. पूर्वस्य। ३० ख. °र्वस्यापूर्वस्य।

विशेषेऽपीत्यर्थः । असत्त्वं[1] परमार्थसाद्विलक्षणत्वेन[2] मिथ्यात्वम् । तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह—उभयोरिति ॥ ९ ॥

जाग्रद्वृत्तावपि[3] त्वन्तश्चेतसा कल्पितं[4] त्वसत् ।
बहिश्चेतोगृहीतं[5] सद्युक्तं वैतथ्यमेतयोः[6] ॥ १० ॥

सदसतोर्वैतथ्यं युक्तम् । अन्तर्बहिश्चेतःकल्पितत्वाविशेषादिति । व्याख्यातमन्यत् ॥ १० ॥

दार्ष्टान्तिकमाह—जाग्रदिति । युक्तत्वे हेतुमाह—अन्तरिति[7] । श्लोकस्थानामक्षराणां व्याख्यानमनपेक्षितं व्याख्यातप्रायत्वादित्याह—व्याख्यातमिति ॥ १० ॥

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ॥
क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः ॥ ११ ॥

चोदकश्चाऽऽह—स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं[8] क एतानन्तर्बहिश्चेतःकल्पितान्बुध्यते । को वै तेषां विकल्पकः । स्मृतिज्ञानयोः क आलम्बनमित्यभिप्रायः । न[9] चेन्निरात्मवाद इष्टः[10] ॥ ११ ॥

सर्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या[11] विशेषमाशङ्कते[12]—उभयोरिति । [13]कर्तृकरणैर्व्यवस्थानुपपत्त्याऽपि[14] विरोधोऽस्तीत्याह—को वा इति । विकल्पको निर्मातेति यावत् । श्लोकस्य चोद्यपरत्वं प्रतिजानीते—चोदक इति । अक्षरयोजनया प्रथमार्थापत्तिविरोधं स्फोरयति[15]—स्वप्नेति । चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं[16] स्फुटयति—को वै तेषामिति । कर्ता हि पूर्वानुभूतं[17] स्मृत्वा तज्जातीयान्निर्मिमीते तेन[18] स्मृत्यनुभवाश्रयाक्षेपेण कर्त्राक्षेपो विवक्षितस्तथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः । योऽध्यात्मं प्रमाता यश्चाधिदैवं[19] कर्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात्प्रमात्रादेरसत्त्वमित्याशङ्क्याऽऽह[20]—न चेदिति । यदि प्रमाता कर्ता वा नेष्यते तर्हि नैरा-

---

१ घ. ङ. ज. असत्यात्वं । २ क. °र्थेतद्वि° । ३ घ. ज. झ. °वप्यन्त° । ४ घ. ज. झ. °ल्पितमस° ५ घ. ज. झ. °श्चेतसा गृ° । ६ घ. ज. झ. तं हि सत्सदसतोर्वैतथ्यं युक्तम् । ७ ख. घ. ङ. ज. °न्त इति । ८ च. थ्यं तर्हि क° । ९ च. नो । १० क. °ष्टः स्यादिति ॥ ११ ११ ग. ज. झ. °त्याऽपि विरोधमा° । १२ ख. घ. ङ. छ. विरोधमा° । १३ ग. छ. झ. °र्तृकार्यक° । १४ ख. घ. ङ. °णकार्यव्य° । १५ ज. स्फोटयति । १६ ख. ग. घ. °धं स्फोट° । १७ क. °नुवृत्तं स्मृ° । १८ क. °तेऽनुस्मृ° । १९ घ. °दैवक° । २० घ. °सत्यत्वमि° ।

त्म्यमिष्टमेवाऽऽपद्यते । न च तदेष्टुं[1] शक्यत आत्मानिराकरणस्य[2] दुष्करत्वान्निराकर्तुरेवाऽऽत्मत्वादित्यर्थः ॥ ११ ॥

**कल्पयत्यात्मनाऽऽत्मानमात्मा[3] देवः स्वमायया ।**
**स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥ १२ ॥**

**स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन् । स्वयमेव च[4] तान्बुध्यते भेदांस्तद्वदेवेत्येवं वेदान्तनिश्चयः । नान्योऽस्ति ज्ञानस्मृत्याश्रयः । न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥ १२ ॥**

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति—**कल्पयतीति** । करणान्तरं व्यवच्छिनत्ति[5]—**आत्मनेति** । कर्मान्तरं व्यावर्तयति—**आत्मानमिति** । कर्त्रन्तरं निवारयति—**आत्मेति** । तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति—**देव इति** । विवर्तवादं द्योतयति—**स्वमाययेति** । सर्वस्य मिथ्यात्वेऽपि मायया[6] विकल्पितभेदानुरोधेन कर्तृत्वादिव्यवस्था[7] सिध्यतीति भावः । प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह—**स एवेति** । एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिकभेदनिबन्धना सर्वा व्यवस्थेत्यत्र प्रमाणमाह—**इति वेदान्तेति** । यथा घटस्रष्टा कुलालोऽधिष्ठाता मृदोऽन्यो दृष्टो न तथेहान्योऽधिष्ठाताऽस्तीत्याह—**स्वयमिति** । यथा तत्र मृदाख्यमुपादानमधिष्ठातुरन्यदधिगतं न तथाऽत्रान्यदुपादानमस्तीत्याह—**स्वमात्मानमिति** । तत्र च घटं कुर्वतो भूभागो भवत्याधारो[8] न तथेहाऽऽधारोऽन्योऽस्तीत्याह[10]—**आत्मन्येवेति** । परिणामवादं व्यावर्त्य विवर्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह—**रज्ज्वादाविति** । मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्त्वा तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह—**स्वयमेव चेति** । न च प्रमातृत्वस्य तात्त्विकत्वं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्धारणादित्याह—**तद्वदिति**[11] । कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे नेह नानाऽस्तीत्यादिश्रुतिं प्रमाणयति—**इत्येवमिति** । स एवेत्येवकारार्थमाह—**नान्योऽस्तीति** । यो जगत्स्रष्टा यश्च प्रमाता ततोऽन्यो[12] ज्ञानस्य स्मृतेश्चाऽऽश्रयो नास्ति । चेतनभेदे मानाभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य[13] प्रसिद्धत्वादित्यर्थः । ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्याशङ्क्याबाधितप्रसिद्धिविरोधान्नैवमित्याह—**न चेति** ॥ १२ ॥

---

१ क. तद्द्रष्टुं । २ क. °नि क° । ३ क. °मात्मदेहः स्व° । ४ छ. च तांस्त° । ५ क. °छिनत्तिकर्त्रं° । ६ ज. मायावि° । ख. ग. छ. झ. मायाक° । ७ क. °वहारः सि° । ८ ज. °धाऽन्य° । ९ क. °धारस्तथे° । १० ख. °स्तीह° । ११ ग. झ. °ति–एव° । १२ क. °तोऽन्यज्ञा° । १३ छ. °त्वप्र° ।

विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान् ।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥

संकल्पयन्केन प्रकारेण कल्पयतीत्युच्यते। विकरोति [3]नाना करोत्यपराँल्लौकिकान्भावान्पदार्थाञ्शब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतान्नियतांश्च पृथ्व्यादीननियतांश्च कल्पन(ना)कालान्बहिश्चित्तः संस्तथाऽन्तश्चित्तो मनोरथादिलक्षणानित्येवं कल्पयति। प्रभुरीश्वर आत्मेत्यर्थः ॥ १३ ॥

प्रकृतायां कल्पनायां विवक्षितं क्रममुपन्यस्यति—**विकरोतीति** । नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते प्रति[6]पि[7]त्सितक्रमप्रतिपत्त्यर्थं पृच्छति—**संकल्पयन्निति**। श्लोकाक्षरयोजनया बुभुत्सितं क्रमं प्रत्याय[य]ति—**उच्यत इत्यादिना** । **अन्यांश्चेति** । शास्त्रीयानिति यावत् । चित्तमध्ये वासनारूपेण व्यवस्थितान् । अनभिव्यक्तनामरूपत्वेन व्यवहारायोग्यत्वमाह—**अव्याकृतानिति** । कल्पनाका[12]लान्विद्युदादीनस्थिरानित्यर्थः । बहिश्चित्तो बहिर्मु[13]खो बाह्यान्व्यवहारयोग्यान्पदार्थान्कल्पयति । अन्तश्चित्तस्तु तेभ्यो व्या[14]वृत्तबुद्धिर्मनोरथादिलक्षणानात्म[15]न्यवस्थितान्भावान्व्यवहा[16]रायोग्यान्कल्पयित्वा पुनर्बहिर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः । एतदुक्तं भवति । यथा लोके कुलालो वा तन्तुवायो वा घटं प[19]टं वा कार्यं चिकीर्षुरादौ व्यवहा[20]रायोग्यां व्यक्तिं बुद्धावाविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां संपादयति । तथैवायमादिकर्ताऽपि मायालक्षणे स्वचि[21]त्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान्स्रष्टव्यपदार्थान्प्रथमं सिसृक्षिताकारेणान्तर्विभाव्य पश्चाद्बहिः सर्वप्रतिप[22]त्तृसाधारणरूपेण संपादयतीति कल्पनायां क्रमाधिगतिरिति ॥ १३ ॥

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः ।
कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥ १४ ॥

स्वप्नवच्चि[23]त्तपरिकल्पितं सर्वमित्ये[24]तदाशङ्क्यते । यस्माच्चित्तपरिकल्पि-

---

१ छ. स क° । २ च. °तीत्येवेत्यु° । ३ ज. °ना क° । ४ च. °लाद्बहि° । ५ ग. °यां वि° । ६ ग. झ. °तिपत्सि° । ७ क. ग. घ. ङ. °पिपित्सि° । क. °ति कः सं° । ९ घ. ङ. ज. °त्सितक्र° । १० क. °तानभि° । ११ क. °हारयो° । १२ ख. °कालीनान्वि° । १३ क. °मुखान्बाह्या° । १४ क. व्यावर्तबु° । १५ घ. ङ. ज. झ. °थाना° । १६ क. °त्मव्यव° । १७ क. घ. ज. °हारयो° । १८ क. °नर्व्य° । १९ छ. झ. °टं का° । २० ख. ग घ. ज. झ. °हारयो° । २१ ज. °चित्तना° । २२ क. °पत्तिसा° । २३ छ. °त्तक° । २४ ङ. °ल्पेवं त° । २५ क. झ. °शङ्कते ।

तैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योन्यपरिच्छेद्यत्वमिति सा न युक्ताऽऽशङ्का। चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्याः। नान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः। कल्पनाकाल एवोपलभ्यन्त इत्यर्थः। द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्याः। यथाऽऽगोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते। तावानयमेतावान्स इति परस्परपरिच्छेद्यपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकालाः। अन्तश्चित्तकाला बाह्याश्च द्वयकालाः कल्पिता एव ते सर्वे। न बाह्यो द्वयकालत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अत्रापि हि स्वप्नदृष्टान्तो भवत्येव ॥ १४ ॥

कल्पितानां कल्पनाकालादन्यस्मिन्काले सत्त्वाभावाज्जाग्रद्भावानां च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याऽऽह—चित्तेति। ये कल्पनाकालभाविनो भावा मनस्यन्तर्वर्तन्ते ये च प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति। प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः। कल्पितेऽपि तद्दर्शनादित्यर्थः। श्लोकव्यावर्त्यामाशङ्कां दर्शयति—स्वप्नवदिति। यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्यैवेष्यते तथा जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मिथ्यैवेत्येतन्नाद्यापि निर्धारितमित्यत्र हेतुमाह—यस्मादिति। आत्माविद्याविवर्तेन चित्तेन तावदन्तर्विनिर्मिता मनोरथरूपा मनस्यन्तर्वर्तमाना बही रज्जुसर्पादयश्च ते चित्तेनैव परिच्छिद्यन्ते। ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते। तैः सह वैलक्षण्यं मनसो बहिर्जाग्रद्दृश्यमानानां भावानामन्योन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञागोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः। श्लोकाक्षरैरुत्तरमाह—सा नेति। ये मनस्यन्तर्मनोरथरूपा भावास्ते चित्तकाला भवन्तीत्यत्र चित्तकालत्वं विशदयति—चित्तेत्यादिना। वाच्यार्थमुक्त्वा विवक्षितार्थमाह—कल्पनेति। द्वितीयपादमवतार्य व्याकरोति—द्वयेति। ये मनसो बहिरुपलभ्यन्ते ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति

---

१ क. बाह्यः कालद्वयत्व°। २ घ. °नात्का°। ३ क. °पन्ने ते°। ४ घ. लविभा°। ५ घ. °हारायो°। ६ क. °षवस्तु°। ७ छ. °पि तत्त्वे तु त°। ८ झ. °न्तर्निर्मि°। ९ झ. °नोरू°। १० छ. °रिच्छेद्य°। ११ ज. °न्तेऽहि°। १२ क. °ज्ञानगो°। १३ क. येन। १४ क. लत्वे वि°। १५ झ. येन। १६ ख. ग. ज. झ. °न्ते भे°। १७ घ. °षां ते°।

व्युत्पत्तेः । ततश्चान्येन पूर्वेणान्येन चापरेण परिच्छेद्या भिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमाना इत्यर्थः । प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति—**यथेति** । आगोदोहनं गोदोहनपर्यन्तमास्ते देवदत्तास्तिष्ठतीति प्रत्यभिज्ञाशेषत्वेनाभिज्ञोदाहरणीया यावता कालेनावच्छिन्नो वर्तते तावता कालेनावच्छिन्नो गोदोहनं निर्वर्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति—**यावदिति** । यावता कालेनायं घटोऽर्थक्रियां निर्वर्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेष तिष्ठतीत्युदाहरणान्तरमाह—**तावानिति** । परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्त्य निर्वृणोत्येतावता कालेनावच्छिन्नः स तिष्ठतीत्यपरमुदाहरणमाह—**एतावानिति** । उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य च परिच्छेदकत्वम् । तथा च ते सर्वे भावा बहिर्दृश्यमाना द्वयकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः । तृतीयपादं व्याचष्टे—**अन्तरिति** । चतुर्थपादार्थमाह—**नेत्यादिना** । बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितो द्वयकालत्वेन कालद्वयावच्छेदेन कृतः प्रत्यभिज्ञायमानस्वरूपो विशेषोऽन्यहेतुको न भवति । कल्पितेऽपि तथाविधविशेषसंभवादित्यत्र दृष्टान्तमाह—**अत्रापि हीति** । यद्यपि सर्वं जाग्रद्भेदजातं कल्पितं तथाऽपि तत्र यथोक्तो विशेषः स्फुटः सिध्यति स्वप्ने सर्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः ॥ १४ ॥

**अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।**
**कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥**

यदप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषो नासौ भेदानामस्तित्वकृतः स्वप्नेऽपि तथा दर्शनात् । किं तर्हीन्द्रियान्तरकृत एव । अतः कल्पिता एव जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम् ॥ १५ ॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वं स्फुटास्फुटावभासविभागानुपपत्तेर्नाविशेषेण मिथ्यात्वमित्याशङ्क्याऽऽह—**अव्यक्ता इति** । ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्वे मनःस्पन्दनमात्रत्वेन कल्पिताः । मिथ्यैवान्तर्बहिरिन्द्रियभेदनिमित्तः स्फुटत्वास्फुटत्वविशेषः । न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते ।

---

१ ज. °न. वा प° । २ घ. °रिच्छिद्य भि° । ३ क. यद्यप्य° । भ. च. योऽप्य° । छ. येऽप्यो° ४ ङ. च । ५ ख. °न्तरग्राह्याणां वि° । ६ क. एवान्तः कृ° । ७ ग. घ. ङ. च. झ. °योर° । ८ ग. ज. °टाव° । ९ क. °पन्नेनावि° । १० घ. °त्तेर्नो विशेषणमि° । ११ ङ. °ति । म° । १२ ग. °न्दमा°

मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः । श्लोकाक्षराणि व्याकरोति—यदपीत्यादिना । मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वम् । तत्र हेतुमाह—मन इति । चक्षुरादिग्राह्यत्वेन मनसो बहिर्भावानां स्फुटत्वं दृष्टं तदेषाममिथ्यात्वकृतमिति शङ्कां वारयति—नासाविति । सर्वसंप्रतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वास्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वममिथ्यात्वं वा प्रयोजयितुं प्रभवतीत्याह—स्वप्नेऽपीति । अयं विशेषस्तर्हि केन सिध्यतीत्याशङ्क्य चतुर्थपादार्थमाह—किं तर्हीति । मनोमात्रसंबन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वम् । बहिर्भावानां तु चक्षुरादिबहिरिन्द्रियसंबन्धाद्युक्तं स्फुटत्वं तदेष विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः । स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि संभवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति—अत इति ॥ १९ ॥

जीवं कल्पयते पूर्वं ततो भावान्पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥ १६ ॥

बाह्याध्यात्मिकानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायां किं मूलमिति । उच्यते । जीवं हेतुफलात्मकम् । अहं करोमि मम सुखदुःखे इत्येवंलक्षणम् । अनेवंलक्षण एव शुद्ध आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम् । ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान्भावान्बाह्यानाध्यात्मिकांश्चैव कल्पयते । तत्र कल्पनायां को हेतुरित्युच्यते । योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति । अतो हेतुकल्पनाविज्ञानात्फलविज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानं तदर्थक्रियाकारकतत्फलभेदविज्ञानानि तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानीत्येवं बाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥ १६ ॥

भवतु सर्वस्य कल्पितत्वम् । सा पुनः सर्वकल्पना केन द्वारेणेत्याशङ्क्याऽऽह—

---

१ छ. °ति । येऽपी° । २ ङ. °त्वं प्र° । ३ घ. ज. °नां च° । ४ च. °विध्यस्त° । ५ ख. ग. ङ छ. ज. °ह्यःनामाध्या° । ६ घ °नायाः किं । ७ ख. घ. ङ. छ. ज. सुखं दुःखमित्ये° । च. सुखेत्ये° । ८ क. °नेनैवं । ९ च. °ति स य° । १० घ. °स्तथा° । ११ छ. °तिश्च । १२ ख. घ. ङ. ज. °ज्ञानमित्ये° । १३ क. °नानि तेभ्यस्तत्स्मृतिस्तत्स्मृतिश्च पुनस्तज्ज्ञानानी° । १४ ज. झ. °नामाध्या° ।

जीवमिति। आत्मा हि सर्वं मायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति। तत इति। तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवभावमापद्यते[1]। तद्वारेण पुनर्नानाविधान्भावान्निर्मिमीते। ज्ञानस्मृतिवैषम्यात्तत्कल्प्येषु[2] भावेषु वैषम्योपपत्तिरित्यर्थः। श्लोकव्यावर्त्यं प्रश्नमुत्थापयति—बाह्येति[3]। पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखं[4] दुःखं ज्ञानं रागश्चेत्येवमादयस्त्वाध्यात्मिकास्तेषां परस्परं[5] निमित्तनैमित्तिकताऽस्ति। बाह्यान्निमित्तीकृत्याऽऽध्यात्मिका भवन्ति। तानपि निमित्तीकृत्येतरे जायन्ते। तदेवमितरेतरनिमित्ततयाँ[7] नैमित्तिकतया च कल्पनायां मूलं[8] वक्तव्यम्। निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः। श्लोकाक्षरयोजनया परिहरति—उच्यत इति। हेतुफलात्मकमित्युक्तमेव व्यनक्ति—अहमिति। हेतुफलभावविकलं परिशुद्धमात्मरूपं[9] जीवकल्पनाधिष्ठानं दर्शयति—अनेनैवमिति(?)। आरोपस्याधिष्ठानापेक्षाऽस्तीत्यत्र दृष्टान्तमाह—रज्ज्वामिवेति। द्वितीयतृतीयपादौ विभजते—तत्र[10] इति। तादर्थ्येन प्रथमं कल्पितस्य[11] भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः। यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथाऽपि तैस्थं तत्र कल्पनाविशेषो[12] विशेषहेतुव्यतिरेकेण[13] न संभवतीति शङ्कते—तत्रेति। चतुर्थपादेनोत्तरमाह—उच्यत इति। कल्पितो विशिष्टरूपेणेति[14] शेषः। अधिकृतः[15] स्वामित्वेन संबद्ध[16] इत्यर्थः। इतिशब्दः श्लोकाक्षरयोजनासमाप्तिद्योतनार्थः। प्रकृतकल्पनामेव प्रपञ्चयति—अत इत्यादिना। सत्यन्नपानाद्युपयोगे तृप्त्यादि[18] भवति। असति न भवतीत्यन्वयव्यतिरेकरूपेण[19] न्यायाद्भोजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यते। ततस्तृप्त्यादिकं[20] फलमिति कल्पनाविज्ञानं जायते। ततोऽपरेद्युरुक्तयोरुभयोरपि[21] हेतुफलयोः स्मृतिरुद्भवति। ततश्च फलसाधनसमानजातीये[22] कर्तव्यताविज्ञानम्। ततश्चाभिलषिततृप्त्यादिफलार्थत्वेन[23] पाकादिक्रिया तत्कारकं[24] तण्डुलादि तत्फलान्ननिष्पत्त्यादीनि[25] विशेषविज्ञानादीनि[26] भवन्ति। ततो हेत्वादिस्मृतिः। ततस्तदनुष्ठानम्। ततश्च फलम्। इत्यनेन क्रमेण मिथो हेतुहेतुमत्तया[27] कल्पना भवतीत्यर्थः। प्रकृतां कल्पनामुपसंहरति—एवमिति ॥ १६ ॥

---

१ ख. घ. °यते। त°। २ क. ग. घ. छ. झ. °त्कल्पेषु°। ३ ग. घ. ङ. छ. ज. बाह्यात्ममिति। झ. बाह्याध्यात्मिकानामिति। ४ क. सुखदुः° ५ ज. °रं नै°। ६ ज. °त्तनै°। ७ घ. °था च। ८ ख. °लं च व°। ९ क. °शुद्धात्म°। १० ज. तत्र। ११ क. °स्य क°। १२ ग. °शेषहे°। १३ घ. विशेषरू°। १४ ङ. °ति विशे°। १५ ग. छ. झ. °कृत्वा स्वा°। १६ क. बन्धेन संबद्ध। १७ क. °रपरयो°। ग. ध. °रस°। १८ ख. छ. °दि संभ°। १९ ख. °पाभ्यां यद्भो°। छ. °पाद्भो°। २० क. °तस्तुष्ट्यादि°। २१ घ. ङ. ज झ. °रुभ°। २२ क. °धनास°। २३ क. त्वे पा°। २४ क. °रकत°। छ. °रकारान्तरत°। २५ ख. °लान्यन्नानि°। २६ ख. ग. ङ. छ. ज. °नानि°। २७ छ. ज. °तुम°।

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः॥ १७॥

तत्र जीवकल्पना सर्वकल्पनामूलमित्युक्तं सैवं[1] जीवकल्पना किंनिमित्तेति दृष्टान्तेन प्रतिपादयति—यथा लोके स्वेन रूपेणानिश्चिताऽनवधारितैवमेवेति रज्जुर्मन्दान्धकारे किं सर्प उदकधारा दण्ड इति[2] वाऽनेकधा विकल्पिता भवति पूर्वं स्वरूपानिश्चयनिमित्तम्। यदि[3] हि पूर्वमेव रज्जुः[4] स्वरूपेण निश्चिता स्यात्। न सर्पादिविकल्पोऽभविष्यत्[5]। यथा स्वहस्ताङ्गुल्यादिषु[6] एष दृष्टान्तः। तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया[7][8] स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदां सिद्धान्तः॥ १७॥

इदानीं जीवकल्पनानिमित्तं निरूपयति—अनिश्चितेति। श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्तयति—तत्रेति। पूर्वश्लोकः सप्तम्यर्थः। जीवकल्पनाया नित्यत्वायोगात्सनिमित्तत्वस्य वक्तव्यत्वात्तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः। अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूताऽपि कल्पना नावकल्प्यत इत्याशङ्क्ते[10]—सैवेति। उत्तरत्वेन श्लोकाक्षराण्यवतार्य व्याचष्टे—दृष्टान्तेनेति। स्वप्रसाधारणं रूपं रज्जुत्वं तेनेति यावत्। अनवधारितत्वमेव स्फोरयति—एवमेवेति। रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः। उक्तावधारणाराहित्ये कारणं सूचयति—मन्देति। पूर्वं रज्जुस्वरूपनिश्चयात्प्रागवस्थायामित्यर्थः। सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति—स्वरूपेति। एतदेव व्यतिरेकद्वारा विवृणोति—यदि हीति। देवदत्तस्य हस्ताद्यवयवेषु[11] तद्रूपेणैव निश्चितेषु सर्पादि[12]विकल्पो यथा नोपलभ्यते तथा पुरोवर्तिन्यपि रज्जुस्वरूपेण[13] निश्चिते नासौ युक्तस्तथा च रज्ज्वज्ञानादेव[14][15] स भवतीत्यर्थः। उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिदधानश्चतुर्थपादार्थमाह[16]—एष[17] इति। हेतुफलादीत्यादिशब्देन कर्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति—स्वेनेति। अनारोपितेनेति यावत्। विज्ञप्तेर्विशुद्धत्वं जन्मादिराहित्य-

१ छ. °व क°। २ झ. °ति चाने°। ३ च. °दि पू°। ४ क. °ज्जुः सर्पेण। ५ क. °ष्यत्। स यथा स्व°। ६ ज. श. च °दिष्वेवं ह°। ७ क. तद्वे°। ८ च. °क्षणः स्वे°। ९ छ. निमित्तत्वा°। १० ग. °शङ्क्यते। ११ ग. घ. ङ. ज. झ. °स्ताव°। १२ घ. °दिक°। १३ ङ. ञ. झ. °ज्जुरू°। १४ क. रज्जुज्ञा°। १५ क. °व भ°। १६ क. छ. °भिसंद°। १७ घ. ङ. एवमिवि। ज. एवमपि हे°।

माकारान्तरशून्यत्वं तन्मात्रत्वं चेत्यर्थः । तन्मात्रत्वमयुक्तं सामान्यविशेषभावादित्याशङ्क्याऽऽह—सत्तेति । न च तत्रान्यदस्ति सुखमिति मत्वा विशिनष्टि—अद्वयेति । सच्चिदानन्दाद्वयात्माविद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति—इत्येष इति । अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते यत्र हि द्वैतमिव भवतीत्याद्याश्च द्वैततत्प्रातिभासयोर्मृषात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः ॥१७॥

**निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।**
**रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥**

रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा "नेति नेति" इति सर्वसंसारधर्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्यालोककृतात्मविनिश्चयः "आत्मैवेदं सर्वम्" "अपूर्वोऽनपरोऽनन्तरोऽबाह्यः" "सबाह्याभ्यन्तरो ह्यजः" "अजरोऽमरोऽमृतोऽभय एक एवाद्वयः" इति ॥ १८ ॥

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन(ण)दर्शयति—निश्चितायामिति । रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्वथा निवर्तते रज्जुमात्रं चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा संपद्यते तदा सर्वस्याऽऽत्माविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवाऽऽत्मतत्त्वं परिशिष्यते । तस्मादात्माविद्याविजृम्भिता जीवकल्पनेत्यर्थः । दृष्टान्तभागं व्याचष्टे—रज्जुरिति । तद्वदित्यादि व्याकरोति—तथेति । सर्वस्यापि संसारात्मनो धर्मस्याऽऽत्मन्यारोपितस्यासत्त्वावेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एवाद्वितीयः शिष्यते । द्वैतं पुनः सर्वमेव व्यावृत्तं भवतीत्यर्थः । आत्मविनिश्चयमेव विशिनष्टि—आत्मैवेति । सर्वमिदमात्मैवेत्युक्तेः पूर्णत्वं तस्योच्यते पूर्वभाविना कारणेन संस्पर्शशून्योऽपूर्वः पश्चाद्भाविना कार्येण संबन्धविधुरोऽनपरमनन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसस्तस्यैव प्रत्यक्त्वमबाह्यत्वं कार्यकारणास्पृष्टमुभयकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह—सबाह्येति । विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थम् । जन्मादिसंबन्धाभावे कारणमविद्यासंबन्धराहित्यं दर्शयति—अभय इति । न खल्वविद्या तत्र कारणत्वेन संबन्धमनुभवति । तस्य पूर्णत्वेन कारणानपेक्षत्वादित्याह—एक इति । द्वैताद्वैतव्यावृत्त्यर्थमवधारणं न विद्यायाः । निराश्रयत्वोपपत्तेः । आश्रयान्तरस्य चासत्त्वात् । तत्रैव सा प्रविशतीति

---

१ क. °शेषभा° । २ घ. °द्याल° । ३ ख. ङ. छ. °तत्र तत्रो° । ४ क. °समानयो° । ५ ञ. °न्ते ना° ।

चेत्सत्यम्। अविद्वद्दृष्ट्या तस्यास्तत्र प्रवेशोऽपि वस्तुदृष्ट्या नासौ तस्मिन्प्रवेष्टुं प्रभवतीत्याह—अद्वय इति ॥ १८ ॥

**प्राणादिभिरनन्तैश्च भावै[1]रेतैर्विकल्पितः।**
**मायैषा तस्य देवस्य यया संमोहितः स्वयम् ॥ १९ ॥**

**यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति। उच्यते। शृणु मा[2]यैषा तस्याऽऽत्मनो देवस्य। यथा मा[3]याविना विहि[4]ता माया गगनम[5]तिविमलं कुसुमितैः स[6]पलाशैस्तरुभिराकीर्णमिव करोति तथेयमपि देवस्य माया[7] ययाऽयं स्वयमपि मोहित इव मोहि[8]तो भवति। "मम माया दुरत्यया" इत्युक्तम् ॥ १९ ॥**

आत्मनोऽद्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायाप्रतिपत्त्या प्रत्यवतिष्ठते—**प्राणादिभिरिति**। सिद्धान्ती स्वाभिसंधिमुद्घाटयन्नुत्तरमाह—**मायेति**। चोद्यभागं विभजते—**यदीति**। उत्तरार्धमुत्तरत्वेन व्याकरोति—**उच्यत इति**। मायामेव दृष्टान्तेन स्पष्टयति—**यथेति**। तामेव मायां कार्यद्वारा स्फोरयति—**ययेति**। यथा लौकिको मोहितो मोहपरवशो दृश्यते तथाऽयमात्मा स्वयमेव मायासंबन्धान्मोहितो भवति। अतो मोहद्वाराऽऽत्मन्येव मायाधिगतिरित्यर्थः। मायाया मोहहेतुत्वं भगवताऽपि सूचितमित्याह—**ममेति** ॥ १९ ॥

**प्रा[9]ण इति प्रा[10]णविदो भूतानीति च तद्विदः।**
**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥**

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति—**प्रा[11]ण इ[12]ति**। प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा[13] स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाद्या वैशेषिकादयश्च[14] कल्पयन्ति। तदिदं कल्पनामात्रम्। स्वतन्त्रस्य हिरण्यगर्भस्य[15] सर्वजगद्धेतुत्वे मानाभावात्। पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगा[16]त्तटस्थेश्वरवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः। कल्पनान्तरं दर्शयति—**भूतानी[17]ति चेति**। पृथिव्यप्तेजोवायवस्तत्त्वा[18]नि तानि च चत्वारि भूतानि जगत्कारणानीति लोकायतिकास्तदपि कल्पनामात्रम्। न हि भूतानि स्वतः सिद्धानि

---

१ क. °रेतैः क°। २ ख. घ. ङ. ज. °याऽयं सं। ३ छ. ज. मायां वि°। ४ क. °हितमा°। ५ झ. तिनिर्मलं। ६ च. सफलप°। ७ ख. घ. ज. °याऽयम°। च. °या स स्व°। ८ क. °हितो भ°। झ. °हितमिव। ९ घ. च. ज. प्राणा। १० छ. प्राणावि°। ११ ग. घ. ज. प्राणा इतीति। १२ ङ. झ. इतीति। १३ घ. ङ. ज. वा ज°। १४ ङ. °श्च विक°। १५ घ. °स्य ज°। १६ घ. °यात्तटस्थयेश्व°। १७ छ. °ति। १८ ग. झ. °नि चत्वा°।

जडत्वविरोधात् । नापि परतः सिद्धानि । स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगाद्वह्निगतौष्ण्यस्य वह्निविषयत्वादर्शनात् । अतो भूतानि जगत्कर्तॄणीति कल्पनैवेत्यर्थः । सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति सांख्यास्तदपि कल्पनामात्रम् । साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात् । वैषम्यभञ्जनस्य च निर्हेतुकत्वे सदा तदापातात् । सहेतुकत्वे हेतोर्नित्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह—**गुणा इतीति** । कल्पनान्तरमाह—**तत्त्वानीति चेति** । आत्माऽविद्या शिव इति संक्षेपतस्त्रीणि तत्त्वानि सर्वजगत्प्रवर्तकानीति शैवा मन्यन्ते तदपि कल्पनामात्रम् । आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे तत्त्वानां त्रित्वव्याघातादित्यर्थः ॥

**पादा इति पादविदो विषया इति तद्विदः ।**
**लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥**

एकस्याऽऽत्मनो विश्वादयः पादाः सर्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रम् । निरंशस्याऽऽत्मनोंऽशभेदानुपपत्तेरित्याह—**पादा इतीति** । वात्स्यायनप्रभृतीनां कल्पनां कथयति—**विषया इतीति** । शब्दादयो विषया भूयो भूयो भुज्यमानास्तत्त्वमिति विभ्रममात्रम् । "विषस्य विषयाणां च दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि" इति विषयानुसंधानस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः । भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिकाः । तदपि कल्पनामात्रम् । स्थानभेदेन त्रित्वे तदानन्त्यस्य दुरुत्तरत्वात्स्वातन्त्र्यस्य चासिद्धत्वादित्याह—**लोका इतीति** । अग्नीन्द्रादयो देवास्तेत्तत्फलदातारो नेश्वरस्तथेति देवताकाण्डीयाः । तदपि कल्पनामात्रम् । अस्मदादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशेषाभावप्रसङ्गात् । स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात्तत्प्रसादस्याकिंचित्करत्वादित्याह—**देवा इति चेति** ॥

**वेदा इति वेदविदो यज्ञा इति च तद्विदः ।**
**भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥ २२ ॥**

---

१ ख. घ. °म्येनावस्थि° । २ ख. °भवन° । ३ ग. °दापा° । ४ ग. झ. हेतो° । ५ ख. छ. इति । ६ ग. घ. ङ. झ. °त्वानि चे° । ७ छ. °ति । आ° । ८ छ. झ. °ल्यप्र° । ९ क. °यः स° । १० ख. °पत्त्या पादानुपपत्ते° ; ११ ख. छ. इति । १२ ख. इति । १३ ख. °यो भू° । १४ छ. °ति भ्र° । १५ ग. झ. विषयः । १६ ग. छ. °पत्तिरि° । १७ छ. दुरस्तत्वा° । १८ ख. छ. इति । १९ ख. °स्तत्फ° । २० क. °शेषभा° २१ छ. °न्त्र्ये परोप° ।

ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठका वदन्ति। तदपि कल्पनामात्रम्। न हि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यन्ते। क्रमवतामेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात्। क्रमश्चोच्चारणोपलब्ध्योरन्यतरगतो वर्णेष्वारोप्यते। तथा च तथाविधक्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह—वेदा इति। ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम्। यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकैकस्मिन्यज्ञविज्ञानाभावात्समुदायस्यावस्तुत्वादित्याह—यज्ञा इति[1] चेति। भोक्तैवाऽऽत्मा न कर्तेति सांख्याः। तत्र भोगो यदि विक्रिया स्वी क्रियेत तर्हि कथं नानित्यत्वादिप्रसङ्गः स्वभावत्वे सदा स्यादिति विषयसंनिधौ भोक्तृत्वं भ्रान्तिरेवेत्याह—भोक्तेति चेति। सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते। तदपि न। मधुरादिरसव्यञ्जनादेस्तस्यैवान्यथास्वदर्शनादेकरूप्यासंभवादित्याह—भोज्यमिति चेति।

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः।
मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः॥ २३॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित्। तन्न। युगपदशेषशरीरव्यापिवेदनानुसंधानासिद्धेरित्याह—सूक्ष्म इतीति। स्थूलो देहोऽहंप्रत्ययादात्मेति लोकायतभेदः। तच्च न। मृतसुषुप्तयोरपि संघाताविशेषाच्चैतन्यप्रसङ्गात्। एकैकस्य च भूतस्य चैतन्यादर्शनात्संघातस्य चावस्तुत्वादित्याह—स्थूल इति चेति। मूर्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः। तदपि भ्रान्तिमात्रम्। अस्मदादिशरीवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वात्। लीलाविग्रहकल्पनं च विग्रहाभावे लीलाभावादयुक्तमित्याह—मूर्त इति। अमूर्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनस्तदपि कल्पनामात्रम्। परमार्थो निःस्वभावश्चेति व्याघातादित्याह—अमूर्त इति चेति॥

काल इति कालविदो दिश इति च तद्विदः।
वादा इति वादविदो भुवनानीति तद्विदः॥ २४॥

---

१ ग. घ. ङ. ज. झ. इतीति। २ ग. झ. °ति। भो°। ३ ग. घ. ङ. ज. झ. °दि क्रि°। ४ छ. यन्ते त°। ५ ङ. छ. ज. °दैक्यरू°। ६ ग. घ. °रवे°। ७ छ. °रित्यर्थः। सू°। ८ छ. °ञ्च मृ°। ९ ङ. °सुप्त°। १० घ. °तादिवि°। ११ ङ. °तस्याव° १२ ग. °स्य च व° १३ घ. ङ. ज. मूर्तिस्त्रि°। १४ छ. °दिवत्त°। १५ घ. °रीरं पा°। १६ ख. ग. घ. ङ. ज. झ. °लायोगाद°। १७ घ. ञ. °मार्थतो निः।

कालः परमार्थ इति ज्योतिर्विदः । तच्च न । कालैक्ये मुहूर्तादिव्यवहारायोगात् । तन्नानात्वेऽपि न स्वातन्त्र्यम् । अन्यविषयत्वे[1]न प्रतीतेः[2] । उदयकाल इत्यादिना क्रियाधर्मत्वेन प्रतीतेः स्फुटत्वात् । न च क्रियाधर्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथा काला[3]नवच्छिन्नत्वेन क्रिया[4]नित्यत्वापातादित्याह—**काल इतीति** । स्वरोदयविदस्तु दिशः परमार्था[5] इत्याहुः । तदपि भ्रान्तिमात्रम् । तद्विदामपि पराजयदर्शनादित्याह—**दिश इति चेति** । धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित् । तदपि कल्पनामात्रम् । ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावा[6]संभवात् । मन्त्रवादेऽपि काल[7]दष्टो न जीवति अकाल[8]दष्टः स्वयमेवो[9]त्थास्यतीत्यभ्युपगमाद्व्यामोहमात्रमित्याह—**वादा इतीति**[10] । भुवनानि चतुर्दश वस्तूनीति भुवनकोशविदः । तदपि कल्पनामात्रम् । तेषाम[11]दृष्टत्वात् । न [12]तेभ्यस्तद्दर्शनम् । तेषां मिथो विप्रतिपत्तिदर्शनादित्याह—**भुवनानीति**[13] ॥

**मन इति म[14]नोविदो बुद्धिरिति च तद्विदः ।**
**चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥ २५ ॥**

मन एवाऽऽत्मेति लोकायतभेदः । तदपि भ्रान्तिमात्रम् । तस्य स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः । अस्वातन्त्र्ये च घटवदनात्मत्वात्करणत्वाच्च दीपवदात्मत्वायोगादित्याह—**मन इति** । बुद्धिरेवाऽऽत्मेति बौद्धाः । तेषामपि भ्रान्तिमात्रमेव । तत्सुषुप्ते व्यभिचाराद्वेद्यस्य च घटवदतिरिक्त[15]वेद्यत्वादित्याह—**बुद्धिरिति** । चित्तमेव बाह्याकारशून्यं विज्ञानम् । तदेवाऽऽत्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषा[16]त्तुल्यं भ्रान्तित्वमित्याह—**चित्तमिति** । धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकाः । तदपि कल्पनामात्रम् । देशकालादिषु धर्माधर्मयोर्विप्रतिपत्तिदर्शनादित्याह—**धर्मेति** ॥

**पञ्चविंशक इत्येके षड्विंश इति चापरे ।**
**एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥**

प्रधानं मूलप्रकृतिः । महदहंकारतन्मात्राणीति सप्त प्रकृतिविकृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्मेन्द्रियाणि । पञ्च विषयाः । मनश्चैकमिति षोडश विकाराः । पुरुषस्तु

---

१ °त्वे प्र° । २ ग. °तीते । उ° । ३ घ. °लावच्छि° । ४ घ. °यायां नि° । ५ ख. °मार्थ इ° । ६ छ. °वादर्शनात् । ७ ख. ग. घ. झ. °लदष्टो । ८ ख. ग. घ. ज. °लदष्टः । ९ छ. °मेव न्युत्था° । १० ख. इति । ११ छ. °दृष्टार्थत्वा° । १२ ख. च वचनेभ्य° । १३ घ. °नीतीति । १४ घ. ड. छ. मनवि° । १५ ग. ङ. झ. °क्तत्ववे° । १६ ग. °तुल्यभ्रा° ।

दृशिस्वभाव इति पञ्चविंशतिसंख्याकः प्रपञ्चो वस्त्विति सांख्याः। तच्च कल्पनामात्रम्। पञ्चविंशतिविशेषणस्याव्यावर्तकत्वे वैयर्थ्याद्व्यावर्तकत्वे च व्यावर्त्यप्रमित्यप्रमित्योरनुपपत्तेरित्याह—**पञ्चविंशक इति**। पातञ्जलाः पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिपदार्था इति कल्पयन्ति। तदयुक्तम्। ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः। अनन्तर्भावे च घटवदनीश्वरत्वप्रसङ्गादित्याह—**षड्विंश इति चेति**। पाशुपतास्तु रागाविद्यानियतिकालकलामायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते। तन्न। क्लेशत्वेऽपि रागाविद्ययोरवान्तरभेदवदस्मितादेरपि तद्भिन्नत्वेन संख्यातिरेकात्तस्य रागोपलक्षितत्वे तस्याप्यविद्योपलक्षितत्वेन न्यूनतापातादविद्यामाययोश्चैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेः संख्यातिरेकतादवस्थ्यम्। कालकलासु च तत्प्रसिद्धेरित्याह—**एकत्रिंशक इति**। *अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित्। तदपि न। वादिनां विवाददर्शनात्। विवादस्य चाज्ञानमूलकत्वादित्याह—**अनन्त इतीति**॥

**लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः।**
**स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे॥ २७॥**

लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः। तदपि विभ्रममात्रम्। लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्तुमशक्यत्वादित्याह—**लोकानिति**। दक्षप्रभृतयस्त्वाश्रमाः परमार्था इति समर्थयन्ते। तदसत्। वेषस्याऽऽश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचत्वात्तन्मूलस्याऽऽश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगादसङ्गे चाऽऽत्मनि तदसमवायादित्याह—**आश्रमा इतीति**। वैयाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति। तदप्ययुक्तम्। स्त्र्यादेः शब्दस्वभावत्वे सर्वादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासंभवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह—**स्त्रीपुंनपुंसकमिति**। द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित्। तच्च न। परिच्छेदे क्वचिदपि ब्रह्मत्वायोगाद्वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह—**परापरमिति**॥

**सृष्टिरिति सृष्टिविदो लय इति च तद्विदः।**
**स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा॥ २८॥**

---

* अनन्तः पदार्थ इत्यादिरनन्त इत्यन्तो ग्रन्थो ग पुस्तके—चेतीत्यस्य पश्चाद्दृश्यते।

---

१ घ. °शसं°। २ घ. °श्चोऽस्त्वि°। ३ ग. छ. झ. °शतिः प°। ४ क. ति विक°। ५ घ. ज. °ता रा°। ६ क °न च शून्यता। ७ छ. इति। ८ ज. °रणस्तु। ९ घ. ङ. छ. ज. °सकञ्च°। १० ज. °यति। त° ११ ग. घ. ङ. ज. °स्य सङ्गा°।

सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः । तदपि कल्पनामात्रम् । सतोऽस्तश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाऽऽह—सृष्टिरित्यादिना । यथोक्तकल्पनानामधिष्ठानं सूचयति—सर्वे चेति । उदाहृतांश्चानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते नाऽऽत्मनः कल्पितत्वम् । सर्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः ।

**प्राणः प्राज्ञो बीजात्मा तत्कार्यभेदा हीतरे स्थित्यन्ताः । अन्ये च सर्वे लौकिकाः सर्वप्राणिपरिकल्पिता भेदा रज्ज्वामिव सर्पादयः । तच्छून्य आत्मन्यात्मस्वरूपानिश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः । प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजनत्वाद्यत्नो न कृतः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥**

प्राणादिश्लोकेषु प्राणशब्दार्थमाह—प्राण इति । तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह—तत्कार्येति । अन्तिमपदार्थं स्फुटयति—अन्य इति । कुलधर्मो ग्रामधर्मो देशधर्मश्चेत्येते सर्वशब्देन गृह्यन्ते । तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति—रज्ज्वामिति । आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह—तच्छून्य इति । किमिति समुदायार्थः श्लोकानामुच्यते । श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याऽऽह—प्रत्येकमिति ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

**यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।**
**तं चावति स भूत्वाऽसौ तद्ग्रहः समुपैति तम् ॥ २९ ॥**

**किं बहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं भावं पदार्थं दर्शयेद्यस्याऽऽचार्योऽन्यो वाऽऽप्त इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा तं च द्रष्टारं स भावोऽवति यो दर्शितो भावोऽसौ भूत्वा रक्षति । स्वेनाऽऽत्मना सर्वतो निरुणद्धि । तस्मिन्ग्रहस्तद्ग्रहस्तदभिनिवेशः । इदमेव तत्त्वमिति स तं ग्रहीतारमुपैति । तस्याऽऽत्मभावं निगच्छतीत्यर्थः ॥ २९ ॥**

---

१ क. °नाधि° । २ क. °तानु । ३ ङ. °वेंऽपिह प्र° । ४ ख. जीवात्मा । ५ क. °त्मनाऽऽत्म° । ६ झ. °त्वात्प्रसिद्धपदार्थत्वाच्च यत्नो । ७ ङ. ज. °न्तिमं प° । ८ ग. °र्मो दे° । ९ ग. स्फुटयति । १० ख. छ. °नत्वयो । ११ झ. °क्तं चान्यं । १२ ङ. वा यं भा° । १३ ख. घ. ञ. °न्यो वेत्यमि° । १४ क. वा सुप्त । छ. वा प्राप्त । १५ छ. सन्तं भा° । ज. सततं ।

लौकिकानां परीक्षकाणां च कतिपयकल्पनाभेदा[1]नुदाहृत्यानन्[2]तत्वादशेषतस्तेषा[3]मुदाहर्तुमशक्यत्वं दृष्ट्वा संक्षेप[4]मात्रमाचष्टे—यं भावमिति । पादत्रयं विभजते—किं बहुनेत्यादिना । तमेव भावं विशिनष्टि—यो दर्शित इति । स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह—असाविति । साधकपुरुषतादात्म्यमापद्येत्यर्थः । रक्षणप्रकारं प्रकटयति—स्वेनेति । साक्षादसाधारणरूपत्वेन तत्रैव निष्ठा[5]मापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य[6] निवारयतीत्यर्थः । चतुर्थपादं व्याचष्टे—तस्मिन्निति ॥ २९ ॥

एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।
एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः ॥ ३० ॥

एतैः प्राणादिभिरात्मनोऽपृथ[7]ग्भूतैरपृथग्भावैरेष आत्मा रज्जुरिव सर्पादिविकल्पनारूपैः पृथगेवेति लक्षितो[8]ऽभिलक्षितो निश्चितो मूढैरित्यर्थः । विवेकिनां तु रज्ज्वामिव कल्पिताः सर्पादयो नाऽऽत्मव्यतिरेकेण प्राणादयः सन्तीत्यभिप्रायः । "इदं सर्व[9]ं यदयमात्मा" इति श्रुतेः । एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानं च केवलं निर्विकल्पं यो वेद तत्त्वेन श्रुतितो युक्तितश्च सोऽविशङ्कितो वेदार्थ[10]ं विभागतः कल्पयेत्कल्पयतीत्यर्थः । इदमेवंपरं वाक्यमदोऽन्यपरमिति । न ह्यनध्यात्मविद्वेदाञ्ज्ञातुं शक्नोति तत्त्वतः । न ह्य[11]नध्यात्मवि[12]त्कश्चित्क्रियाफलमुपाश्नुत इति हि मानवं वचनम् ॥ ३० ॥

एतेनान्यत्र प्रवृत्तिनिरोधे हेतुरुक्तस्तर्हि प्राणादीनामात्म[13]वदेव तात्त्विकत्वं प्राप्तमित्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वा[14]न्नैवमित्याह—एतैरिति । उक्तज्ञानस्तुत्यर्थमाह—एवमिति । पूर्वार्धं व्याकरोति—एतैरिति । कल्पितानामधिष्ठानातिरेकेण सत्ता[15]स्फुरणयोरभावात्तद्द्वारेणाऽऽत्मनि भेददर्शनमविवेकिनामस्तु तदन्येषां कथमुपलब्धिरित्याशङ्क्याऽऽह—विवेकिनां त्विति । प्राणादीना[16]मात्मातिरेकेणासत्त्वे प्रमाणमाह—इद-

---

१ ग. °दा भेदानु° । २ घ. °नन्तास्ते° । ३ क. °षामिहाऽऽह° । ४ ख. घ. ङ. ज. °मात्रं व्याच° । ५ घ. ङ. झ. °मापद्य । ६ ग. घ. ङ. ज. झ. °स्य दा° । ७ झ. °थग्भावैरपृथग्भूतैरे° । ८ क. °तोऽप्यलक्षितो नि° । छ. तो भू° । ज. झ. तो नि° । ९ क. °र्वं पदमा° । १० ख. घ. च. छ. ज. °दार्थतत्त्वं ज्ञातुं । ११ ग. °ह्यनात्म° । १२ ख. घ. ज. °विर्किंचिरिक्रि° । १३ झ. ङ. °त्मत्वादे° । १४ क. °त्वान्मैव° । १५ क. सत्त्वात्स्फु° । १६ ख. छ. °मात्मव्याति° ।

मिति । उत्तरार्धं योजयति—**एवमिति** । तत्त्वेनाऽऽत्मवेदनोपायं सूचयति—**तत्त्वेनेति** । स्वप्नदृश्यवज्जाग्रद्दृश्यानां मिथ्यात्वसाधको दृश्यत्वादिहेतुरत्र युक्तिरित्युच्यते । यथोक्तविज्ञानवान्वेदकिंकरो न भवति किं तु स यं वेदार्थं ब्रूते स एव वेदार्थो भवतीत्यर्थः । विभागतो वेदार्थव्याख्यानमभिनयति—**इदमिति** । ज्ञानकाण्डं साक्षादद्वैतवस्तुपरम् । कर्मकाण्डं तु साध्यसाधनसंबन्धबोधनद्वारा परम्परया तस्मिन्पर्यवसितम् । सर्वे वेदा यत्पदमामनन्तीति श्रुतेरित्यर्थः । आत्मविदो वेदार्थवित्त्वमुक्तं व्यनक्ति—**न हीति** । तदेव हि वेदार्थतत्त्वं यत्प्रत्यगात्मस्वरूपमतश्चाध्यात्मविदेव याथात्म्येन तत्त्वज्ञाने प्रभवतीत्यर्थः । उक्तेऽर्थे स्मृतिमुदाहरति—**न हीति** । क्रियाशब्देन प्रमाणमुच्यते । तत्फलं तत्त्वज्ञानमग्निहोत्रादिक्रियायार्थ शुद्धिद्वारा तस्मिन्पर्यवसानादित्यर्थः ॥ ३० ॥

**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।**
**तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥**

यदेतद्द्वैतस्यासत्त्वमुक्तं युक्तितस्तदेतद्वेदान्तप्रमाणावगतमित्याह । स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके असत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः । यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुंजनपदव्यवहाराकीर्णमिव गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टम् । यथा च स्वप्नमाये दृष्टे असद्रूपे तथा विश्वमिदं द्वैतं समस्तमसद्दृष्टम् । क्वेत्याह । वेदान्तेषु । "नेह नानाऽस्ति किंचन" । "इन्द्रो मायाभिः" । आत्मैवेदमग्र आसीत्" । "ब्रह्मैवेदमग्र आसीत्" । "द्वितीयाद्वै भयं भवति" । "न तु तद्द्वितीयमस्ति" । "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिषु । विचक्षणैर्निपुणतरवस्तुदर्शिभिः पण्डितैरित्यर्थः ।

"तमः श्वभ्रनिभं दृष्टं वर्षबुद्बुदसंनिभम् ।
नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्" इति ॥

व्याससमृतेः ॥ ३१ ॥

याभिर्युक्तिभिरस्मिन्प्रकरणे द्वैतस्य मिथ्यात्वं कथ्यते तासां प्रमाणानुग्राहकत्वादना-

---

१ ख. छ. 'ति—श्रुतित इति । २ छ. किं त्वसौ यं । ३ ग. छ. झ. तदर्थो । ४ ख. °दान्तार्थं° । ५ ग. ङ. °त्मरू° । ६ झ. 'नेन प्र° । ७ छ. तिमवतारयति । ८ ख. ग. छ. °श्च बुद्धिशु° । झ. °श्चबुद्धि° । ९ क. °स्तद्वे° । १० च. °गमभि° । ११ घ. छ. झ. °सत्ये स° । १२ च. छ. °पण्यगृ° । १३ ङ. च. छ. ज. °हप्रसा° । १४ क. °र्शिभिरेभिः । १५ च. र्थः । नभस्यभ्र° । १६ क. °ति हि व्या° । १७ घ. च. झ. °स्मृतिः ॥ ३१ ॥

मासत्वमर्[1]वेसेयमित्याह—स्वप्नेति । श्लोकस्य तात्पर्यार्थमाह—यदेतद्द्वैतस्येति । असत्त्वे सत्त्ववत्प्रतिभानं कथमित्याशङ्क्य श्लोकाक्षराणि व्याचष्टे—स्वप्नश्चेति । प्रसारितानि तत्र[2] तत्र प्रकटतां प्रापितानि पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु[3] हट्टेषु ते प्रसारितपण्यापणास्ते च गृहाश्च प्रासादाश्च स्त्रीपुंजनपदाश्चै[4]तेषां व्यवहारास्तैराकीर्णमिति[5] योजना । दृष्टान्तत्रयमनूद्य दार्ष्टान्तिकमाह—यथा चेति । गन्धर्वनगराकारं चकारार्थः । नेह नानाऽस्ति किंचनेत्यादयो वेदान्ताः । द्वैतस्य वस्तुतोऽसत्त्वे स्मृतिमपि दर्शयति—तम इति । तमसि मन्दान्धकारे रज्ज्वामधिष्ठाने भूच्छिद्रमिति यद्भ्रान्त्या भाति तन्निभं तत्तुल्यं विवेकिभिर्विश्वं दृष्टं तच्चातीव चञ्चलमालक्षितं नाशप्रायं वर्तमानकालेऽपि तद्योग्यतासत्त्वात् । न च द्वैतं कदाचिदपि सुखकरमुपलभ्यते दुःखाक्रान्तं तु दृश्यते । तच्च नाशग्रस्तम् । नाशा-दूर्ध्वमसत्त्वमेवापगच्छति न तर्हि तस्य परमार्थत्वं प्रमाणाभावादित्यर्थः ॥ ३१ ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥

प्रकरणार्थोप[6]संहारा[7]र्थोऽयं श्लोकः । यदा वितथं द्वैतमात्मै[8]वैकः परमार्थतः संस्तदेदं निष्पन्नं भवति सर्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति तदा न विरोधः । निरोधनं निरोधः प्रलय उत्पत्तिर्जननं बद्धः संसारी जीवः साधकः साधनान्मोक्षस्य मुमुक्षुर्मो[10]चनार्थी मुक्तो विमुक्तब[11]न्धः । उत्पत्तिप्रलययोरभावाद्ब[12]द्धादयो न सन्तीत्येषा परमार्थता । कथमुत्पत्तिप्रलययोरभाव इत्युच्यते । द्वैतस्या[13]सत्त्वात् । "यत्र हि द्वैतमिव भवति"। "य इह नानेव पश्यति"। "आत्मैवेदं सर्वम्"। "ब्रह्मैवेदं सर्वम्"। "एकमेवाद्वितीयम्"। "इदं सर्वं यदयमात्मा" इत्यादि[14]ना श्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम् । स[15]तो ह्युत्पत्तिः प्र[16]लयो वा स्यान्नासतः शशविषाणादेः । नाप्यद्वैतमुत्पद्यते लीयते वा । अद्वयं चोत्पत्तिप्रलयवच्चेति विप्रतिषिद्धम् । यस्तु पुनर्द्वैतसंव्यवहारः स रज्जुसर्पवदात्मनि प्राणादिलक्षणः कल्पित इत्युक्तम् । न हि मनोवि-

---

१ छ. घ. °वधेय° । २ ख. ग. त्र प्र° । ३ ग. घ. ङ. ज. झ. °षु ते° । ४ घ. ङ. ज. °दाश्च । ते । ५ ग. घ. ङ. ज. °ति नें° । ६ छ. °संग्रहार्थो° । ७ घ. ङ. च. ज. झ. °हारोयं । ८ च. °त्मैकः । ९ च. निकृष्टं । १० च. °मोक्षभावना° । ११ ख. ङ. छ. ज. °बन्धनः । उ° । १२ घ. च. छ. ज. झ. °बन्धाद° । १३ क. °स्यास्यास° । १४ क. °दिनानाश्रु° । १५ घ. सत उत्प° । १६ ख. ग. च. ज. °ते प्रली° ।

कल्पनाया रज्जुसर्पादिलक्षणाया रज्ज्वां प्रलय उत्पत्तिर्वा। न च मनसि रज्जुसर्पस्योत्पत्तिः प्रलयो वा न चोभयतो वा। तथा मानसत्वाविशेषाद्द्वैतस्य। न हि नियते मनसि सुषुप्ते वा द्वैतं गृह्यते। अतो मनोविकल्पनामात्रं द्वैतमिति सिद्धम्। तस्मात्सूक्तं द्वैतस्यासत्त्वान्निरोधाद्यभावः परमार्थतेति।

प्रमाणयुक्तिभ्यां द्वैतमिथ्यात्वप्रसाधनेनाद्वैतमेव पारमार्थिकमिति स्थिते निर्धारितमर्थं संगृह्णाति—नेत्यादिना। श्लोकस्य तात्पर्यार्थमाह—प्रकरणेति। कोऽसौ प्रकरणार्थस्तस्य वा संग्रहे किं सिध्यति तदाह—यदेति। व्यवहारमात्रस्याविद्याविषयत्वेऽपि किं स्यादिति चेत्तदाह—तदेति। चतुर्थपादार्थमाह—उत्पत्तीति। उक्तमेवार्थं प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति—कथमित्यादिना। द्वैतासत्त्वं श्रुत्यवष्टम्भेन स्पष्टयति—यत्र हीति। द्वैतस्यासत्त्वे कथमुत्पत्तिप्रलयौ न स्यातामित्याशङ्क्य किं द्वैतस्य तौ किं वाऽद्वैतस्येत्याद्यं विकल्पं दूषयति—सतो हीति। द्वितीयं प्रत्याह—नापीति। व्यावहारिकद्वैताङ्गीकारात्तस्यैवोत्पत्तिप्रलयावित्याशङ्क्याऽऽह—यस्त्विति। विमतस्तत्त्वतो नोत्पत्तिप्रलयवान्कल्पितत्वाद्रज्जुसर्पवदित्यत्र दृष्टान्तासिद्धिमाशङ्क्य रज्जुसर्पस्य रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति विकल्प्य प्रथमं प्रत्याह—न हीति। रज्जुं पश्यतां सर्वेषामुपलब्धिप्रसङ्गादित्यर्थः। द्वितीयं दूषयति—न चेति। बहिरुपलब्धिविरोधादित्यर्थः। तृतीयं निरस्यति—न चेति। उभयतो मनोरज्जुलक्षणे न रज्जुसर्पस्योत्पत्तिप्रलयौ युक्तौ द्वयाधारत्वानुपलम्भादित्यर्थः। रज्जुसर्पवद्द्वैतस्य मानसत्वाविशेषान्न तत्त्वतो जन्मविनाशौ दर्शयितुं शक्याविति दार्ष्टान्तिकमाह—तथेति। द्वैतस्य न कुतश्चित्तात्त्विकौ जन्मविनाशाविति शेषः। मानसत्वासिद्धिमाशङ्क्याऽऽह—न हीति। अन्वयव्यतिरेकाभ्यां द्वैतं मनोविकल्पनामात्रमिति निगमयति—अत इति। न च मनो द्वैतस्य दर्शनमात्रे निमित्तमिति युक्तम्। भ्रमसिद्धस्याज्ञातसत्तायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति—तस्मादिति।

यद्येवं द्वैताभावे शास्त्रव्यापारो नाद्वैते विरोधात्। तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावाच्छून्यवादप्रसङ्गः। द्वैतस्य चाभावान्न रज्जुसर्पादिविकल्पनाया निरास्पदत्वानुपपत्तिरिति प्रत्युक्तमेत-

१ °नायां र°। २ झ. निद्रिते। ३ घ. °मार्थेति। ४ ग. ङ. °पादमा°। ५ ग. °न स्फुटय°। ६ ग. तौ किमद्वै°। ७ ज. °ज्जुं प्रथमं प°। ८ ग. झ. °न्मना°। ९ झ. °वे शास्त्रादिव्या°। १० च. °रो न स्यादद्वै°।

त्कथमु[1]ज्जीवसीत्याह। रज्जुरपि सर्प[2]विकल्पस्याऽऽस्पदभूता विकल्पिते[3]वेति दृष्टान्तानुपपत्तिः। न। विकल्पनाक्षयेऽविकल्पितस्याविकल्पितत्वादेव[5] सत्त्वोपपत्तेः। रज्जुसर्पवदसत्त्वमिति चेत्। न। एकान्तेनाविकल्पितत्वादविकल्पितरज्ज्वंशवत्प्रा[4]क्सर्पाभावविज्ञानात्। विकल्पयितुश्च प्राग्विकल्पनोत्पत्तेः सिद्धत्वाभ्युपगमादसत्त्वानुपपत्तिः।

निरोधाद्यभावस्य परमार्थत्वे तत्रैव शास्त्रव्यापारादद्वैते तदव्यापारादभावबोधने व्यापृतस्य भावबोधने व्यापारविरोधादद्वैतमप्रामाणिकं प्राप्तमिति शङ्कते—यद्येवमिति। अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्या[6]शङ्क्याऽऽह—तथा चेति। अद्वैतस्याप्रामाणिकत्वे[7]ऽपि कुतः शून्यवादो द्वैतस्य सत्त्वादित्याशङ्क्याऽऽह—द्वैतस्येति। नाप्रामाणिकशून्यवादो युक्तो यथा रज्ज्वामारोपितसर्पादे रज्जुरधिष्ठानम्। न हि निरधिष्ठानो भ्रमोऽस्ति। तथा द्वैतकल्पनाया[8] निरधिष्ठानत्वायोगात्तदधिष्ठानत्वेनाद्वैतमास्थेयमित्योंकारप्रकरणे परिहृतमेतच्चोद्यं कथमुद्भावयसीति सिद्धान्तवाद्याह—नेत्यादिना। तत्र शून्यवादी स्वमतानुसारेण दृष्टान्तासंप्रतिपत्त्या चोदयति—आहेति। स्वमतसंमतस्यैव दृष्टान्ततेत्यनियमात्प्रसिद्धिमात्रेण[9] पर[10]प्रतिबोधनसंभवा[11]द्भ्रमबाधे परिशिष्यमाणस्यावधेः सत्यतया[12] रज्ज्वादौ दृष्टत्वाद्द्वैतभ्रमबाधसाक्षितया स्फुरतश्चैतन्यस्याकल्पितत्वादेव सत्त्वान्न शून्यताप्रसक्तिरित्युत्तरमाह—नेत्यादिना। अद्वैतमसदप्रामाणिकत्वाद्रज्जुसर्पवदिति तदकल्पितत्वासिद्धिं शङ्कते—रज्ज्विति। रज्जुसर्पस्यासत्त्वे भ्रान्तिविषयत्वं प्रयोजकमात्मनस्तु भ्रमसाक्षित्वान्नियमेन भ्रमाविषयत्वान्नासत्त्वमित्युत्तरमाह—नैकान्तेनेति। अप्रामाणिकत्वहेतोरनैकान्तिकत्वं दोषान्तरमाह—अविकल्पितेति। नायं सर्पो रज्जुरेषेति सर्पाभावज्ञानपूर्वकपुरोवर्तिरज्जुत्वनिश्चयात्प्रागवस्थायां प्रामाणिकत्वाभावेऽपि सन्नेवा[13]ज्ञातो रज्ज्वंशोऽभ्युपगम्यते। तथा सदैव[14] प्रामाणिकत्वाभावेऽपि सन्नेवाऽऽत्मा भविष्यतीत्यर्थः। आत्मनोऽसत्त्वाभावे हेत्वन्तरमाह—विकल्पयितुश्चेति।

कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तकत्वम्। नैष दोषः। रज्ज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात्। कथं सुख्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान्पश्यामि[15] व्यक्तोऽव्यक्तः

---

१ झ. °मुद्भावयसी°। २ क. च. छ. झ. सर्ववि°। ३ छ. °कल्पिता चेति। ४ छ. °त्प्राग्भाव°। ५ क. °मादेव स°। ६ ग. झ. °त्याह। ७ ग. झ. °त्वे कुः। ८ ज. °ल्पनया। ९ ज. °ण प्र°। १० ख. छ. परं प्र°। ११ घ. च. °वादवा°। १२ ख. °त्यतया। १३ ख. °वाऽऽत्मा। १४ घ. ज. सदेव। १५ च. °मि शृणोमि व्य°।

कर्ता फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममैत[1] इत्येवमादयः सर्वे आत्मन्यध्यारोप्यन्ते। आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात्। यथा सर्पधारादिभेदेषु रज्जुः। यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्तव्यत्वं शास्त्रेण। अकृतकर्तृ च शास्त्रं कृतानुकारित्वेऽप्रमाणम्। यतोऽविद्याध्यारोपितसुखित्वादिविशेषप्रतिबन्धादेवाऽऽत्मनः स्वरूपेणानवस्थानं स्वरूपावस्थानं च श्रेय इति।

आत्मनो द्वैतभ्रमाधिष्ठानत्वेन संभावितत्वाद्बाधसाक्षित्वेन परिशिष्टत्वात्पूर्वं भ्रमोत्पत्तेः स्वतः सिद्धत्वाच्च प्रमाणाविषयत्वेऽपि नास्ति शून्यतेत्युक्तम्। इदानीं प्रमिते धर्मिणि प्रतिषेधदर्शनादात्मनोऽप्रमितत्वे तत्र द्वैताभावप्रमापकं शास्त्रमयुक्तमिति शङ्कते—कथमिति। प्रतिपन्ने धर्मिणि प्रतिषेधात्प्रमिते प्रतिषेधस्य विशेषणवैफल्यादेवानभ्युपगमादात्मनश्च सर्वकल्पनास्वधिष्ठानाकारेण स्फुरणाङ्गीकरणात्तस्मिन्प्रतिपन्ने द्वैतप्रतिषेधः संभवतीति परिहरति—नैष दोष इति। भ्रमाविषयस्याऽऽत्मनोऽध्यासानुगततया स्फुरणमयुक्तमित्याक्षिपति—कथमिति। स्वप्रकाशत्वेन स्वतो निर्विकल्पकस्फुरणेऽपि सविकल्पकव्यवहारे समारोपितसंसृष्टाकारेण भ्रमविषयत्वमविरुद्धमित्याह—सुख्यहमित्यादिना। उक्तन्यायेनाऽऽत्मप्रतीतेः सिद्धत्वात्प्रतिपन्ने तस्मिन्द्वैतप्रतिषेधस्य सुकरतेति फलितमाह—यदा चेति। न केवलमारोपितविशेषणैर्विशेष्यस्याऽऽत्मनः स्वरूपस्फुरणस्य सिद्धत्वादेव न शास्त्रेण कर्तव्यत्वमनुवादत्वेनाप्रामाण्यप्रसङ्गाच्चैवमित्याह—अकृतेति। स्फुरत्यात्मनि द्वैतनिषेधकत्वेऽपि शास्त्रस्य फलाभावादप्रामाण्यं तदवस्थमित्याशङ्क्याऽऽह—अविद्येति। प्रतिषेधशास्त्रादपनीते प्रतिबन्धे स्वरूपावस्थानं फलतीत्यर्थः। निःशेषदुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च परं श्रेयो न स्वरूपावस्थानमित्याशङ्क्याऽऽह—स्वरूपेति। इति प्रसिद्धं मोक्षशास्त्रेष्विति शेषः।

सुखित्वादिनिवर्तकं शास्त्रमात्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादिवाक्यैरात्मस्वरूपवदसुखित्वाद्यपि सुखित्वादिभेदेषु नानुवृत्तोऽस्ति धर्मः। यद्यनुवृत्तः स्यान्नाध्या[2]रोपि[3]तसु[4]खित्वादिलक्षणो विशेषः। यथोष्णत्व[5]गुणविशेषवत्यग्नौ शीतता। त[6]स्मान्निर्विशेष एवाऽऽत्मनि सुखित्वादयो विशेषाः कल्पिताः। यत्त्वसुखित्वादिशास्त्रमात्मनस्तत्सुखित्वा[7]दिविशेषनिवृत्त्यर्थमेवेति सिद्धम्। "सिद्धं तु निवर्तकत्वात्" इत्यागमविदां सूत्रम्॥ ३२॥

---

१ घ. °मैतदिसे°। २ छ. °स्यान्नोऽध्यारोप्येत। ३ झ. °ध्यारोपेत। ४ घ. ज. °रोप्येत। ५ व. °सुखत्वा°। ६ च. °त्ववि°। ७ क. तस्मिन्नि°।

द्वैतनिवर्तकत्वे शास्त्रस्य कारकत्वं स्यादित्याशङ्क्याऽऽह—सुखित्वादीति। असुखित्वादेः स्वाभाविकत्वादात्मनि स्फुरत्यस्फुरणमनुपपन्नमित्याशङ्क्य भ्रमविषयशुक्तीदमंशादेश्च स्वाभाविकोऽपि रजतादिभेदो दोषमाहात्म्याद्यथा न प्रतिभाति तथाऽचिन्त्यशक्त्यविद्याप्रभावादात्मनि स्फुरत्यपि सुखित्वाद्यध्यासविरोध्यसुखित्वादिरूपेणास्फुरणमविरुद्धमित्याह—आत्मेति। विपक्षे भ्रमानुपपत्तिरित्याह—यदीति। उक्तमर्थं संक्षिप्य निगमयति—तस्मादिति। असुखित्वादेरकल्पितत्वमसिद्धमाशङ्क्य निरस्यति—यत्त्विति। अस्थूलमशोकान्तरमित्यादि वाक्यं शास्त्रशब्देन गृह्यते। उक्तेऽर्थे द्रविडाचार्यसंमतिमाह—सिद्धं त्विति। ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यमभावबोधनव्युत्पन्नन्ञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादिति सूत्रार्थः॥ ३२॥

भावैरसद्भिरेवायमद्वयेन च कल्पितः।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा॥ ३३॥

पूर्वश्लोकार्थस्य हेतुमाह—यथा रज्ज्वामसद्भिः सर्पधारादिभिरद्वयेन च रज्जुद्रव्येण सताऽयं सर्प इयं धारा दण्डोऽयमिति वा रज्जुद्रव्यमेव कल्प्यत एवं प्राणादिभिरनन्तैरसद्भिरेवाविद्यमानैः, न परमार्थतः। न ह्यप्रचलिते मनसि कश्चिद्भाव उपलक्षयितुं शक्यते केनचित्। न चाऽऽत्मनः प्रचलनमस्ति। प्रचलितस्यैवोपलभ्यमाना भावा न परमार्थतः सन्तः कल्पयितुं शक्याः। अतोऽसद्भिरेव प्राणादिभावैरद्वयेन च परमार्थसताऽऽत्मना रज्जुवत्सर्वविकल्पास्पदभूतेनायं स्वयमेवाऽऽत्मा कल्पितः। सदैकस्वभावोऽपि संस्ते च प्राणादिभावा अप्यद्वयेनैव सताऽऽत्मना विकल्पिताः। न हि निरास्पदा कांचित्कल्पनोपलभ्यते। अतः सर्वकल्पनास्पदत्वात्स्वेनाऽऽत्मनाऽद्वयस्याव्यभिचारात्कल्पनावस्थायामप्यद्वयता शिवा। कल्पना एव त्वशिवाः। रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ताः। अद्वयताऽभयाऽतः सैव शिवा॥ ३३॥

यदुक्तं निरोधाद्यभावस्य परमार्थतेति तदयुक्तम्। सामान्यविशेषात्मकं वस्तु नाना-

१ क. तस्मिन्निति। २ ङ. ज. °स्त्रस्य प्रा°। ३ क. ग. च. °नैः, प°। ४ घ. ज. °स्ति। अप्र°। ५ च. °कल्पस्थाऽऽस्प°। ६ घ. °पि संश्रेतःप्रा°। ७ क. अद्व°। ८ क. येनेव। ९ ख. ज. सत्तात्म°। १० च. काऽपि विकल्प°। ११ ख. घ. ङ. ज. °पपद्यते। १२ ख. घ. ङ. ज. °र्वविक°। १३ घ. अद्वैतताऽ°। १४ च. °याऽत एव सं°।

रसमिति मते निरोधादेः सुसाध्यत्वादित्याशङ्क्याऽऽह—**भावैरिति** । भावा व्यावृत्ता विशेषाः । ते च व्यभिचारित्वादसन्तो रज्जुसर्पवत् । अद्वयमनुवृत्तं सामान्यं विशेषाकारैरवस्तुभूतैः सामान्याकारेण च तादृशेनायमव्यावृत्तानुगतपूर्णसत्ताचिदेकतानैः सन्मात्रैश्च मूढैर्मोहमाहात्म्यात्कल्प्यते । न वस्तुतः सामान्यविशेषभावोऽस्ति परस्पराश्रयत्वादित्यर्थः । विशेषाणामसत्त्वे कथं सत्त्वेन व्यवहारः स्यादित्याशङ्क्य सत्तातादात्म्येन कल्पितत्वात्तेषां सत्त्वेन व्यवहारोपपत्तिरित्याह—**भावा इति** । अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शेषः । सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह—**तस्मादिति** । श्लोकतात्पर्यं दर्शयति—**पूर्वेति** । निरोधादिसर्वविशेषाभावोपलक्षितं वस्तु वस्तुभूतमिति पूर्वश्लोकार्थस्तस्य सामान्यविशेषात्मके वस्तुनि विशेषानाश्रित्य निरोधादेः सुसाधनत्वादसत्त्वमाशङ्क्यते । तेन तस्य साधनापेक्षायां तत्प्रदर्शनपरोऽयं श्लोक इत्यर्थः । तत्र पूर्वार्धगतान्यक्षराणि दृष्टान्तावष्टम्भेन व्याचष्टे—**यथेत्यादिना** । संसृष्टरूपेण कल्पितत्वेऽपि स्वरूपेणानारोपितत्वाद्रज्जुद्रव्यस्य व्यावहारिकसत्यत्वमुन्नेयम् । अविद्यमानैरयमात्मा कल्प्यते न परमार्थतस्तेषां सत्त्वमिति शेषः । कथं प्राणादीनां परमार्थतोऽसत्त्वमित्याशङ्क्यान्वयव्यतिरेकाभ्यां तेषां मनःस्पन्दितमात्रस्वप्रतीतेर्मृषात्वं स्वप्नवदित्याह—**न हीति** । आत्मपरिणामत्वान्मनश्चलनमन्तरेणापि प्राणादिभावानां परमार्थतः सत्त्वमित्याशङ्क्याऽऽह—**न चेति** । न हि विभोरात्मनो नभोवच्चलनं वास्तवमवकल्पते । न च तदभावे निरवयवस्य परिणामसंभावनेत्यर्थः । प्राणादीनामात्मपरिणामत्वासंभवे फलितमाह—**प्रचलितस्येति** । प्रगतं चलितं यस्य स तथा कूटस्थस्यैवाऽऽत्मनो भासमाना भावा न परमार्थतः सन्तो भवितुमुत्सहन्ते । दृश्यत्वजडत्वादिना स्वप्नवन्मिथ्यात्वसिद्धेरित्यर्थः । एवं प्राणादिभावानां मिथ्यात्वं प्रसाध्य फलितं दर्शयन्पूर्वार्धाक्षराणां व्याख्यानमुपसंहरति—**अत इति** । अद्वयस्य परमार्थत्वात्तदात्मना कथमात्मा कल्पितः स्यादित्याशङ्क्य स्वरूपेणाकल्पितस्य संसृष्टरूपेण कल्पितत्वमिष्टमित्याह—**परमार्थसतेति** । अविद्यावशादिष्टा कल्पना न स्वभाववशादित्याह—

---

१ ग. घ. ज. झ. °साधकत्वा° । २ ख. घ. °वृत्तसा° । ३ ग. °वृत्त्यन° । ४ क. °नः सूत्रात्मै° । ५ घ. °राश्य° । ६ ग. ङ. ज. झ. °श्रयादि° । ७ ख. ञ. छ. °त्तादात्म्ये° । ८ ख. °साध्यत्व° । ९ घ. °ति श्लो° । १० क. °शेषेणाऽऽश्रि° । ११ ख. ङ. छ. °साध्यत्वा° । घ. ङ. °साधकत्वा° । १२ ख. °सत्त्वमु° । १३ घ. °र्थस्ते° । १४ झ. °न्दित्वमा° । १५ ग. °तत्वमा° । १६ ग. °त्रप° । १७ क. °भावनि° । १८ घ. ज. °ह—अप्र° । १९ घ. ङ. °र्थस° । ग. ज. °र्थसतो भ° । २० छ. °श्यत्वाज्जड° । २१ घ. °प्नमिथ्या° । २२ क. °मात्मक° । २३ छ. °ङ्क्यस्वस्व° । २४ घ. °पेणाक° । २५ ग. झ. °मित्या° ।

सदेति। प्राणादीनामसत्त्वे सत्त्वेन कथं व्यवहारगोचरत्वमित्याशङ्क्य तृतीयपादार्थमाह—ते चेति। कल्पितानां प्राणादिभावानामधिष्ठानसत्तया सत्त्वेन न सत्ताऽवकल्प्यते। तेषामधिष्ठानापेक्षानियमाभावादित्याशङ्क्याऽऽह—न हीति। सर्वविकल्पना साधिष्ठानैव दृश्यते। न चासतोऽधिष्ठानत्वमारोपितानुवेधाभावात्तदनुवेधात्तु सतोऽधिष्ठानत्वमेष्टव्यम्। तथा च प्राणादिभावानां वस्तुतोऽसत्त्वेऽपि सति कल्पितानां सत्त्वेन व्यवहारसिद्धिरित्यर्थः। चतुर्थपादार्थमाह—अत इति। स्वेनेति विशेषणं संसृष्टरूपेण व्यभिचाराङ्गीकारार्थम्। कल्पनाशाहित्यदशायामेवाद्वयता शिवेत्याशङ्क्य कल्पनामात्रस्याशिवत्वान्मैवमित्याह—कल्पनेति। त्रासादीत्यादिशब्देन हर्षशोकादयो गृह्यन्ते। यदुक्तमद्वयता शिवेति तदुपपादयति—अद्वयतेति॥ ३३॥

नाऽऽत्मभावेन नानेदं न स्वेनापि कथंचन।
न पृथङ्नापृथक्किंचिदिति तत्त्वविदो विदुः॥ ३४॥

कुतश्चाद्वयता शिवा। नानाभूतं पृथक्त्वमन्यस्यान्यस्माद्यत्र दृष्टं तत्राशिवं भवेत्। न ह्यत्राद्वये परमार्थसत्यात्मनि प्राणादिसंसारजातमिदं जगदात्मभावेन परमार्थस्वरूपेण निरूप्यमाणं नाना वस्त्वन्तरभूतं भवति। यथा रज्जुस्वरूपेण प्रकाशेन निरूप्यमाणो न नानाभूतः कल्पितः सर्पोऽस्ति तद्वत्। नापि स्वेन प्राणाद्यात्मनेदं विद्यते कदाचिदपि रज्जुसर्पवत्कल्पितत्वादेव। तथाऽन्योन्यं न पृथक्प्राणादि वस्तु यथाऽश्वान्महिषः पृथग्विद्यत एव। अतोऽसत्त्वान्नापृथग्विद्यतेऽन्योन्यं परेण वा किंचिदिति। एवं परमार्थतत्त्वमात्मविदो ब्राह्मणा विदुः। अतोऽशिवहेतुत्वाभावादद्वयतैव शिवेत्यभिप्रायः॥ ३४॥

किं च किमिदं नानाभूतं द्वैतमात्मतादात्म्येन वा सिध्यति स्वातन्त्र्येण वेति विवेक्तव्यम्। नाऽऽद्य इत्याह—नाऽऽत्मभावेनेति। इदं हि नानाभूतं द्वैतं नाऽऽत्मतादात्म्येन सेद्धुमर्हति। जडाजडयोर्विरुद्धस्वभावयोस्तादात्म्यायोगात्। भेदादिशून्यात्मतादात्म्ये च द्वैतस्य नानात्वासिद्धेरित्यर्थः। द्वितीयं दूषयति—न स्वेनेति। स्वेन सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येणापि नेदं द्वैतं सेद्धुं पारयति। तथा स्वातन्त्र्ये सत्यात्मत्वप्रसङ्गादनात्मनोऽद्वैतत्वापातादित्यर्थः। किं च किमिदं द्वैतमन्योन्यं पृथगपृथग्वेति विवेक्तव्यं नाऽऽद्य

---

१ ग. °न स°। २ छ. सर्वा वि°। ३ छ. °ष्ठानेनै°। ४ छ. °णादीनां। ५ छ. °ति विक°। ६ घ. ज. °सादित्या°। ७ ज. नाभेदं। ८ च. °माणेना°। ९ ख. छ. ज. रज्जुं स्व°। १० च. °पे प्र°। ११ छ. °त्त्ववि°। १२ ख. °भूतद्वै°। १३ घ. सिद्धया वा स्वा°। १४ क. °ति स्वतन्त्रेण १५ ज. नाऽऽऽत्मभू°। १६ ज. °त्म्येन द्वै°। १७ क. °थक्पृथ°।

इत्याह—**न पृथगिति**। न हि किंचिदपि द्वैतं परस्परं पृथगेव सिध्यति पृथक्त्वस्य धर्मिप्रतियोगिरूपावच्छिन्नत्वेनान्योन्याश्रयत्वाद्धर्मत्वस्वरूपत्वयोर्दुर्वचनत्वादित्यर्थः। नापि किंचिदन्योन्यमपृथग्भूत्वा सिध्यति। घटपटादिशब्दानां पर्यायत्वप्रसङ्गाद्व्यवहारलोपापाता-दित्याह—**नापृथगिति**। अतो वास्तवाकारेण सर्वथा निरूपणासहमेव द्वैतमिति फलित-माह—**इति तत्त्वेति**। युक्तमद्वयता शिवेति तत्र हेत्वन्तरोपन्यासपरत्वं श्लोकस्य दर्शयति—**कुतश्चेति**। तदेवं स्फुटयति—**नानाभूतमित्यादिना**। नानाभूतमि-त्यस्य पर्यायोपादानं पृथक्त्वमिति। तस्य भवकारणत्वं प्रकटयति—**अन्यस्येति**। तत्र [३]व्याघ्रचोरादाविति यावत्। तद्भयकारणं भेददर्शनमद्वये वस्तुनि नास्तीत्याह—**न हीति**। अध्यस्तमधिष्ठानरूपेण तत्त्वतो निरूप्यमाणमसदेव भवतीत्यत्र दृष्टान्तमाह—**यथेति**। प्रदीपप्रकाशेनाधिष्ठानमात्रतया समारोपितः सर्पो यदा निरूप्यते तदा नासौ तद्व्यतिरेकेण सिध्यति। तथा जगदर्[४]पादं[५] तदात्मस्वरूपेण निरूप्यमाणं नान्यत्वेन सिध्येदित्यर्थः। एवं प्रथमपादं व्याख्याय द्वितीयपादं व्याचष्टे—**नापीति**। **कदाचिदपीति**। कल्पना-वस्थायां प्रागूर्ध्वं चेत्यर्थः। न पृथगित्यस्यार्थमाह—**तथेति**। पृथक्त्वस्यान्योन्याश्रयत्वेन दुर्वचनत्वात्। वैधर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याविरुद्धम्। नापृथगित्यादि व्याकरोति—**अत इति**। द्वैतस्य प्रागुक्तन्यायेनासत्त्वान्न तदन्योन्यं वा परेणाऽऽत्मना वा सहापृथग्भूत्वा सेद्धुमर्हति। अतो दुर्निरूपत्वान्न किंचिद्द्वैतं नामास्तीति ब्रह्मविदां मत-मित्यर्थः। दृष्टं हि द्वैतं भयहेतुस्तदसंस्पृष्टं पुनरद्वैतमभयमेवेत्युपसंहरति—**अत इति**॥३४॥

**वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः।**
**निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः॥ ३५॥**

तदेतत्सम्यग्दर्शनं स्तूयते। विगतरागभयद्वेषक्रोधादिसर्वदोषैः सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदार्थतत्त्वैर्ज्ञानिभिर्निर्विक-[१०]ल्पः सर्वविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः प्रपञ्चो-[११]पशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन्स आत्मा प्रपञ्चोपशमोऽत एवाद्वयः[१२]। विगतदोषैरेव[१३] पण्डितैर्वेदान्तार्थत-

---

१ छ. °त्स्परपृ°। २ ग. °र्यायादा°। ३ छ. °व्याघ्रादिचो°। ४ ग. ङ. °पीदमात्म°। ५ ग. °दं तादात्म्यस्व°। ६ क. °त्वात्तद°। ७ ग. घ. °दस्पष्टं। ङ. °दसंस्पृ°। ८ ख. °ते। वीत°। घ. ङ. ज. °ते। वीतो रागभयद्वेषक्रोधादिदोषो येषां तैः सर्वदा। ९ च. झ. °दोषैर्मुनि°। १० झ. °वैकल्पनाशू°। ११ ख. °ञ्चो द्वै°। १२ झ. °यः। तेन वि°। १३ क. °तद्वेषै°।

**त्परैः[1] संन्यासिभिः[2] परमात्मा द्रष्टुं शक्यो नान्यै रागादिकलुषितचेतोभिः[3] स्वपक्षपातिदर्शनै[4]स्तार्किकादिभिरित्यभिप्रायः ॥ ३५ ॥**

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरतामाचरतीत्याशङ्कयाऽऽह—**वीतेति**[5] । रागादिप्रतिबन्धविधुराणामेव यथोक्तमद्वैतदर्शनं[6] न सर्वेषामित्यर्थः । श्लोकस्य तात्पर्यमाह—**तदेतदिति** । स्तुतिश्च तदुपायप्रवृत्तावुपकरोतीति शेषः । आदिपदेन सम्यग्दर्शनप्रतिबन्धकाः सर्वे[7] दोषाः संगृह्यन्ते । रागादिविमोको यदा कदाचिदनधिकारिणामपि[8] संभवत्यतो विशिनष्टि—**सर्वदेति** । सदा रागादिव्यावृत्तौ विवेकं[9] हेतुं प्रपञ्चयति—**मुनिभिरिति** । विवेके च पदशक्तेर्वाक्यतात्पर्यस्य च परिज्ञानं कारणमित्याह—**वेदेति**[10] । एवं सम्यग्ज्ञानाधिकारिणं साधनचतुष्टयसंपन्नमुक्त्वा तद्विषयं निरूपयति—**निर्विकल्प इति** । आत्मनश्चाक्षुषत्वशङ्कां[11] वारयति—**उपलब्ध इति** । हिशब्दद्यो[12]त्यम[13]र्थमाह—**वेदान्तेति** । सर्वविकल्प[14]शून्यत्वमात्मनः स्फुटयितुं प्रपञ्चोपशम[15]विशेषणम् । आत्मनोऽभावत्वं बहुव्रीहिणा प्रत्युदस्यते । हेतुहेतुमद्भावेन पुनरुक्तिं विशेषण[16]योर्व्यासेधति[17]—**अत एवेति** । सम्यग्दर्शनाधिकारिणो दर्शितानुपसंहरति—**विगतेति** । अनधिकारिणो दर्शयन्वैशेषिकवैनाशिकादिशास्त्राभिज्ञानामपि तद[18]न्तर्भावं सूचयति—**नान्यैरिति** ॥ ३५ ॥

**तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम् ।**
**अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥ ३६ ॥**

**यस्मात्सर्वानर्थप्रशमरूपत्वादद्वयं शिवमभयमत एवं[19] विदित्वै[20]नमद्वैते[21] स्मृतिं योजयेत् । अद्वैतावगमायैव[22] स्मृतिं कुर्यादित्यर्थः । तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं साक्षादपरोक्षादजमात्मानं सर्वलोकव्यवहारातीतं[23] जडवल्लोकमाचरेत् । अप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः ॥ ३६ ॥**

मिथ्याज्ञान[24]प्रचय[25]संस्काराद्वेदान्तार्थतात्पर्यवतां पण्डितानामपि नाद्वैते प्रत्ययदार्ढ्यं सिध्य-

---

१ घ. च. ज. °त्परैरयमा° । २ ख. झ. °सिभिरयमा° । ३ झ. °भिः प° । ४ क. ख. छ. °पातद° । ५ क. विगतेति । ६ छ. °क्तसम्यग्दर्श° । ७ झ. सर्वदो° । ८ क. घ. °रिणम° । ९ घ. छ. °वेकहे° । ज. °वेके हे° । १० छ. °वं हि स° । ११ ख. छ. °षत्वाश° । १२ ख. छ. °द्योतिम° । १३ झ. °त्यर्थे° । १४ क. °ल्पत्वशू° । १५ ख. घ. ङ. ज. °म इति वि° । १६ ग. ज. °णयोः प्रतिषेधयति । १७ घ. ज. °धयाति । १८ झ. °दभावं । १९ च. एनं विदित्वाऽद्वै° । २० क. °दित्वाऽद्वै° । २१ घ. च. ज. °ते यो° । २२ घ. ज. °गमनेनैव । २३ क. छ. °तीतो ज° । २४ ख. °नप्रपञ्चप्र° । २५ ग. °प्रपञ्चसं° ।

तीत्याह—तस्मादिति । शास्त्रादद्वैतमवगम्य स्मृतिसंततिं कुर्वतो लोकानुवर्तने विधिनि-यममाह—अद्वैतमिति । तस्मादित्यस्यार्थमाह—यस्मादिति । एवमिति निर्विक-ल्पत्वादिपरामर्शः[1] । विदित्वा शास्त्रतोऽवगम्येत्यर्थः । अद्वैतावगतिदार्ढ्यार्थं स्मृतिसंततिक[2]-र्तव्यतायां नियमविधिमभ्यनुजानाति—अद्वैत इति । अद्वैतमित्याद्युत्तरार्धं विभजते—तच्चेति । जड[3]सदृशस्य कथं लोकाचरणमबुद्धिपूर्वकारि[4]त्वादित्याशङ्क्याऽऽह[5]—सर्वलो-केति । लौकिकव्यवहारानतीत्य विदुषो जडवदाचरणं कीदृशमित्यपेक्षायां चतुर्थं पाद-मनूद्य तात्पर्य[6]मर्थमाह—जडवदिति । एवंविधोऽहमित्यात्मानं विद्याभिजनादिभि[7]रप्रख्या-पयञ्जडवदेव विद्वाँल्लोकमाचरेदिति योजना[8] ॥ ३६ ॥

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥ ३७ ॥

कया चर्यया लोकमाचरेदित्याह—स्तुतिनमस्कारादिसर्वकर्मवर्जित-स्त्यक्तसर्वबाह्यैषणः प्रतिपन्नपरमहंस[9]पारिव्राज्य[10] इत्यभिप्रायः । "एतं[11] वै तमात्मानं विदित्वा" इत्यादिश्रुतेः । "तद्बुद्धयस्तदात्मानस्तन्निष्ठा-स्तत्परायणाः" इत्यादिस्मृतेश्च । चलं शरीरं प्रतिक्षणमन्यथाभावात् । अचलमात्म[12]तत्त्वम् । यदा कदाचिद्भोजनादिव्यवहारनिमित्तमाकाशव-[13]द्चलं स्वरूपमात्म[14]तत्त्वमात्मनो निकेत[15]माश्र[16]यमात्मस्थितिं विस्मृत्याह-मिति मन्यते यदा[17] तदा चलो देहो निकेतो यस्य सोऽयमेवं चलाचल-निकेतो विद्वान्न पुनर्बाह्यविषयाश्रयः । स च यादृच्छि[18]को भवेत् । यदृच्छा[19]प्राप्तकौपीनाच्छादनग्रासमात्रदेहस्थितिरित्यर्थः ॥ ३७ ॥

ननु परापरदेवयोः स्तुतिपूर्वकं[20]प्रणामस्य श्राद्धादिक्रियायाश्च कर्तव्यतया प्रति-बन्धात्कथं विदुषो जडवदाचरणमिति तत्राऽऽह—निस्तुतिरिति । तथाऽपि जीवतो[21] क्वापि स्थातव्यत्वादाश्रयमुद्दिश्य प्रवृत्तेरावश्यकत्वात्कुतो जडसादृश्यमित्याशङ्क्याऽऽह—चलेति । चलं चाचलं च चला[22]चले ते निकेतो यस्याऽऽश्रयः स तथेति यावत् । तथाऽपि

१ घ. ज. झ. °कल्पादि° । २ क. °ततिं क° । ३ क. °डसादृश्यस्य । घ. °दृद° । ४ ज. °र्वकत्वा° । ५ ङ. झ. °त्याह । ६ ग. झ. °त्पर्यार्थमा° । ७ क. °भिर्न प्र° । ८ क. °ना । °नं । ९ क. °न्नपारमहंस्यपा° । १० ङ. च. ज. झ. °सपरि° । ११ घ. ङ. च. एवं चैत° । १२ झ. °त्मत्वम् । १३ च. °चलस्व° । १४ घ. ज. °त्मनो । १५ क. °तनमा° । १६ ज. °श्रममा° । १७ छ. दा च° । १८ च. झ. °को य° । १९ झ. °च्छायाः प्रा° । २० झ. °प्रमाणगम्यस्य । २१ क. झ. °वतां क्वा° । ग. °वतायाः क्वा° । २२ घ. ङ. ज. °ले नि° ।

कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया प्रवृत्तिध्रौव्यान्न विदुषो जडतुल्यतेत्याशङ्क्याऽऽह—यतिरिति । आकाङ्क्षापूर्वकं पूर्वार्धाक्षराणि व्याचष्टे—कयेत्यादिना । वर्णाश्रमाभिमानवतस्तत्तत्कर्मसु वर्तमानस्य कथमिदं विशेषणमित्याशङ्क्याऽऽह—त्यक्तेति । परमहंसस्य पारिव्राज्यं प्रतिपत्तुमशक्यमप्रामाणिकत्वादिति चेन्मैवं श्रुतिस्मृतिसिद्धत्वादित्याह—एतमिति । विदित्वेत्यापातिकं वेदनं व्युत्थानहेतुत्वेनोच्यते । तस्मिन्नेव परस्मिन्वस्तुनि विषयान्तरेभ्यो व्यावृत्ता बुद्धिर्येषामिति तथा । तदेवं परं वस्त्वात्मा निरुपचरितं स्वरूपं येषां ते तथोच्यन्ते । तस्मिन्नेव परस्मिन्नात्मनि निष्ठा निश्चयेन स्थितिर्येषां ते तथेत्याह—तन्निष्ठा इति । तदेवाऽऽत्मभूतं परं वस्तु परमयनं परा गतिर्येषां ते तथेत्याह—तत्परायणा इति । आदिशब्देन सर्वकर्माणि मनसेत्यादिवाक्यं गृह्यते । कदा पुनश्चलो देहो विदुषो निकेतो भवति तत्राऽऽह—यदेति । अविवक्षिते हि कालविशेषे विवक्षितं व्यवहारं निमित्तीकृत्याऽऽत्मस्थितिमुक्तविशेषणवर्ती विस्मृत्याहंकारममकारपरवशो यदा विद्वानवतिष्ठते तदेति योजना । स्वभावतस्त्वचलमात्मस्वरूपमेवास्य निकेतनम् । चलं पुनः शरीरमुपदर्शितविस्मरणद्वारेणेति निगमयति—सोऽयमिति । अविदुषो विशेषार्थं व्यावर्त्य कीर्तयति—न पुनरिति । चतुर्थपादार्थमाह—स चेति ॥ ३७ ॥

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ।
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ३८ ॥

इति गौडपादीयकारिकायां(सु) वैतथ्याख्यं
द्वितीयं प्रकरणम् ॥ २ ॥

बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकं च देहादिलक्षणं रज्जुसर्पादिवत्स्वप्नमायादिवच्चासत् । "वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुतेः । आत्मा च सबाह्याभ्यन्तरो ह्यजोऽपूर्वोऽनन्तरोऽबाह्यः कृत्स्न आकाशवत्सर्वगतः सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियस्तत्सत्यं स आत्मा "तत्त्वमसि" इति श्रुतेः । इत्येवं तत्त्वं दृष्ट्वा तत्त्वीभूतस्तदारामो न बाह्यरमणो यथाऽतत्त्वदर्शी कश्चिच्चित्तमात्मत्वेन प्रतिपन्नश्चित्तचलनमनु चलितमात्मानं मन्यमानस्तत्त्वाच्चलितं देहादिभूतमात्मानं कदाचिन्मन्यते प्रच्युतोऽहमात्मतत्त्वादिदानीमिति । समाहिते तु मनसि कदाचित्तत्त्वभूतं प्रसन्नात्मानं मन्यत इदानीमस्मि तत्त्वीभूत इति । न

१ ङ. °पेक्षायाः प्र° । °पेक्षायां प्र° । २ ज. प्रतिध्रौ° । ३ घ. ज. °स्तत्क । ४ ग. °त्याह–ए° । ५ छ. °व स्वात्मा । ६ घ. ज. परव° । ७ ज. आत्मश° । ८ छ. °हो निके° । ९ ज. °रप° । १० ग. झ. °र्थमा° । ११ घ. °णं च रं° । १२ घ. ङ. ज. तत्त्वीभू° ।

तथाऽऽत्मविद्भवेत् । आत्मन एकरूपत्वात्स्वरूपप्रच्यवनासंभवाच्च । सदैव ब्रह्मास्मीत्यप्रच्युतो भवेत्तत्त्वात्सदाऽप्रच्युतात्मतत्त्वदर्शनो भवेदित्यभिप्रायः । "शुनि चैव श्वपाके च" । "समं सर्वेषु भूतेषु" इत्यादिस्मृतेः ॥ ३८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतौ गौडपादीयागमशास्त्रभाष्ये वैतथ्याख्यं द्वितीयप्रकरणम् ॥ २ ॥

अहमेव परं ब्रह्म न मत्तोऽन्यदस्ति किंचिदिति स्मृतिसंततिकरणमपि न कालविशेषनियतं किं तु नैरन्तर्येण कर्तव्यमित्याह—**तत्त्वमिति** । आध्यात्मिकं शरीरादि कल्पितं तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो देहाद्बहिरवस्थितं पृथिव्यादि च कल्पितत्वेनावस्तुत्वादधिष्ठानमात्रमेवेत्यनुभूय स्वयमपि द्रष्टा परमार्थवस्तुस्वभावमापन्नस्तत्रैवाऽऽसक्तचेता बाह्येभ्यो विषयेभ्यो व्यावृत्तबुद्धिस्तस्मिन्नेव तत्त्वे परमार्थभूते प्रतिष्ठितस्तद्दर्शननिष्ठः स्यादित्यर्थः । पृथिव्यादेश्च प्रत्येकं परमार्थत्वसंभवे कथमद्वैतनिष्ठा सिध्येदित्याशङ्क्य व्याचष्टे—**बाह्यमित्यादिना** । किं तदुभयोस्तत्त्वं तदाह—**रज्जुसर्पवदिति** । उक्तस्य विकारजातस्यासत्त्वे प्रमाणमाह—**वाचारम्भणमिति** । द्रष्टुरात्मनोऽपि दृश्यप्रतियोगित्वात्तुल्यं वाचारम्भणत्वमित्याशङ्क्याऽऽह—**आत्मा चेति** । भवतु परस्याऽऽत्मनस्तत्तदागमवचननिर्देशादुक्तलक्षणत्वं तथाऽपि द्रष्टुरात्मनो न यथोक्तरूपत्वमित्याशङ्क्याऽऽह—**तत्सत्यमिति** । विशेषणानि तु प्राचीनानि तत्तदागमोपात्तान्यपुनरुक्तानि । द्वितीयार्धं व्याचष्टे—**इत्येवमिति** । आत्मारामत्वं कथमित्याशङ्क्य बाह्यविषयासक्तिं त्यक्त्वा प्रत्यगात्मन्येव * परितृप्तत्वादित्याह—**न बाह्येति** । तत्त्वादप्रच्युतो भवतीत्येतद्व्यतिरेकमुखेन(ण) व्याकरोति—**यथेत्यादिना** । अतत्त्वदर्शीति च्छेदः । आत्मविदो नान्यवस्थितमात्मदर्शनमित्यत्र हेतुमाह—**आत्मन इति** । सति स्वरूपे स्वरूपात्प्रच्युतेरप्रसक्तत्वात्तत्प्रतिषेधो युक्तो न भवतीत्याशङ्क्याऽऽह—**सदेति** । वस्तुनः सदैकरूपत्वे स्मृतिमुदाहरति—**शुनि चेति** । समदर्शिनः सदैकरूपवस्तुदर्शिन एव पण्डिता नान्ये तथेत्यर्थः । स्वरूपाप्रच्यवने च स्मृतिं दर्शयति—**सममिति** । तत्र हि विनश्यत्स्वविनश्यन्तमिति स्वरूपाप्रच्यवनमुक्तम् ॥ ३८ ॥

इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयकारिकाभाष्यटीकायां वैतथ्याख्यं द्वितीयप्रकरणम् ॥ २ ॥

---

* भवेदित्येतदिति पाठान्तरम् ।

१ क. °दैवं ब्र° । २ क. °त्मद° । ३ ग. कालावि° । ४ ख. ङ. छ. भवेदित्ये° । ५ ज. वस्तुतः । ६ क. ङ. °कस्वरू° । ७ क. °रूपप्र° ।

अथ गौडपादीयकारिकास्वद्वैताख्यं तृतीयं प्रकरणम्।

ॐ॥ उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः॥ १॥

ओंकारनिर्णय उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेतिप्रतिज्ञामात्रेण। ज्ञाते द्वैतं न विद्यत इति च। तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापीत्यत आह। शक्यते तर्केणापि ज्ञातुम्। तत्कथमित्यद्वैतप्रकरणमारभ्यते। उपास्योपासनादिभेदजातं सर्वं वितथं केवलश्चाऽऽत्माऽद्वयः परमार्थ इति स्थितमतीते प्रकरणे। यत उपासनाश्रित उपासनामात्मनो मोक्षसाधनत्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म। तदुपासनं कृत्वा जाते ब्रह्मणीदानीं वर्तमानोऽजं ब्रह्म शरीरपातादूर्ध्वं प्रतिपत्स्ये प्रागुत्पत्तेश्चाजमिदं सर्वमहं च। यदात्मकोऽहं प्रागुत्पत्तेरिदानीं जातो जाते ब्रह्मणि च वर्तमान उपासनया पुनस्तदेव प्रतिपत्स्य इत्येवमुपासनाश्रितो धर्मः साधको येनैवं क्षुद्रब्रह्मवित्तेनासौ कारणेन कृपणो दीनोऽल्पकः स्मृतो नित्याजब्रह्मदर्शिभिरित्यभिप्रायः। "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिश्रुतेस्तलवकाराणाम्॥ १॥

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्याद्वैतमार्थिकमपि तर्कतः संभावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदपवदति—उपासनेति। देहस्य धारणाद्धर्मो जीवो भूतसंघाताकारेण जाते ब्रह्मणि तदभिमानित्वेन वर्तते। स प्रागुत्पत्तेरजं सर्वमित्येवं कालावच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थसाधनत्वेनाऽऽश्रितस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्ध्वमित्येवं यतो मिथ्याज्ञानवानवतिष्ठते तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः

१ घ. द्वैते। २ च. °यायां ग°। ३ च. °ह। अशक्यत°। च. °ह नु श°। ४ च. °त्यत अद्वै°। ५ झ. °ल आत्माऽ°। ६ घ. ङ. च. ज. झ. °र्थंत इ°। ७ क. °तीतप्र°। ८ ङ. छ. °स नमा°। ९ ख. ग. ज. °माश्रित्य। उपासनामा°। १० घ. ङ. ज. ज्ञाते। ११ झ. जाते। १२ च. झ. °णि व°। १३ ग. ङ. ज. °नामाश्रि°। १४ च. °ह्मचित्ते°। १५ क. °चा वाऽभ्यु°। १६ च. °न च वा°। १७ क. ख. छ. °द्वैतं पारमा°। १८ ग. °कद°। १९ झ. °मानत्वे°। २० क. °रजः स°। २१ ख. °श्रित्य ततस्त°।

षामपि तत्त्वज्ञानं कथंचिदुपजातं चेदलं मनोनिग्रहेणेत्याशङ्क्याऽऽह—तेषामिति । अभयं तदेव तत्त्वज्ञानम् । दुःखनिवृत्तिरपि मनोनिग्रहमपेक्ष्य भवतीत्याह—किं चेति । तदेव व्यतिरेकमुखेन(ण) स्फोरयति—न हीति । इतश्च मनो निगृ(ग्र)हीतव्यमित्याह—किं चेति । अभयमित्यत्र सूचितं स्पष्टं विवृणोति—आत्मेति । इतश्च मनोनिग्रहोऽर्थवानित्याह—तथेति । तेषां साधकानां मुमुक्षूणामिति यावत् ॥ ४० ॥

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥

मनोनिग्रहोऽपि तेषामुदधेः कुशाग्रेणैकबिन्दुनोत्सेचनेन शोषणव्यवसायवद्व्यवसायवतामनवसन्नान्तःकरणानामनिर्वेदादपरिखेदतो भवतीत्यर्थः ॥ ४१ ॥

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिध्येदित्याशङ्क्याऽऽह—उत्सेक इति । दृष्टान्तदार्ष्टान्तिकभूतश्लोकनिविष्टाक्षराणि व्याचष्टे—मनोनिग्रहोऽपीति । तेषां व्यवसायवतामुद्योगभागिनामनुद्वेगवतामिति संबन्धः । चक्षुषो निमीलने तमो दृश्यते तस्य चोन्मीलने घटाद्येवोपलभ्यते न कदाचिदपि ब्रह्मेत्युद्वेगपरिवर्जनात्प्रागुदीरितानां मनोनिग्रहः संभवति तदाह—अपरिखेदत इति ॥ ४१ ॥

उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ ४२ ॥

किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रह उपायो नेत्युच्यते । अपरिखिन्नव्यवसायवान्सन्वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयान्निरुन्ध्यादात्मन्येवेत्यर्थः । किं च लीयतेऽस्मिन्निति सुषुप्तो लयस्तस्मिँल्लये च सुप्रसन्नमायासवर्जितमपीत्येतन्निगृह्णीयादित्यनुवर्तते । सुप्रसन्नं चेत्कस्मान्निगृह्यत इति । उच्यते । यस्माद्यथा कामोऽनर्थहेतुस्तथा लयोऽपि । अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥ ४२ ॥

समाधिं कुर्वतस्तत्त्वसाक्षात्कारप्रतिबन्धका लयविक्षेपसुखरागास्तेभ्यो मनसो वक्ष्य-

---

१ झ. °ति । तदेवाभ° । २ च. मनसो निग्रहे तेषामुपायमाह—उत्सेक इति । मनो° । ३ ख. ग. °दधेर्यद्वत्कुशा° । ४ च. °ने शो° । ५ च. °यनुद्वयवता° । ६ च. °वशान्तः° । ७ झ. मनसो नि° । ८ ज. °पाये मे° । ९ च. ज. झ. °वान्व° । १० च. °माणोपा° । ११ च. °ये वि° । १२झ. °ते यस्मि° । १३ च. झ. °तमिल्ले° । १४ छ. °न्धकल° । १५ ग. घ. ङ. ज. °पकषायसु° ।

माणोपायेन निग्रहं कुर्यात् । अन्यथा समाधिसाफल्यानुपपत्तेरित्याह—उपायेनेति । प्रागुक्तादुपायादेव मनोनिग्रहपरिग्रहे श्रवणादिविध्यानर्थक्यमिति मन्वानः शङ्कते—किमिति । पूर्वोक्तोपायवतः श्रवणाद्यनुतिष्ठतो मनोनिग्रहद्वारा तत्त्वज्ञानसिद्धिरित्युत्तरमाह—नेत्युच्यत इति । तृतीयपादं व्याचष्टे—किं चेति । लीयते स्थानद्वयमिति शेषः । चतुर्थपादमाकाङ्क्षाद्वारा विवृणोति—सुप्रसन्नमित्यादिना ॥ ४२ ॥

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥

कः स उपाय इति । उच्यते । सर्वं द्वैतमविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात्कामनिमित्तो भोग इच्छाविषयस्तस्माद्विप्रसृतं मनो निवर्तयेद्वैराग्यभावनयेत्यर्थः । अजं ब्रह्म सर्वमित्येतच्छास्त्राचार्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति । अभावात् ॥ ४३ ।

उपायेन निगृह्णीयादित्युक्तम् । तमेवोपायं वैराग्यरूपमुपदिशति—दुःखमिति । ज्ञानाभ्यासाख्यमुपायान्तरमुपन्यस्यति—अजमिति । अक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति—कः स इति । तत्र पूर्वार्धं व्याकरोति—उच्यत इत्यादिना । वैराग्यभावना तत्र तत्र द्वैतविषये दोषानुसंधानेन वैतृष्ण्यभावना । तया कामभोगान्मनो निरोद्धव्यमित्यर्थः । द्वितीयार्धं ज्ञानाभ्यासविषयं व्याकरोति—अजमित्यादिना ॥ ४३ ॥

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ४४ ॥

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं संबोधयेन्मनः । आत्मविवेकदर्शनेन योजयेत् । चित्तं मन इत्यनर्थान्तरम् । विक्षिप्तं च कामभोगेषु शमयेत्पुनः । एवं पुनः पुनरभ्यस्यतो लयात्संबोधितं विषयेभ्यश्च व्यावर्तितं नापि साम्यापन्नमन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं मन इति विजानीयात् । ततोऽपि यत्नतः साम्यमापादयेत् ।

---

१ ग. ज. साकल्या° । २ क. झ. °नुष्ठितो । ३ च. °तजातम° । ४ ख. °भावं नयेत्य° । घ. ज. °भावं नयेत्य° । ५ झ. °वमानयेदित्य° । ६ झ. अजमि° । ७ झ. °ग्यमु° । ८ ग. °ने च वै° । ९ छ. झ. °न च वै° । १० घ. ङ. ज. °मसङ्गान्म° । ११ च. न दिचा° । १२ घ. °पास-नेन । १३ घ. ज. °त्मद° । १४ घ. ङ. च. °भ्यसतो । १५ ज. °साम्यमाप° । १६ छ. °रागबी° ।

यदा तु समप्राप्तं भवति समप्राप्त्यभिमुखी भवतीत्यर्थः। ततस्तन्न विचालयेद्विषयाभिमुखं न कुर्यादित्यर्थः ॥ ४४ ॥

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्तितं[1] मनो रागप्रतिबद्धं श्रवणमनननिदिध्यासनाभ्यासप्रसूतसंप्रज्ञातसमाधिना[2]ऽसंप्रज्ञातसमाधिपर्यन्तेन ततोऽपि प्रतिबन्धाद्व्यावर्तनीयमित्याह—लय इति। श्लोकाक्षराणि व्याकरोति[3]—एवमित्यादिना। ज्ञानाभ्यासश्रवणाद्यावृत्तिर्विषयेषु क्षयिष्णुत्वादिदोषदर्शनेन[4] वैतृष्ण्यं वैराग्यं लयो निद्रा। संप्रबोधनमेवाभिनयति—आत्मेति। मनसि प्रकृते किमिति चित्तमुच्यते तत्राऽऽह—चित्तमिति। विक्षिप्तं विप्रसृतं शमयेद्व्यावर्तयेदिति यावत्। पुनरित्यत्र विवक्षितमर्थमाह—एवमिति। उभयतो व्यावर्तितं मनस्तर्हि निर्विशेषब्रह्मस्वरूपतां गतमित्याशङ्क्याऽऽह—नापीति। अन्तरालावस्थमनसः स्वरूपं तृतीयपादावष्टम्भेन स्पष्टयति—सकषायमिति। रागस्य बीजत्वं पराचीनविषयप्रवृत्तिं प्रति प्रतिपत्तव्यम्। यथोक्तं मनो ज्ञात्वा किं कर्तव्यमित्यपेक्षायामाह—ततोऽपीति। अन्तरालावस्था पञ्चम्या परामृश्यते। लयावस्थादि दृष्टान्तयितुमपिशब्दः। यत्नतः संप्रज्ञातसमाधेरिति यावत्। साम्यमसंप्रज्ञातसमाधिमित्यर्थः। चतुर्थपादस्यार्थमाह—यदा त्विति। समाधिद्वयद्वारेण समं निर्विशेषं परिपूर्णं ब्रह्मस्वरूपं प्राप्य मनस्तन्मात्रतया समाप्तं चेदप्राप्तप्रतिषेधः स्यादित्याशङ्क्याऽऽह—समप्राप्तीति। ततो निर्विशेषवस्तुप्राप्त्याभिमुख्यादनन्तरामित्यर्थः। किं तन्मनसश्चालनं यत्प्रतिषिध्यते तत्राऽऽह—विषयेति ॥ ४४ ॥

नाऽऽस्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत्।
निश्चलं निश्चरच्चित्तमेकी कुर्यात्प्रयत्नतः ॥ ४५ ॥

समाधित्सतो योगिनो यत्सुखं जायते तन्नाऽऽस्वादयेत्। तत्र न रज्येतेत्यर्थः। कथं तर्हि। निःसङ्गो निस्पृहः प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेति विभावयेत्। ततोऽपि सुखरागान्निगृह्णीयादित्यर्थः। यदा पुनः सुखरागान्निवृत्तं निश्चलस्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं ततस्ततो नियम्योक्तोपायेनाऽऽत्मन्येवैकी कुर्यात्प्रयत्नतः। चित्स्वरूपसत्तामात्रमेवाऽऽपादयेदित्यर्थः ॥ ४५ ॥

---

१ झ. °र्तितम°। २ क. °माधिप°। ३ ज. व्याचष्टे। ४ छ. °नेनैवं वै°। ५ घ. °सं प्र°। ६ ग. झ. °ह्मस्वरू°। ७ ग. झ. गमित°। ८ ग. °स्थापि प°। ९ ख. झ. °ह्मस्वरू°। १० च. °र्हि वर्ते तत्राऽऽह निःसङ्ग इति नि°।

समाधित्सायां यत्सुखमुत्पद्यते तद्विषयाभिलाषादपि मनो निरोद्धव्यमित्याह—**नाऽऽस्वादयेदिति**। तत्रेति समाध्यवस्थोच्यते। किं तु तस्यामवस्थायां सुखं यदुपलभ्यते तदज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकज्ञानेन निस्पृहः सन्भावयेदित्याह—**निःसङ्ग इति**। किं च यच्चित्तं प्राचीनवैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं तद्यदि स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत्तदा संप्रज्ञातसमाधेरसंप्रज्ञातसमाधिपर्यन्तात्प्रयत्नात्तदात्मन्येवैकीकृत्य तन्मात्रमापाद्य परिशुद्धपरिपूर्णब्रह्मात्मकः स्वयं तिष्ठेदित्याह—**निश्चरदिति**। प्रथमपादाक्षराणि योजयति—**समाधित्सत इति**। तस्य समाध्यवस्थायामिति शेषः। द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति—**कथमित्यादिना**। निःस्पृहो यथोक्ते सुखेऽनुरागरहितः सन्नित्यर्थः। विवेकरूपा बुद्धिरागन्तुकस्य रज्जुसर्पवत्कल्पितत्वमित्येवमात्मिका तया भावयेदिति संबन्धः। भावनाप्रकारमभिनयति—**यदित्यादिना**। प्रथमार्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थं निगमयति—**ततोऽपीति**। उत्तरार्धं विभजते—**यदेत्यादिना**। पूर्वोक्तसमाध्यनुरोधादात्मन्येव निश्चलस्वभावं सच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरद्भवतीति संबन्धः। तच्च चित्तं बाह्यविषयाभिमुख्यादुक्तोपायेन ज्ञानाभ्यासादिना व्यावर्त्याऽऽत्मन्येव परस्मिन्ब्रह्मणि प्रयत्नतः संप्रज्ञातसमाधिवशादेकी कुर्यात्। असंप्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवाऽऽपादयेदित्यर्थः। तदेव स्पष्टयति—**चित्स्वरूपेति** ॥ ४५ ॥

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः।**
**अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥**

**यथोक्तोपायेन निगृहीतं चित्तं यदा सुषुप्ते न लीयते न च पुनर्विषयेषु विक्षिप्यते, अनिङ्गनमचलं निवातप्रदीपकल्पम्। अनाभासं न केनचित्कल्पितेन विषयभावेनावभासत इति। यदैवंलक्षणं चित्तं तदा निष्पन्नं ब्रह्म ब्रह्मस्वरूपेण निष्पन्नं चित्तं भवतीत्यर्थः ॥ ४६ ॥**

कदा पुनरिदं चित्तं ब्रह्ममात्रमापद्यते तत्राऽऽह—**यदेति**। त्रिविधप्रतिबन्धविधुरं विषयाकाररहितं यदा चित्तमवतिष्ठते तदा ब्रह्म संपन्नं भवतीत्यर्थः। अक्षराणि व्याचष्टे—**यथोक्तेनेत्यादिना**। उपायो ज्ञानाभ्यासादिः। निगृहीतं विषयेभ्यो विमुखीकृतं न लीयते न निद्रापारवश्येन कारणात्मतां गतमित्यर्थः। अचलं रागादिवासनाशून्यमित्यर्थः।

---

१ छ. तु समाध्यव°। २ क. ग. झ. °कविज्ञा°। ३ ख. °त्रतामा°। ४ क. ख. °मापय। ५ ग. झ. °त्पर्यं नि°। ६ क. यथेत्या°। ७ क. तत्तथा। ८ ख. छ. °थोक्तेनोपा°। ९ ख. घ. ङ. ज. °षुप्तौ न। १० ख. ग. छ. झ. °निर्वात°। ११ झ. °तदा°। १२ क. °कल्पना°। १३ ख. च. °ह्म स्व°। १४ ख. ग. छ. झ. °दा तद्ब्रह्म।

अचलत्वे दृष्टान्तः–निर्वातेति । किं तु ब्रह्माकारेणेत्येवंलक्षणं चित्तं यदा संपद्यते तदेति योजना । निष्पन्नं ब्रह्मेत्युक्तमेव स्फुटयति—ब्रह्मस्वरूपेणेति ॥ ४६ ॥

स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥

यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्वस्थं स्वात्मनि स्थितम् । शान्तं सर्वानर्थोपशमरूपम् । सनिर्वाणं निर्वृतिर्निर्वाणं कैवल्यं सह निर्वाणेन वर्तते । तच्चाकथ्यं न शक्यते कथयितुम् । अत्यन्तासाधारणविषयत्वात् । सुखमुत्तमं निरतिशयं हि तद्योगिप्रत्यक्षमेव । न जातमित्यजं यथा विषयविषयम् । अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तेनात्स्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥ ४७ ॥

असंप्रज्ञातसमाध्यवस्थायां येन रूपेण चित्तमभिनिष्पद्यते तद्ब्रह्मस्वरूपं विशिनष्टि—स्वस्थमिति । ज्ञेयेनाव्यतिरिक्तमिति शेषः । तत्र विदुषां संमतिमुदाहरति—सर्वज्ञमिति । यथोक्तमित्यसंप्रज्ञातसमाधिलक्षणं ब्रह्मेत्यर्थः । तस्य परमपुरुषार्थरूपतामाह—सुखमिति । वैषयिकं सुखं व्यवच्छेत्तुं परमार्थेति विशेषणम् । किं तत्र ज्ञानेनेत्याशङ्क्याऽऽह—आत्मेति । तस्य सत्यस्याऽऽगमाचार्यानुरोधिना बोधेन लक्ष्यते प्राप्यते ब्रह्मेति तथोच्यते । तस्य स्वमहिमप्रतिष्ठत्वमाह–स्वात्मनीति । सर्वस्य त्रिविधस्यानर्थस्योपशमेनोपलक्षितत्वादपि पुरुषार्थत्वसिद्धिरित्याह—सर्वेति । निरतिशयानन्दाभिव्यक्तिर्निरवशेषानर्थोच्छित्तिश्चेत्येवंलक्षणं मोक्षमाचक्षते । तत्कथमिदं ब्रह्मेत्याशङ्क्याऽऽह–सनिर्वाणमिति । तस्य क्षीरगुडादिमाधुर्यभेदस्येव स्वानुभवमात्राधिगम्यत्वादवाच्यत्वमाह—[११]तच्चेति । यदुक्तं परमार्थसुखमिति तदिदानीमुपपादयति–सुखमिति । तर्हि सर्वेषामेव तद्भूयादित्याशङ्क्याऽऽह–योगीति । ज्ञानस्याजातत्वे वैधर्म्यदृष्टान्तमाह—यथेति ॥ ४७ ॥

---

१ ख. ग. च. छ. झ. निर्वाते° । २ घ. झ. निवृत्तिर्नि° । ज. निर्वृत्तिनिर्वा° । ३ क. छ. °यम° । ४ ज. °नुपपन्ने° । ५ च. छ. सत्सुखेन । ६ ग. झ. °ज्ञरू° । ७ ग. झ. °नेत्यत्राऽऽह । ८ ग. झ. °ति यथो° । ९ ग. झ. °शमनो° । १० झ. °गन्तव्यत्वा° । ११ ग. °मेवंभावा° । घ. °षामेव मायादि° ।

न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ४८ ॥

इति गौडपादीयकारिकायामद्वैताख्यं तृतीयं
प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

सर्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत्सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति । परमार्थसत्यं तु न कश्चिज्जायते जीवः कर्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण । अतः स्वभावतोऽजस्यास्यैकस्याऽऽत्मनः संभवः कारणं न विद्यते नास्ति । यस्मान्न विद्यतेऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत् । पूर्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन्सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किंचिन्न जायत इति ॥ ४८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतौ गौडपादीयभाष्य आगमशास्त्रविवरणेऽद्वैताख्यं तृतीयप्रकरणभाष्यं समाप्तम् ॥ ३ ॥

ॐ तत्सत् ।

उक्तानामुपायानां परमार्थसत्यत्वे सत्यद्वैतहानिः । अन्यथा तदप्रमितिरित्याशङ्क्याऽऽह— **न कश्चिदिति** । तत्र हेतुमाह— **संभवोऽस्येति** । श्लोकाक्षराणि व्याकर्तुं भूमिकां व्याकरोति— **सर्वोऽपीति** । व्यावहारिकसत्यत्वमेवोपायानां न परमार्थसत्यत्वमित्यङ्गीकृत्य पारमार्थिकसत्यस्य प्रतिपत्त्युपायत्वेनैवोक्तेत्याह— **मृदिति** । यदुक्तं मनोनिग्रहादीनां परमार्थत्वेऽद्वैतहानिरिति तत्राऽऽह— **नेत्यादिना** । तेषामपरमार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न, व्यावहारिकसत्यानामपि तत्प्रमितिहेतुत्वस्य प्रतिबिम्बवदुपपत्तेरिति भावः । उपायानां व्यावहारिकसत्यत्वेनैव पारमार्थिकं सत्यत्वं किं न स्यादिति तत्राऽऽह— **परमार्थेति** । तदेव स्पष्टयति— **कर्तेति** । स्वभावतोऽजत्वं हेतूकर्तव्यम् । तत्रैव हेत्वन्तरमाह— **अत इति** । हेत्वन्तरमेव स्पष्टयति— **यस्मादिति** । उत्तरार्धं व्याचष्टे— **पूर्वेष्विति** । पूर्वेषु ग्रन्थेष्विति शेषः । इतिशब्दोऽद्वैतप्रकरणपरिसमाप्तिं द्योतयति ॥ ४८ ॥

---

१ च. °तिश्रीउपदेशग्रन्थे द्वै° । घ. ङ. °ति माण्डूक्योपनिषद्वार्तिके तृतीयमद्वैताख्यं प्र° । २ झ. °ष्टिरूपावास' । ३ ज. °ते का° । ४ झ. °तत्सदु° । ५ च. °पेऽणु° । ६ छ. °ध्यप° । ७ ख. घ. ङ. च. झ. °कृतावाग° । ८ ग. छ. झ. °कां क° । ९ छ. °र्थेस्व° । १० घ. °स्वमर्ङ्ग° । ११ ग. ङ. °स सृष्टिः पा° ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपाद[कारिका]भाष्यटीकायामद्वैताख्यं तृतीयं प्रकरणं समाप्तम् ॥ ३ ॥

---

अथालातशान्त्याख्यं चतुर्थप्रकरणम् ।

---

ज्ञानेनाऽऽकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम् ॥ १ ॥

ओंकारनिर्णयद्वारेणाऽऽगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्यैतदुत्तमं सत्यमित्युपसंहारः कृतः । अन्ते तस्यैतस्याऽऽगमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम् । क्लेशानास्पदत्वात्सम्यग्दर्शनमित्यद्वैतदर्शनं स्तूयते । तदिह विस्तरेणान्योन्यविरुद्धतयाऽसम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनासिद्धिरुपसंहर्तव्याऽऽवीतन्यायेनेत्यलातशान्तिरारभ्यते । तत्राद्वैतदर्शनं( न ) संप्रदायकर्तुरद्वैतस्वरूपेणैव नमस्कारार्थोऽयमाद्यश्लोकः । आचार्यपूजा ह्यभिप्रेतार्थसिद्ध्यर्थेष्यते शास्त्रारम्भे । आकाशेनेषदसमाप्तमाकाशंम( क )ल्पमाकाशतुल्यमेतत् । तेनाऽऽकाशकल्पेन ज्ञानेन, किम्, धर्मानात्मनः, किंविशिष्टान्गगनोपमान्गगनमुपमा येषां ते गगनोपमास्तानात्मनो धर्मान् । ज्ञानस्यैव पुनर्विशेषणम्——ज्ञेयैर्धर्मैरात्मभिरभिन्नमग्न्युष्णवत्सवितृप्रकाशवच्च ज्ञानं तेन ज्ञेयाभिन्नेन ज्ञानेनाऽऽकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन गगनोपमान्धर्मान्यः संबुद्धः संबुद्धवानित्ययमेवेश्वरो यो नारायणाख्यस्तं वन्देऽभिवादये द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं

---

१ ख. ग. घ. ङ. छ. ज. झ. °पादीयभा° । २ झ. °यविशेषवै° । ३ क. °च प्रसि° । ४ च. घ. °द्वैतश॰° । ५ ख. ज. °कादयस्तेषां । घ. °कास्तेषां । झ. काश्चैते° । ६ झ. °थ्यात्तद° । ७ छ. °त्वादात्मैकत्वबुद्धिरेव सम्य° । ८ छ, °द्ध्यर्थमिष्य° । ९ घ. °दसामान्यमा° । १० घ. °ज्ञानु-त्य° । ११ ज. °त्मध° ।

**पुरुषोत्तममित्यभिप्रायः । उपदेष्टृनमस्कारमुखेन(ण) ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥ १ ॥**

आद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्या[1]ऽऽदावोंकारोच्चारणवदन्ते परदेवताप्रणामवन्मध्येऽपि परदेवतारूपमुपदेष्टारं प्रणमति—**ज्ञानेति** । पूर्वोत्तरप्रकरणसंबन्धसिध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनु[2]वदति—**ओंकारेति** । अद्वैत इत्यद्वैतोपलक्षितं तृतीयं प्रकरणमुच्यते । चतुर्थं प्रकरणमवतारयितुमुपयुक्तमर्थान्तरमनु[3]वदति—**तस्येति** । द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता गृह्यन्ते । वैनाशिका नैरात्म्यवादिनः । रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम् । पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुत्रोपयुज्यते तत्राऽऽह—**क्लेशेति** । पातनिकामेवं कृत्वा समनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते—**तदिहेति** । तदसम्यग्दर्शनत्वमिति संबन्धः[4] । आवीतन्यायो व्यतिरेकन्यायः । यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वेऽवगतेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेको[5]ऽपि व्यभिचारशङ्कानिरासित्वेन[6] व्याप्तिनिश्चयार्थमिष्यते । तथा तर्कतः संभावितस्याऽऽगमेनावगतस्यापि प्रतिपक्षभूतवादान्तरापाकरणप्रपञ्चमन्तरेण पाक्षिकासम्यक्त्वशङ्का स्याद[7]द्वैतदर्शनस्येति तत्प्रतिषेधेन तात्सिद्धिरुपसंहर्तव्येत्यलातशान्तिदृष्टान्तोपलक्षितमारभ्यते प्रकरणमित्यर्थः । विशेषेण स्पष्टमितो[8] वीतः स न भवतीत्यवीतः । अवीत एवाऽऽवीतः । तेन न्यायेन व्यतिरेकेणेति यावत् । प्रकरणस्य तात्पर्यमेवं दर्शयित्वा प्रथमश्लोकस्य तात्पर्यमाह—**तत्रेति**[9] । तत्र चतुर्थप्रकरणं सप्तम्या परामृश्यते । किमित्यद्वैतरूपेणाऽऽचार्यो नमस्क्रियते तत्राऽऽह—**आचार्येति** । अभिप्रेतार्थः शास्त्रस्याविघ्नेन परिसमाप्तिस्तदर्थं विप्रतिपत्त्यादिव्यावृत्तिश्च । आकाशस्य[10] जडत्वाधिक्याज्ज्ञानं स्वप्रकाशमाकाशेनेपदसमाप्तं वक्तव्यम् । विभुत्वादावुपमा द्रष्टव्या । बहुवचनमुपाधिकल्पितभेदाभिप्रायम् । तेषामपि चिन्मात्रत्वं विवक्षित्वोक्तम् । **ज्ञानस्यैवेति** । तेनेत्यादि पुनरनुवादेनान्वयमन्वाचष्टे । आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते[11] नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो[12] भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति[13] प्रसिद्धं परमगुरुत्वं परमेश्वरस्येति[14] भावः । ननु प्रकरणे प्रारभ्यमाणे प्रतिपद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राऽऽह—**उपदेष्ट्रिति** ॥ १ ॥

---

१ ग. °त्याऽऽह—ओंका° । २ ग. झ. °न्ते च प° । ३ छ. °नुवदति । ४ ज. °न्धः । अवी° । झ. °न्धः । अविनीत° । ५ ज. °व्यतिरेकश° । ६ क. °रासितत्वे° । ७ ग. झ. °न संभ° । ८ ज. °तः । ते° । ९ ग. छ. झ. °ति च । त° । १० घ. °शस्याजत्वा° । ११ घ. °तेन ना° । १२ झ. तत्त्वतो । १३ ख. °ति सि° । १४ क. °श्वर इति ।

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।
अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥

अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये । स्पर्शनं स्पर्शः संबन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव, वै नामेति ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः । स च सर्वसत्त्वसुखो भवति । कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखरूपः, यथा तपः । अयं तु न तथा । किं तर्हि सर्वसत्त्वानां सुखः । तथेह भवति कश्चिद्विषयोपभोगः सुखो न हितः । अयं तु सुखो हितश्च । नित्यमप्रचलितस्वभावत्वात् । किं चाविवादो विरुद्धवदनं विवादः पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते सोऽविवादः । कस्मात् । यतोऽविरुद्धश्च य ईदृशो योगो देशित उपदिष्टः शास्त्रेण तं नमाम्यहं प्रणमामीत्यर्थः ॥ २ ॥

इदानीमद्वैतदर्शनयोगस्तुतये तन्नमस्कारं प्रस्तौति—अस्पर्शेति । श्लोकस्य तात्पर्यमाह—अधुनेति । तस्य च स्तुतिस्तत्साधनेषु प्रवृत्तावुपयुज्यते । संप्रत्यक्षराणि व्याकुर्वन्नस्पर्शयोगशब्दं व्याकरोति—स्पर्शनमिति । योगस्यान्यसंबन्धप्रसङ्गाभावात्कथमस्पर्शत्वमित्याशङ्क्याऽऽह—ब्रह्मेति । निपातयोरर्थं कथयति—वै नामेति । सर्वेषां सत्त्वानां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति—स चेति । सुखहेतावपि ब्रह्मस्वभावे विवक्षितं विशेषं दर्शयति—भवतीति । हितविशेषणस्य तात्पर्यमाह—तथेह भवतीत्यादिना । तस्य हितत्वे हेतुमाह—नित्यमिति । तस्यैव विशेषणान्तरमाह—किं चेति । तत्र हेतुं प्रश्नपूर्वकमाह—कस्मादिति । आत्मप्रकाशत्वाद्ब्रह्मस्वभावस्याविरुद्धत्वम् । न हि कस्यचिदात्मप्रकाशो विरुद्धो भवतीत्यर्थः । यथोक्तयोगज्ञानमार्गस्य संप्रदायागतत्वमाह—य ईदृश इति । तन्नमस्कारव्याजेन तस्य स्तुतिस्त[10]दुपायेषु श्रोतृप्रवृत्त्यर्थमत्र विवक्षितेत्याह—तं नमामीति ॥२॥

भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि ।
अभूतस्या[11]परे धीरा विवदन्तः परस्परम् ॥ ३ ॥

---

१ च. °ष्टो दुः° । २ घ. छ. °खस्वरू° । ३ ख. घ. ज. °यथेह° । ४ च. °दः प्रतिप° । ५ च. झ. °ग्रहो य° । ६ झ. °योगः स्तूयते त° । ७ ख. घ. झ. यथेह । ८ झ. °दम् । ९ ग. छ. झ. °कस्य यो° । १० अ. °तितदु° । ११ च. °परं धी° ।

कथं द्वैतिनः परस्परं विरुध्यन्त इति। उच्यते। भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि सांख्या न सर्व एव द्वैतिनः। यस्मादभूतस्याविद्यमानस्यापरे वैशेषिका नैयायिकाश्च धीरा धीमन्तः प्राज्ञाभिमानिन इत्यर्थः। [विवदन्तो] विरुद्धं वदन्तो ह्यन्योन्यमिच्छन्ति जेतुमित्यभिप्रायः॥ ३॥

अद्वैतदर्शनस्याविरुद्धत्वेनाविवादत्वं विशदीकर्तुं द्वैतिनां विवादं तावदुदाहरति—भूतस्येति। एवं विरुद्धं वदन्तो मिथो जेतुमिच्छन्तीत्याह—विवदन्त इति। प्रश्नपूर्वकं श्लोकाक्षराणि योजयति—कथमित्यादिना। एवकारार्थे हेतुमाह—यस्मादिति। प्राज्ञाभिमानिनो जातिमिच्छन्तीति पूर्वेण संबन्धः। चतुर्थपादं साध्याहारं व्याकरोति—विवदन्त इति॥ ३॥

भूतं न जायते किंचिदभूतं नैव जायते।
विवदन्तो द्वया ह्येवमजातिं ख्यापयन्ति ते॥ ४॥

तैरेवं विरुद्धवदनेनान्योन्यपक्षप्रतिषेधं कुर्वद्भिः किं ख्यापितं भवतीति। उच्यते। भूतं विद्यमानं वस्तु न जायते किंचिद्विद्यमानत्वादेवाऽऽत्मवदित्येवं वदन्नसद्वादी सांख्यपक्षं प्रतिषेधति सज्जन्म। तथाऽभूतमविद्यमानमविद्यमानत्वान्नैव जायते शशविषाणवदित्येवं वदन्सांख्योऽप्यसद्वादिपक्षमसज्जन्म प्रतिषेधति। विवदन्तो विरुद्धं वदन्तो द्वया द्वैतिनोऽप्येतेऽन्योन्यस्य पक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात्ख्यापयन्ति प्रकाशयन्ति ते॥ ४॥

पक्षद्वयनिषेधमुखेन सिद्धमर्थं कथयति—भूतमित्यादिना। श्लोकाक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति—तैरिति। तत्राऽऽद्यं पादमवतार्य व्याकरोति—उच्यत इति। द्वितीयपादं विभजते—तथेति। द्वितीयार्धं विभजते—विवदन्त इत्यादिना। सदसदतिरिक्तवस्त्वभावाद्वस्तुत उत्पत्तेरनुपपत्तिरित्याह—अर्थादिति॥ ४॥

ख्याप्यमानामजातिं तैरनुमोदामहे वयम्।
विवदामो न तैः सार्धमविवादं निबोधत॥ ५॥

तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलं न तैः सार्धं

---

१ क. °न्तोऽन्यो°। २ च. छ. झ. °न्तोऽन्यो°। ३ ग. छ. झ. °ति। प्रज्ञा°। ४ ग. झ. °नो भूतस्य जा°। ५ च. °तिबोधं। ६ झ. किं व्याख्यातं। ७ °त्वादात्म°। ८ ज. ख. घ. ज. °नत्वा°। ९ क. °या अद्वै°। १० च. झ. °न्यप°।

**विवदामः पक्षप्रतिपक्षग्रहणेन । यथा तेऽन्योन्यमित्यभिप्रायः । अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निबोधत हे शिष्याः ॥ ५ ॥**

तर्हि प्रतिवादिभिरुक्तत्वादजातिरपि भवता प्रत्याख्येयेत्याशङ्क्याऽऽह—**ख्याप्यमानामिति** । प्रतिवादिभिः सह विवादाभावे फलितमाह—**अविवादमिति** । अक्षराणि व्याचष्टे—**तैरित्यादिना** । अद्वैतवादिनो द्वैतवादिभिर्विवादाभावे वैधर्म्यदृष्टान्तमाह—**यथा त इति** । चतुर्थपादार्थमाह—**अत इति** ॥ ५ ॥

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥

**सदसद्वादिनः सर्वेऽपीति । पुरस्तात्कृतभाष्यश्लो(ष्यः श्लो) कः ॥६॥**

जातस्यैव जन्मनाऽऽनर्थक्यादनवस्थानाच्चाजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि स्वी कुर्वन्तीति परपक्षमनुवदति—**अजातस्येति** । तत्र शिष्टाभीष्टदोषं प्रदर्शयन्नभ्यनुजानाति—**अजातो हीति** । के ते वादिनो यैरेवमिष्यते तत्राऽऽह—**सदसदिति** । अवशिष्टानि श्लोकाक्षराणि व्याख्यातत्वान्न पुनर्व्याख्यानसापेक्षाणीत्याह—**पुरस्तादिति** ॥ ६ ॥

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ ७ ॥
स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ ८ ॥

**उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥ ७ ॥ ८ ॥**

परिणामिब्रह्मवादे यदब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुज्ञातमेवेति मत्वाऽऽह—**न भवतीति** । अमृतं हि ब्रह्म न तद्रूपे स्थिते मर्त्यं भवितुमर्हति । स्थितरूपविरोधात् । न च मर्त्यं कार्यं स्वरूपे स्थिते प्रलयावस्थायाममृतं ब्रह्म संपद्यते । नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याऽऽह—**प्रकृतेरिति** । किं च यस्य परिणामवादिनः

---

—१-झ. °मः प्रतिपक्षपक्षपरिग्र° । २ ख. घ. ङ. °क्षपरिग्र° । ३ घ. ङ. च. ज. °ग्रहेण । य° । ४ ख. झ. श्लोकाः । ५ छ. °भीष्टं दो° । ६ झ. यथा । ७ ख. च. ङ. °नुपपत्त्यनुमो° । छ. °नुपपत्त्याऽनुमो° । ८ घ. ङ. छ. यद्ब्रह्म° । ९ ज. कार्यस्व° । १० ख. °र्यं कार्यस्व° । ११ क. °रूपस्थि° । १२ क. स्थितं ।

स्वभावेनामृतः सन्परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्या गच्छति तस्य कृतकेन समुच्चयानुष्ठानेनामृतो जातो मुक्तो वक्तव्यः । स च कथं निश्चलः स्यातुं पारयति । यत्कृतकं तदनित्यमितिन्यायविरोधादित्याह—**स्वभावेनेति** । पुनरुक्तिमाशङ्क्य प्रत्यादिशति—**उक्तार्थानामिति** ॥ ७ ॥ ८ ॥

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह—सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति तथैव सा । तथा स्वाभाविकी द्रव्यस्वभावत एव यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा, साऽपि न कालान्तरे व्यभिचरति देशान्तरे च । तथा सहजाऽऽत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्याऽपि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा । अन्याऽपि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया लोके । मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः ॥ ९ ॥

प्रकृतेरन्यथाभावो न कथंचिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति—**सांसिद्धिकीति** । श्लोकाक्षराणि व्याकुर्वन्प्रकृतेरन्यथात्वाभावे हेतुमाह—**यस्मादिति** । तस्मादजाऽमृतस्वभावा प्रकृतिर्न विपर्येतीति किमु वक्तव्यमिति योजना । कैमुतिकन्यायद्योतनार्थोऽपिशब्दः । विवक्षितं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते—**काऽसावित्यादिना** । साङ्गयोगमनुष्ठाय परिसमापनं संसिद्धिः । सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसंपन्नानाम् । या काचित्स्वभावं न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति शेषः । प्रासङ्गिकं प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथात्वाभावे प्रागुक्ते स्वसिद्धान्ते यत्फलति तदिदानीं किंपुनर्न्यायेन कथयति—**मिथ्येति** ॥ ९ ॥

---

१ घ. धर्मवादिनो । २ क. कृतके । ३ ज. °चयोऽनु° । ४ ग. छ. झ. जीवो । ५ घ. °रुक्तमा° । ६ च. °जाऽप्याकृ° । झ. °जा कृतका यथा । प्र° । ७ झ. सा । ८ घ. च. °क्सिद्धिः स्त° । ९ च. °व स्वा° । ख. ज. °व या स्वा° । १० घ. सा स्वा° । ११ ज सा न । १२ झ. °जा सा आत्म° । १३ झ. °पि का° । १४ घ. °पि का° । १५ च. छ. °तिर्ज्ञेया । १६ घ. °क्षणप्र° । १७ क. ग. °तीति भावः ॥ ९ ॥ ख. घ. ङ. ज. तीति ॥ ९ ॥ १८ क. घ. °भावान्न ज° १९ क. °क्ते सि° ।

जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।
जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते कल्पनायां[1] वा को दोष इत्याह—जरामरणनिर्मुक्ताः । जरामरणादिसर्वविक्रियावर्जिता[2] इत्यर्थः । के[3] । सर्वे धर्माः सर्व आत्मान[4] इत्येतत्स्वभावतः प्रकृतितः । एवंस्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः । तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः ॥ १० ॥

प्रासङ्गिकीमेव[5] जीवानां प्रकृतिं[6] दर्शयितुं प्रक्रमते—जरेति । आत्मानो हि[7] सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः । तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याऽऽह—जरामरणमिति । सर्वविक्रियाशून्ये स्वात्मनि विक्रियाकल्पनायां तद्वासनया[8] स्वभावहानिः स्यादित्यर्थः । श्लोकाक्षराणि व्याकर्तुमाकाङ्क्षां दर्शयति—किंविषयेति । आश्रयविषयो विषयशब्दः । अप्रकृतं प्रकृतेराश्रयनिरूपणमित्याशङ्क्याऽऽह—यस्या इति । प्रश्नान्तरं[10] प्रकरोति—कल्पनायामिति[11] । तत्र पूर्वार्धमुत्तरत्वेन व्याकरोति—आहेत्यादिना । उत्तरार्धं विभजते—एवंस्वभावा इति ॥ १० ॥

कारणं यस्य वै कार्यं कारणं तस्य जायते ।
जायमानं कथमजं भिन्नं नित्यं कथं च तत् ॥ ११ ॥

कथं सज्जातिवादिभिः सांख्यैरनुपपन्नमुच्यत इत्याह[12] वैशेषिकः । कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यं कारणमेव कार्याकारेण परिणमते यस्य वादिन इत्यर्थः । तस्याजमेव सत्प्रधानादि कारणं महदादि कार्यरूपेण[13] जायत इत्यर्थः । महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते[14] तैर्विप्रतिषिद्धं चेदं जायतेऽजं चेति । नित्यं च तैरुच्यते । प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवे-

---

१ ज. झ. °यां को° । २ छ. °यारहिता । ३ च. के ते स° । ४ क. आत्मन । ५ ज़. °मेवं जी° । ६ ग. °तिं प्रद° । ७ ख. हि वि° । ८ घ. ङ. मुक्ते प्र° । ज. मुक्तः प्र° । ९ ग. झ °सनायाः स्व° । १० ख. °रं क. । ११ ग. छ. झ. °नायां वेति । १२ च. इत्यत आह । १३ च. °रूपं जा° १४ घ. ङ. च. °ते विप्र°

दित्यर्थः। न हि सावयवं घटादि[1] एकदेश[2]स्फुटनधर्मि नित्यं[3] दृष्टं लोक इत्यर्थः। विदीर्णं[4] च स्यादेकदेशेनाजं नित्यं चेति। एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः॥ ११॥

प्रासङ्गिकं परित्यज्य सांख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्यनुज्ञातमनुभाषते—कारणमिति। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याऽऽह—जायमानमिति। सावयवत्वाच्च प्रधानस्य नित्यत्वानुपपत्तिरित्याह—भिन्नमिति। श्लोकस्य तात्पर्यमाह—कथमिति। तत्र प्रथमपादाक्षराणि योजयति—कारणमित्यादिना। तदेव स्पष्टयति—कारणमेवेति। द्वितीयपादं विभजते—तस्येति। प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिशब्देनाहंकारादिग्रहणम्। तृतीयपादं व्याकरोति—महदादीति। विप्रतिषेधं विशदयति—जायत इति। चतुर्थपादार्थमाह—नित्यं चेति। विमतमनित्यं सावयवत्वा[5]द्घटादिवदित्यभिप्रेत्य दृष्टान्तं साधयति—न हीति। सांख्यस्मृतिविरुद्धमनुमानमित्याशङ्क्याऽऽह—विदीर्णं चेति॥ ११॥

**कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि।**
**जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम्॥ १२॥**

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह—कारणादजात्कार्यस्य यद्यनन्यत्वमिष्टं त्वया ततः कार्यमजमिति प्राप्तम्। इदं चान्यद्विप्रतिषिद्धं कार्यमजं चेति तव। किं चान्यत्कार्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्यात्कारणमनन्यन्नित्यं ध्रुवं च ते कथं भवेत्। न हि कुक्कुट्या[6] एकदेशः पच्यत एकदेशः प्रसवाय कल्प्यते[7]॥ १२॥

किं च कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं किं वा कार्याभिन्नं कारणमिति विकल्प्याऽऽद्यमनुवदति[8]—कारणादिति। अतोऽस्मिन्पक्षे कार्यमजं स्यात्। तथाविधकारणाभिन्नत्वादिति दूषयति—अत इति। द्वितीयमनुद्रवति—यदीति। जायमानात्कार्यात्कार[9]णमभिन्नं यदीति योजना। न तर्हि कारणं ध्रुवं भवितुमर्हति कार्याभिन्नत्वात्तस्य चाध्रुवत्वादिति दूषयति—कारणमिति। श्लोकस्य तात्पर्यमाह—उक्तस्येति। कार्यकारणयोरभेदवादे विप्रतिषेधो दर्शितः। तस्यैव दृढीकरणार्थमयं श्लोक इत्यर्थः। पूर्वार्धाक्षरोत्थमर्थमाह—कारणादिति। प्राप्तेरनिष्टपर्यवसायित्वमाह—इदं चेति। प्रधानस्याजत्वं

---

१ छ. °दिरेक°। २ छ. °देशे स्फु°। ३ ख. ङ. च. ज. °त्यं च. दृ°। ४ ख. °दीर्णे च.। ५ क. साध्यत्वा°। ६ ख. घ. ङ. °कुटस्यैक°। ७ च. छ. कल्पते। ८ छ. नुवदति। ९ घ. त्का र्यैका°।

जायमानत्वं च विप्रतिषिद्धमित्युक्तम् । ततोऽन्यदित्युक्तमेव व्यनक्ति—कार्यमिति । अभेदेऽपि मायावादे नैष दोषः कारणस्य कार्यादनन्यत्वानभ्युपगमात् । कार्यस्यैव कारणमात्रत्वाङ्गीकारादिति मत्वाऽऽह—तवेति । द्वितीयार्धं विभजते—किं चान्यदिति । अभेदवादेऽपि कार्यस्यानित्यत्वं कारणस्य नित्यत्वमिति व्यवस्था किमिति न भवतीत्याशङ्क्याऽऽह—न हीति ॥ १२ ॥

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥

किं चान्यदजादनुत्पन्नाद्वस्तुनो जायते यस्य वादिनः कार्यं दृष्टान्तस्तस्य नास्ति वै, दृष्टान्ताभावेऽर्थादजान्न किंचिज्जायत इति सिद्धं भवतीत्यर्थः । यदा पुनर्जाताज्जायमानस्य वस्तुनोऽभ्युपगमः, तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्येत । अनवस्थानं स्यादित्यर्थः ॥ १३ ॥

किं च यस्य प्रधानवादिनो मते प्रधानादजादभिन्नं कार्यं जायते महदादीत्यभ्युपगम्यते । तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः, तदवष्टम्भेनैव तेनार्थव्यवस्थापनात् । न चात्रोभयसंप्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीत्याह—अजादिति । यद्यजान्नित्याद्वस्तुनो जायमानमभ्युपगन्तुं न शक्यते तर्हि जातादेव जायमानमभ्युपगम्यतामित्याशङ्क्याऽऽह—जाताच्चेति । सांख्यसमये दोषान्तरप्रदर्शनपरत्वं श्लोकस्य प्रतिजानीते—किं चान्यदिति । तत्र पूर्वार्धाक्षराणि योजयति—अजादिति । दृष्टान्ताभावेऽपि प्रमाणान्तरादर्थप्रतिपत्तिर्भविष्यतीत्याशङ्क्याऽऽह—दृष्टान्तेति । परस्य खल्वनुमानाधीनमर्थपरिज्ञानम् । न च दृष्टान्ताभावेऽनुमानमवकल्पते तस्मान्न सांख्यसमयः संभवतीत्यर्थः । द्वितीयार्धं व्याचष्टे—यदा पुनरित्यादिना ॥ १३ ॥

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ १४ ॥

"यत्र त्वस्य सर्वमात्मैवाभूत्" इति परमार्थतो द्वैताभावः श्रुत्योक्तस्तमाश्रित्याऽऽह—हेतोर्धर्माधर्मादेरादिः कारणं देहादिसंघातः फलं येषां

---

१ घ. °णका° । २ ख. °भेदेऽपि । ३ छ. °जादुत्प° । ४ झ. °न्नान्नित्याद्व° । ५ झ. °ति प्रसि° । ६ झ. तदाऽप्य° । ७ ग. °न्तानुभा° । ८ ग. झ. °न्तानुभा° । ९ घ. ङ. ज. °कल्प्यते । १० छ. श्रुत्युक्त° । ११ क. घ. ज. °र्मादे° । १२ झ. देहसं° । १३ घ. ङ. ज. फलमेषां ।

वादिनाम्। तथाऽऽदिः कारणम्। हेतुर्धर्माधर्मा[1]दिः। फलस्य च देहा[2]दिसंघातस्य। एवं हेतुफलयोरितरे[3]तरकार्यकारणत्वेनाऽऽदिमत्त्वं ब्रुवद्भिरेवं हेतोः फलस्य चाना[4]दित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः। न हि नित्य[5]स्य कूटस्थस्याऽऽत्मनो हेतुफलात्म[6]ता संभवति ॥ १४ ॥

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन(ण) ख्यापितं वस्तुनोऽजन्यत्वमद्वैतवादिनाऽप्यनुज्ञातमिदानीं द्वैतनिरसनमपि श्रौतं विद्वदनुभवानुसारित्वात्तेना[7]भ्यनुज्ञातमेवेत्याह—हेतोरिति। हेतुफलात्मकः संसारोऽनादिरिति वदद्भिस्तस्यानादित्वस्वभावो नैव वक्तुं शक्यते। हेतुफलयोरादिमत्त्वस्य[8] कण्ठोक्तत्वादतो हेतुफलात्मकं द्वैतमे[9]निरूपितरूपमवस्तुभूतमित्यर्थः। श्लोकस्य तात्पर्य[10]माह—यत्र त्विति। तमाश्रित्य कार्यकारणात्मकस्य द्वैतस्य दुर्निरूप[11]त्वमाहेति योजना। हेतुफलयोरात्मपरिणामत्वादा[12]दिमत्त्वमुपादानरूपेण चानादित्वमित्याशङ्क्याऽऽत्मनो निरंशस्य[13] कूटस्थ[14]स्य नित्यस्य[15] परिणामानुपपत्तेर्मैवमित्याह—न हीति॥१४॥

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च।
तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥

कथं तैर्विरुद्धमभ्युपगम्य[16]त इति। उच्यते। हेतुजन्यादेव फलाद्धेतोर्जन्माभ्युपगच्छतां[17] तेषामीदृशो विरोध उक्तो भवति यथा पुत्राज्जन्म पितुः ॥ १५ ॥

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादित्वं विप्रतिषिद्धमित्युपपादितम्। संप्रति कार्यकारणभावोऽपि तयोर्न संभवतीत्याह—हेतोरित्यादिना। हेतुफलयोरन्योन्यं कारणत्वमभ्युपगच्छद्भिरभ्युपगम्यते विरुद्धमित्येतत्प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। ईदृशत्वमेव विशदयति—यथेति ॥ १९ ॥

संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया।
युगपत्संभवे यस्मादसंबन्धो विषाणवत् ॥ १६ ॥

यथोक्तो विरोधो न युक्तोऽभ्युपग[18]न्तुमिति चेन्मन्यसे संभवे हेतुफ-

---

१ क. झ. °र्मादिः°। २ झ. देहसं°। ३ क. °तरका°। ४ च. झ. °नादिः क°। ५ ख. घ. ङ. ज. °त्यकू°। ६ क. छ. °त्मकता। ७ क. °रि चैतेना°। ख. ज. °रि च तेना°। ग. °रिवादिना°। ८ ग. झ °स्य त्वयैवोक्त°। ९ घ. °मनुरू°। १० छ. ज. °त्पर्यायमा°। ११ छ. °रूपितत्वमा°। १२ घ. °दिमत्त्वमि°। १३ ग. झ. °स्य प°। १४ छ. °स्थनि°। १५ ख. घ. ङ. ज. °स्य स्वतः प°। १६ छ. °म्यते। हे°। १७ झ. °च्छतामी°. १८ झ. °गन्तुं चे°।

लयोरुत्पत्तौ क्रम एषितव्यस्त्वयाऽन्वेष्टव्यो हेतुः पूर्वं पश्चात्फलं चेति। इतश्च युगपत्संभवे यस्माद्धेतुफलयोः कार्यकारणत्वेनासंबन्धः। यथा युगपत्संभवतोः सव्येतरगोविषाणयोः॥ १६॥

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याऽऽह—**संभव इति**। तयोरुदये प्रातीतिके नियतपूर्वभावी हेतुर्नियतोत्तरभावि फलमित्यभ्युपगमे हेतुमाह—**युगपदिति**। यथोक्तो विरोधो हेतुफलभावस्यासंभवः स न युक्तोऽभ्युपगन्तुं प्रतीतिविरोधादिति व्यावर्त्यां शङ्कामनुवदति—**यथेति**। तत्रोत्तरत्वेन श्लोकाक्षराणि योजयति—**संभव इति**। प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह—**इतश्चेति**। तामेवोपपत्तिं स्फोरयति—**युगपदिति**। ययोर्युगपत्संभवस्तयोर्न कार्यकारणत्वं यथा विषाणयोरिति व्याप्तेर्व्यक्तत्वात्क्रमस्याऽऽवश्यकतेत्यर्थः॥ १६॥

फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति।
अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति॥ १७॥

कथमसंबन्ध इत्याह—जन्यात्स्वतोऽलब्धात्मकात्फलादुत्पद्यमानः सञ्शशविषाणादेरिवासतो[3] न हेतुः[4] प्रसिध्यति जन्म न लभते। अलब्धात्मकोऽप्रसिद्धः[5] सञ्शशविषाणादिकल्पस्तव[6] कथं फलमुत्पादयिष्यति। न हीतरेतरापेक्षसिद्ध्योः शशविषाणकल्पयोः कार्यकारणभावेन संबन्धः क्वचिद्दृष्टः, अन्यथा[7] वेत्यभिप्रायः॥ १७॥

उक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति—**फलादिति**। हेतुफलयोर्मिथो हेतुफलत्वं ब्रुवतो मते हेत्वधीनतयाऽलब्धात्मकात्फलादुत्पद्यमानो हेतुर्न ततो लब्धात्मको भवत्यलब्धात्मकश्चासत्त्वान्न फलमुत्पादयितुं शक्नोति। अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः। हेतुफलयोरक्रमवतोर्न कार्यकारणभावेन संबन्धः सिध्यतीत्येतदाकाङ्क्षापूर्वकं साधयति—**कथमित्यादिना**[8]। स्वतो हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं स्वतश्चालब्धात्मकम्। तत उत्पद्यमानः सन्नेष हेतुर्न प्रसिध्यति। न खलु शशविषाणादेरसतः सकाशात्किंचिल्लब्धात्मकमुपलभ्यते। हेतुश्चेदप्रसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि यथाविधोऽसद्रूपः सन्न फलमुत्पादयितुमुत्सहते। न हि सद्वादिमते फलमसतः सकाशादुपलब्धचरमित्यर्थः। तथाऽपि कथं हेतुफलयोरसंबन्धः सिध्यतीत्याश-

---

१ क. °सन्युक्तोऽ°। २ ग. छ. झ. वर्त्यामाश°। ३ घ. °तो हे°। ४ क. तुः सि°। घ. °तुः फलं प्र°। ५ च. °कोऽसि°। ६ च. °दिविक°। ७ च. °था चेत्य°। ८ क. घ. ज. °ना। हे°।

क्ष्याऽऽह—न हीति। अन्यथा वेत्याधाराधेयभावादिकथनं हेतुफलयोर्यौगपद्ये सत्यन्यतरस्यापि न पूर्वक्षणे सत्त्वेत्यसतोः शशविषाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते शशविषाणादिष्वपि प्रसङ्गादित्युक्तम् ॥ १७ ॥

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः।
कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥

असंबन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया कतरत्पूर्वनिष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात्पूर्वसिद्ध्यपेक्षया तद्ब्रूहीत्यर्थः॥१८॥

इदानीं पुण्यो वै पुण्येन कर्मणा भवतीत्यादिश्रुतेर्धर्मादिषु हेतुफलभावमाशङ्क्य श्रुतेरसंभावितार्थे प्रामाण्यायोगादवश्यं पौर्वापर्यं वक्तव्यमित्याह—यदीति। श्लोकाक्षराणि योजयति—असंबन्धेत्यादिना ॥ १८ ॥

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः।
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥

अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिरपरिज्ञानं तत्त्वाविवेको मूढतेत्यर्थः। अथ वा योऽयं त्वयोक्तः क्रमो हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्यलक्षणस्तस्य कोपो विपर्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्यकारणभावानुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यपक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः ॥ १९ ॥

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते। परस्पराश्रयात्। अतश्चेदं पूर्वनिष्पन्नमिति वक्तुमशक्यमित्याह—अशक्तिरिति। उत्तरावसरे चेदुत्तरापरिज्ञानं तर्हि कथमशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानीयमापततीत्यर्थः। किं च यदि क्रमस्य नियतपूर्वापरभावात्मनोऽपरिज्ञानं तदा पूर्वं कारणमुत्तरं कार्यमिति प्रतिज्ञा हीयेत। तथा च प्रतिज्ञाहानिर्निग्रहान्तरमापद्येतेत्याह—क्रमेति। अन्योन्यपक्षप्रतिक्षेपमुखेन( ण ) सतोऽसतश्च जन्मनी

---

१ ख. °ह। अ°। २ ग. झ. °धेयाभा°। ३ ग. झ. सत्त्वमित्य°। ४ च. झ. °लासिद्धिः। ५ झ. °बद्धता°। ६ घ. °षे मयोदि°। ७ च. °णाऽऽपादि°। ८ ख. घ. °त्पूर्वे नि°। ९ घ. ज. °न्यस इय°। १० क. छ. °न्योन्यपेक्ष°। ११ ख. ङ. झ. पूर्वे नि°। ११ ग. ङ. झ. चेत्तदु°। १३ झ. °थकाश°। १४ ग. झ. °परीभा°। १५ घ. ज. हीयते। १६ ग. °तिपक्षमु°।

प्रत्याख्याते । क्रमाक्रमाभ्यामुत्पत्तेरनु[1]पपत्ते[2]रजातिरेवास्मदभिप्रेता वादिभिरादर्शिता भवतीत्यु-पसंहरति—एवं[3] हीति । तत्राऽऽद्यं पादं व्याकरोति—अथेत्यादिना । क्रमपक्षे पूर्वनिष्पन्नमेतच्छब्देन परामृश्यते । द्वितीयपादं योजयति—अथ वेत्यादिना । द्वितीयार्धं विवृणोति—एवमिति ॥ १९ ॥

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः[4] ।**
**न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥ २० ॥**

ननु हेतुफलयोः कार्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य च्छलमिदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा । विषाणवच्चासंबन्ध इत्यादि । न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिरसिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता । किं तर्हि । बीजाङ्कुरवत्कार्यकारण[5]भावोऽभ्युपगम्यत इति । अत्रोच्यते—बीजाङ्कुराख्यो दृष्टान्तो यः स[6] साध्येन[7] तुल्यो ममेत्यभिप्रायः । ननु प्रत्यक्षः[8] कार्यकारणभावो बीजाङ्कुरयोरनादि[9]र्न पूर्वस्य पूर्वस्था[10]परं[11]वदादिमत्त्वाभ्युपगमात् । यथेदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान्बीजं चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत् । एवं पूर्वः[12] पूर्वोऽङ्कुरो बीजं च पूर्वं[13] पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजाते[14]स्याऽऽदिमत्त्वात्कस्यचिदप्यना[15]दित्वानुपपत्तिः । एवं हेतुफलानाम् । अथ बीजाङ्कुरसंततेरनादिमत्त्वमिति चेत् । न । एकत्वानुपपत्तेः । न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसंतति[16]र्नामैकाऽभ्युपगम्यते हेतुफलसंततिर्वा तदनादित्ववादिभिः । तस्मा[17]त्सूक्तं हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यत इति । तथा चान्यदप्यनुपपत्तेर्न च्छलमित्यभिप्रायः । न च[18] लोके साध्यसमो हेतुः साध्यसिद्धौ सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्यर्थः । हेतु[19]रिति[20] दृष्टान्तोऽत्राभिप्रेतो गमकत्वात् । प्रकृतो हि दृष्टान्तो न हेतुरिति ॥ २० ॥

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्यकारणभावाभ्युपगमान्नान्योन्याश्रयत्वमित्या-

---

१ छ. °नुत्पत्तेरतोऽजा° । २ ग. झ. °रतोऽजा° । ३ ग. झ. °वं तर्हीति । ४ च. नः । ५ क. °रणाभा° । ६ च. स साध्यसमः सा° । ७ झ. °न समस्तुल्यो । ८ च. °त्यक्षं का° । ९ घ. च. °दिर्नापू° । १० च. °स्याऽऽदि° । ११ क. °रवादि° । १२ क. झ. पूर्वं पू° । १३ च. पूर्वाङ्कु° । १४ च. झ. °तस्य चाऽऽदि° । १५ छ. °दिमत्वानु° । १६ ग. घ. °संमति° । १७ च. झ. °स्मात्सुष्ठूक्तं । १८ च. च सा° । १९ च. हेतोरि° । २० घ. °ति च दृ° ।

शङ्कयाऽऽह—बीजेति। दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्त्वित्याशङ्कयाऽऽह—न हीति। श्लोकोपोद्यं चोद्यमुद्भावयति—नन्विति। शब्दमात्रं विवक्षितार्थशून्यम्। शब्दमाश्रित्य च्छलप्रयोगमेवोदाहरति—पुत्रादिति। आदिशब्देन फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यतीत्यादि गृह्यते। कार्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति—न हीति। तत्रैव प्रश्नपूर्वकमभिप्रेतमर्थमुदाहरति—किं तर्हीति। दृष्टान्तासंप्रतिपत्त्या परिहरति—अत्रेति। मायावादिमते क्वचिदपि कार्यकारणभावस्य वस्तुभूतस्यासंप्रतिपत्तेर्ममेत्युक्तम्। प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते—नन्विति। किं बीजाङ्कुरव्यक्त्योरिदं कार्यकारणत्वमिष्यते किं वा बीजाङ्कुरसंतानयोरिति विकल्प्याऽऽद्यं दूषयति—न पूर्वस्येति। तदेव प्रपञ्चयति—यथेत्यादिना। बीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादित्वस्यान्योन्यकारणत्वस्य चानुपपत्तिरिति शेषः। कल्पान्तरमुत्थापयति—अथेति। बीजसंततेरङ्कुरसंततेश्चानादित्वमन्योन्यकारणत्वं चाविरुद्धं सिध्यति। बीजजातीयादङ्कुरजातीयमङ्कुरजातीयाद्बीजजातीयमुत्पद्यमानमुपलभ्यते। तथैव हेतुजातीयात्फलजातीयं फलजातीयाच्च हेतुजातीयमविरुद्धमित्यर्थः। दृष्टान्ते दार्ष्टान्तिके च संततेरेकस्या व्यक्तेर्व्यतिरेकेणासंभवान्मैवमिति दूषयति—नेत्यादिना। तदेव प्रपञ्चयति—न हीति। तदनादित्ववादिभिस्तासु व्यक्तिषु मिथो हेतुत्वमनादित्वं तद्वद्दर्शनशीलैरिति यावत्। अन्योन्याश्रयत्वादनवस्थानाद्वा हेतुफलयोर्मिथो हेतुफलभावस्य वक्तुमशक्यत्वाद्दृष्टान्तदार्ष्टान्तिकयोरनुपपत्तिः सिद्धेत्युपसंहरति—तस्मादिति। दृष्टान्तस्यासंप्रतिपन्नत्वे स्थिते कार्यकारणत्वस्य क्वचिदपि संप्रतिपत्त्यभावात्पुत्राजन्म पितुर्यथेत्यादि न च्छलप्रयुक्तमिति फलितमाह—तथा चेति। एवं श्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे—न चेति। किमिति हेतुशब्दस्य मुख्यमर्थं त्यक्त्वा गौणोऽर्थो गृह्यते, प्रकरणसामर्थ्यादित्याह—प्रकृतो हीति। हेतुफलभावानुपपत्तिमुपपादितामुपसंहर्तुमितिशब्दः॥ २०॥

पूर्वापरापरिज्ञानमजातेः परिदीपकम्।
जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते॥ २१॥

---

१ छ. °कम°। २ ख. °पोद्यं चो°। ३ ग. °मानो हे°। ४ ग. झ. तत्रैवं। ५ ग. झ. °पत्तिर्मे°। ६ घ. किं बी°। ७ झ. °त्वस्याप्यनु°। ८ ख. छ. °षः। विक°। ९ ग. झ. °दिमत्त्वम। १० ग झ. °न्यकार्यका°। ११ ग. झ. °णत्वं वा वि°। १२ ग. झ. °यमु°। १३ ख. °के सं°। १४ ग. ज. झ. व्यक्तिव्यति°। १५ घ. ङ. °क्तेर्व्यक्तिव्यति°। १६ क. °दनुशी°। १७ क. ख. छ. °णत्वस्य। १८ छ. मुख्यार्थं। १९ ज. °ते क°। २० घ. °परप°। २१ ख. घ. ङ. ज. °द्धि चेद्धर्मा°। २२ छ. वै कार्यात्क°।

कथं बुद्धे[1]रजातिः परिदीपितेत्याह—यदेतद्धेतुफलयोः पूर्वापरापरिज्ञानं तच्चैतदजातेः परिदी[2]पकमवबोधकमित्यर्थः। जायमानो हि[3] च धर्मो गृह्यते, कथं तस्मात्पूर्वं कारणं न गृह्यते। अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम्। जन्यजनकयोः संबन्धस्यानपेतत्वात्। तस्मादजातिपरिदीपकं तदित्यर्थः॥ २१॥

यत्पुनरन्योन्यपक्षं प्रतिक्षिपद्भिरजातिर्वस्तुतो ज्ञापिता परीक्षकैरित्युपाक्षिप्तं तत्र कथमजातिर्वस्तुतो ज्ञापितेत्याशङ्क्याऽऽह—**पूर्वापरेति**। कार्यस्य गृह्यमाणत्वादजातिरसिद्धेत्याशङ्क्य कारणस्यापि तर्हि ग्राह्यत्वादितरेतराश्रयादजातिरे[4]तिव्यक्ता सिध्यतीत्याह—**जायमानादिति**। तत्र पूर्वार्धं प्रश्नद्वारा विवृणोति—**कथमित्यादिना**। नियते[5] पौर्वापर्ये निर्धारिते जातिः सिध्य[6]ति। तदभावे[7] तदसिद्धिरित्यर्थः। द्वितीयार्धं विभजते—**जायमानो हीति**। कार्यग्रहणे कारणं ग्रहीतव्यमिति कुतो नियम्यते तत्राऽऽह—**अवश्यं हीति**। कार्यकारणयोर्नियतसंबन्धवतोरितरेतराश्रयाद्दुर्ग्रहत्वादजातिरेव वस्तुतो ज्ञापितेत्युपसंहरति—**तस्मादिति**। कार्यकारण[8]योर्दुर्ज्ञानत्वं तच्छ[9]ब्देन परामृश्यते॥ २१॥

स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते।
सदसत्सदसद्वाऽपि न किंचिद्वस्तु जायते॥ २२॥

इतश्च न जायते किंचित्। य[10]ज्जायमानं वस्तु स्वतः परत उभयतो वा सदसत्सदसद्वा न जायते न तस्य केनचिदपि प्रकारेण जन्म संभवति। न तावत्स्वयमेवापरिनिष्प[11]न्नात्स्व[12]तः स्वरूपात्स्वयमेव जायते यथा घटस्तस्मादेव घटात्। नापि परतोऽन्यस्मादन्यो यथा घटात्पटः पटात्पटान्तरम्। तथा नोभयतः। विरोधात्। यथा घटपटाभ्यां घटः पटो वा[13] न जायते। ननु मृदो घटो[14] जायते पितुश्च पुत्रः। सत्यम्। अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम्। तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते किं सत्यमेव तावुत मृषेति यावता परीक्ष्यमा[15]णे। शब्दप्रत्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत्। "वाचारम्भ-

१ झ. बुधैर॰। २ छ. ॰दीपिक॰। ३ ख. घ. च. छ. ज. हि चेद्धर्मो। झ. हि वै ध॰। ४ ख. घ. ङ. ज. ॰रभिव्य॰। ५ ग. ॰यतपौ॰। ६ ग. झ. ध्यतीति॰। ७ ग. झ. ॰वेन त। ८ ग. झ. ॰णदुर्ज्ञा॰। ९ झ ॰च्छलेन॰। १० घ. यतो यज्जा॰। ११ ज. ॰ष्पन्नत्वात्स्वत॰ स्व॰। १२ क. छ. ॰त्स्वरू॰। १३ क. च. छ. वा जा॰। १४ ज. ॰टो पि॰। १५ झ. ॰माणं श॰।

णम्" इति श्रुतेः। सच्चेन्न जायते सत्त्वान्मृत्पि[1]त्रादिवत्। यद्यसत्तथाऽपि न जायते[2] सत्त्वादेव शशविषा[3]णादिवत्। अथ सदसत्तथाऽपि[4] न जायते विरुद्धस्यैकस्यासंभवात्। अतो न किंचिद्वस्तु जायत इति सिद्धम्। येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः[5], ते दूरत एव न्यायापेताः। इदमि[6]त्थमित्यवधार[7]णक्षणान्तरानवस्थानादननुभूतस्य स्मृत्यनुपपत्तेश्च॥ २२॥

वस्तु[9]नो वस्तुतो[10] जन्म नास्तीति विकल्पपूर्वकं साधयति—**स्वतो वेत्यादिना**। कस्यचिदपि वस्तुनो जन्म नास्तीत्यस्मिन्नर्थे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—**इतश्चेति**। इतःशब्दार्थमेव स्फोरयितुं जायमानमनूद्य षोढा विकल्पयति—**यज्जायमानमिति**। सर्वेष्वपि पक्षेषु दोषसंभावनां सूचयति—**न तस्येति**। तत्राऽऽद्यं दूषयति—**न तावदिति**। स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते स्वयमेव स्वापेक्षामन्तरेण स्वकारणाधीनतया परिनिष्पन्नत्वात्। अन्यथा स्वसिद्धेः स्वसिद्धिरित्यात्माश्रयात्। न हि घटादेव घटो जायमानो दृष्टोऽस्तीत्यर्थः। द्वितीयं प्रत्याह—**नापीति**। न खल्वन्यत्वं जनकत्वे प्रयोजकम्। घटादपि[11] पटोत्पत्तिप्रसङ्गात्। न चोत्पादकत्वयोग्यत्वविशेषितमन्यत्वं तथेति वाच्यम्। उत्पत्तिमन्तरेण तद्योग्यत्वस्य दुरवगमत्वादित्यर्थः। तृतीयं निरस्यति—**तथेति**। विरोधमेव दृष्टान्तद्वारा स्पष्टयति—**यथेति**। न हि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते। तथा जायमानं स्वस्मादन्यस्माच्च भवतीत्यनुपपन्नमित्यर्थः। अन्यत्वे सत्यपि जन्यजनकभावस्य प्रत्यक्षत्वान्नासौ शक्यते प्रतिक्षेप्तुमिति शङ्कते—**नन्विति**। किं प्रत्यक्षानुसारिणौ शब्दप्रत्ययावविवेकिनामिष्येते[13] किं वा विवेकिनामिति विकल्प्याऽऽद्यमङ्गी करोति—**सत्यमिति**। द्वितीयं प्रत्याह—**तावेवेति**। मृषैवेति परीक्ष्यमाणे सतीति संबन्धः। तच्च[14] जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव वाचारम्भणश्रवणान्न परमार्थतो यावता विद्यते, तस्मादसत्यालम्बनत्वमेव शब्दप्रत्यययोरेष्टव्यमिति योजना। चतुर्थं शिथिलयति—**सच्चेदिति**। पञ्चमं निराकरोति—**यदीति**। षष्ठं प्रत्यादिशति—**अथेत्यादिना**। षण्णां विकल्पानां[15] निरासे[16] फलितं[17] निगमयति—**अतो**

---

१ क. ख. घ. ज. °त्पिण्डादि°। २ क. ख. °ते विद्यतेऽसि°। ३ क. छ. झ. °पाणव°। ४ च. °पि जा°। ५ च. °स्तुतस्ते दू°। ६ ख. °मित्य°। ७ घ. °रणा°। ८ ज. °गलक्ष°। ९ ग. झ. °स्तुतोऽव°। १० ङ. छ. झ. °नो वस्तुतो ज°। ११ क. ज. °प घटो°। १२ क. °पत्तिरित्य°। १३ च. छ. ज. झ. °मिष्यते। १४ ग. झ. तत्र। १५ ज. विकाराणां। १६ झ. °नां फ°। १७ घ. ङ. ज °तं ग°

नेति । क्रियाकारकफलनानात्वपक्षे जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति— येषां पुनरिति । बौद्धानां न्यायावष्टम्भेन वस्तु व्यवस्थापयतां कुतो न्यायबाह्यत्वमित्या-शङ्क्याऽऽह—इदमिति । इदमा वस्तु परामृष्टम् । इत्थमिति क्षणिकत्वं विवक्षितम् । एवंमवधारणावच्छिन्ने क्षणे वस्त्ववच्छेदकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावाच्च तस्मिन्ननुभवः सिध्यतीत्यर्थः । न च तस्मिन्ननुभूतेऽर्थे स्मृतिरुत्पद्यते । तथा च वस्तुनि प्रत्ययद्वयासिद्धौ व्यवहारासिद्धिरित्याह—अननुभूतस्येति ॥ २२ ॥

हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः ।
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥

किं च हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरज-न्मैवाभ्युपगतं स्यात् । तत्कथम्, अनादेरादिरहितात्फलाद्धेतुर्न जायते । न ह्यनुत्पन्नादनादेः फलाद्धेतोर्जन्मेष्यते त्वया । फलं चाऽऽदिरहिताद-नादेर्हेतोरजात्स्वभावत एव निर्निमित्त जायत इति नाभ्युपगम्यते । तस्मा-दनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते । यस्मा-दादिः कारणं न विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते । कारणवत एव ह्यादिरभ्युपगम्यते नाकारणवतः ॥ २३ ॥

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह—हेतुर्नेति । नानादेः फलाद्धेतुर्जायते । न हि फलस्यानादित्वे ततो हेतुजन्म युक्तं सदा तज्जन्मप्रसङ्गादित्यर्थः । फलमपि न हेतो-रनादेर्जायते दोषसाम्यादित्याह—फलं चेति । नापि स्वभावतो निमित्तमन्तरेण फलं हेतुर्वा जायते । तत्र हेतुमाह—आदिरिति । कारणरहितस्य जन्मानुपलब्धेरित्यर्थः । वस्तुनो वस्तुतो जन्माभावे हेत्वन्तरपरत्वं श्लोकस्य सूचयति—किं चेति । हेत्व-न्तरमेव दर्शयितुं प्रथमं प्रतिज्ञां करोति—हेत्विति । फलाद्धेतुर्जायते ततश्च फलमित्यभ्युपगमात्कथमजन्माभ्युपगतमिति पृच्छति—कथमिति । तत्राऽऽद्यपादाक्षर-योजनया परिहरति—अनादेरिति । तदेवोपपादयति—न हीति । फलं कार्य-कारणसंघातः । हेतुर्धर्मादिः । फलं चापीति भागं विभजते—फलं चेति । अजाज्जायत इति नाभ्युपगम्यत इति संबन्धः । स्वभावत इति पदं योजयति—स्वभा-वत एवेति । फलितं निगमयति—तस्मादिति । न हेतुफलयोर्जन्मवतोरनादित्वमभ्युप-

---

१ ख. °क्षे अ त° । छ. °क्षेऽजस्याज° । २ ग. झ. °पत्ति दो° । ३ ग. °वमेव । ४ छ. °वाभ्रानु° । ५ क. घ. छ. ज. °न्ननु° । ६ च. वाऽपि । ७ झ. °दिमर म° । ८ झ. °दजादना° । ९ झ. तस्याऽऽदिः । १० ग. झ. °न्तरं सू° । ११ ङ. झ. °थैकर° ।

गन्तुं शक्यम् । अभ्युपगमे च जन्मैव तयोराकस्मिकं स्यादित्यर्थः । स्वभाववादनिराकरणं प्रतिज्ञातमुत्तरार्धावष्टम्भेन प्रतिपादयति—यस्मादिति ॥ २३ ॥

प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः ।
संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥

उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति—प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम् । निमित्तं कारणं विषय इत्येतत्सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत्प्रतिजानीमहे । न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात् । तस्याः सनिमित्तत्वात् । अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतो नाशोऽभावः प्रसज्येतेत्यर्थः । न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात् । अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात् । परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं तस्य परतन्त्रस्य परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता मताऽभिप्रेता । न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वभावभेदेनैव वैचित्र्यं संभवति । स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः । इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता । संक्लेशनं संक्लेशो दुःखमित्यर्थः । उपलभ्यते ह्यग्निदाहादिनिमित्तं दुःखं यद्यग्न्यादिबाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात्ततो दाहादिदुःखं नोपलभ्येत । उपलभ्यते तु, अतस्तेन मन्यामहेऽस्ति बाह्योऽर्थ इति । न हि विज्ञानमात्रे संक्लेशो युक्तः । अन्यत्रादर्शनादित्यभिप्रायः ॥ २४ ॥

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तम् । इदानीं बाह्यार्थवादमुत्थापयति—प्रज्ञप्तेरिति । ज्ञानस्य निर्विषयत्वे प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति—अन्यथेति । अग्निदाहादिप्रयुक्तदुःखोपलब्ध्यनुपपत्तेश्चास्ति बाह्योऽर्थ इत्याह—संक्लेशस्येति । परतन्त्रं परकीयं शास्त्रं तस्यास्तिता तद्विषयस्य बाह्यार्थस्य विद्यमानतेति

१ ङ. ज. झ. °भे त्वज° । २ क. ग. झ. °वादिनि° । ३ घ. °मित्तका । ४ क. °त्तं कर° । ५ क. °तस्य नि° । ६ च. °षयं तदेत° । ७ घ. झ. सिः स्यात्सनि° । ८ क. °भ्यद्व° । ९ झ. °न्यथाशा° । १० क. °तन्त्रा° । ११ झ. °सेः स्वप्र° । १२ च. झ. °नैतद्वैचि° । १३ छ. नीलपीताद्यु° । १४ च. °चित्र्यमित्य° । १५ च. र्थस्या° । १६ च. °बाह्यदा° । १७ क. दारादि । १८ झ. °मित्तावि° । १९ ज. °लभ्यते । ङ° । २० ग. °नस्यासविश्र° । २१ क. ख. स्य सविष° । २२ ग. झ. °ह्यार्थधीरित्या° । २३ ख. °कीयश° ।

यावत् । श्लोकस्य तात्पर्यमाह—**उक्तस्यैवेति** । वस्तुनो नास्ति वस्तुतो जन्मेत्युक्तार्थस्तस्यैव दृढीकरणं पूर्वोत्तरपक्षाभ्यां चिकीर्ष्यते तया पुनराक्षेपमुखेन(ण)बाह्यार्थवादिनां प्रस्थानमुत्थापयतीत्यर्थः । ब्रह्मस्वरूपभूतां प्रज्ञप्तिं प्रतिषेधति—**शब्दादीति** । साकारवादं व्युदस्यति—**स्वात्मेति** । प्रज्ञप्तेर्विषयनिरपेक्षत्वान्न स्वातिरिक्तविषयतेत्याशङ्क्याऽऽह—**न हीति** । सनिमित्तत्वं सविषयत्वेन स्फुरणम् । तमेव हेतुं द्वितीयपादयोजनया विशदयति—**अन्यथेति** । प्रसङ्गस्येष्टत्वं प्रत्याचष्टे—**न चेति** । प्रत्ययवैचित्र्यानुपपत्तिप्रयुक्तं फलं चतुर्थपादव्याख्यानेन कथयति—**अत इति** । ननु प्रज्ञप्तेः स्वभावभेदेनैव बाह्यालम्बनं वैचित्र्यमन्तरेण स्वगतं वैचित्र्यं घटिष्यते तत्राऽऽह—**न हीति** । औपाधिकं तर्हि प्रत्ययवैचित्र्यमित्याशङ्क्य बाह्यार्थातिरिक्तोपाध्यनधिगमान्मैवमित्याह—**स्फटिकस्येति** । तृतीयपादं हेत्वन्तरपरत्वेनावतारयति—**ततश्चेति** । तस्योपलब्धिमुपपादयति—**उपलभ्यते हीति** । तदुपलम्भेऽपि कुतो बाह्यार्थसिद्धिरित्याशङ्क्याऽऽह—**यदीति** । उपलब्धिरेव तर्हि दुःखस्य मा भूदिति चेन्न । स्वानुभवविरोधादित्याह—**उपलभ्यते त्विति** । विशिष्टदुःखोपलब्ध्यनुपपत्तिसिद्धं फलमाह—**अत इति** । विज्ञानातिरिक्तबाह्यार्थाभावेऽपि क्लेशोपलब्धिरविरुद्धेत्याशङ्क्याऽऽह—**न हीति** । अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत् ॥ २४ ॥

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।**
**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥**

अत्रोच्यते—बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया । स्थिरी भव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र । ब्रूहि किं तत इति । उच्यते । निमित्तस्य प्रज्ञप्त्यालम्बनाभिमि(म)तस्य घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः, कथं, भूतदर्शनात्परमार्थदर्शनादित्येतत् । न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति । यथाऽश्वान्महिषः, पटो वा तन्तुव्यतिरेकेण । तन्तवश्चांशुव्यतिरेकेणेत्येवमुत्तरोत्तरभूतदर्शन आ शब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामह इत्यर्थः । अथ वा भूतदर्शनाद्बाह्यार्थस्यानिमित्तत्वमिष्यते । रज्ज्वादाविव सर्पादेरित्यर्थः ।

---

१ घ. °ह्मरू° । २ ग. ज. झ. °ति । स्वाका° । ३ क. छ. °म्बनवै° । ४ क. कुता । ५ छ. °वसिद्धत्ववि° । ६ ग. °लब्धानु° ७ च. °क्तिर्दर्श° । ८ झ. °ति । अत्रोच्य° । क. °ज्ञत्वाल° । १० झ. °केणेति । त° । ११ ख. ह. च. छ. °न्तवो वांऽशु° । १२ च. °दर्शने श° । १३ छ. आदिश° ।

बोद्धृत्वं किं त्वौपचारिकमिति प्रकृतमुपसंहर्तुमितिशब्दः । पूर्वार्धस्य तात्पर्यमाह—आकाशमिति । ज्ञानमित्यादि व्याचष्टे—ज्ञानेति । सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रमुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते । मतान्तरे तु नैवमिति कुतो मतसांकर्याशङ्काऽवकाशमासादयेदित्यर्थः ॥ ९९ ॥

दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम् ।
बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥ १०० ॥

इति गौडपादाचार्यकृता माण्डुक्योपनिषत्कारिकाः संपूर्णाः ॥ ॐ तत्सत् ॥

शास्त्रसमाप्तौ परमार्थतत्त्ववस्तुस्तुत्यर्थं नमस्कार उच्यते । दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शम् । अस्ति नास्तीति चतुष्कोटिवर्जितत्वाद्दुर्विज्ञेयमित्यर्थः । अत एवातिगम्भीरं दुष्प्रवेशं महासमुद्रवदकृतप्रज्ञैः । अजं साम्यं विशारदम् । ईदृक्पदमनानात्वं नानात्ववर्जितं बुद्ध्वाऽवगम्य तद्भूताः सन्तो नमस्कुर्मस्तस्मै पदाय । अव्यवहार्यमपि व्यवहारगोचरंभापाद्य यथाबलं यथाशक्तीत्यर्थः ॥ १०० ॥

प्रकरणचतुष्टयविशिष्टस्य शास्त्रस्याऽऽदाविवान्तेऽपि परदेवतातत्त्वमनुस्मरंस्तन्नमस्काररूपं मङ्गलाचरणं संपादयति—दुर्दर्शमिति । दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि—अतिगम्भीरमिति । प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थत्वं निर्विशेषत्वं सर्वसंबन्धविधुरत्वं चेति हेतुत्रयमभिप्रेत्याऽऽह—अजमित्यादिना । विशेषणत्रयं तर्हि कुतश्चिदनवगतं तन्नास्त्येवेति निश्चेतुं युक्तम्, प्रमाणाधीनत्वात्प्रमेयसिद्धेरित्याशङ्क्योपनिषद्भिरतद्धर्माध्यासापाकरणद्वारेणावगम्यमानत्वान्मैवमित्याह—पदमिति । तत्र तर्हि सकलविभागविकले कुतो नमस्कारक्रिया स्वीक्रियामर्हतीत्याशङ्क्याऽऽह—अनानात्वमिति । यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्प्यते तथाऽपि यथासामर्थ्यं मायाबलमवलम्ब्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया प्रचयादिप्रयोजनवती प्रामाणिकैरभिप्रेतेत्यर्थः । श्लोकस्य तात्पर्यमाह—शास्त्रेति । यदि परमार्थतत्त्वं शास्त्रस्याऽऽदाविवान्तेऽपि नमस्क्रियते

१ क. °पकारि° । २ ग. झ. °शब्दप्रयोगः । पू° । ३ घ. ङ. °त्पर्यार्थमा° । ४ घ. °शकल्पस्येति । ५ ख. ग. झ. °नं विज्ञप्ति° । ६ ख. घ. ङ. °षदेक° । ७ च. °स्यैन° । ८ च. °स्तीत्यादिव° । ९ झ. °दुर्ज्ञे° । १० झ. °म्य ज्ञात्वा त° । ११ ख. छ. °रतामा° । १२ घ. ङ. ज. °दिवि° । १३ छ. °गतत्वान्ना° । १४ झ. °माधी° । १५ ख. घ. ङ. ज. सर्ववि° । १६ ख. °स्तुतोऽदि° । १७ क. °नुस्मृत्य । १८ घ. ङ. ज. शास्त्रादा° ।

तदा तस्याऽऽद्यन्तमध्येष्वनुसंधेयतया स्तुतिः सिध्यति। तेन तदर्थमादाविवावसानेऽपि प्रह्वीभावस्तद्विषयश्लोकेनोपदिश्यते। तथा च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं समधिगत-मित्यर्थः। दुर्दर्शत्वमुक्तं व्यनक्ति—**अस्तीति**। सर्वेषामेव यथोक्ते परमार्थतत्त्वे प्रवेशानुपपत्तिमाशङ्क्य संप्रदायरहितानां तथात्वेऽपि तद्वतां मैवमित्याह—**अकृतेति**। कौटस्थ्यादिसिद्ध्यर्थं व्याख्यातमेव पदत्रयमनुवदति—**अजमिति**। उक्तं वेदान्तैकगम्यं तत्त्वं द्वैताभावोपलक्षितमित्याह—**ईदृगिति**। यथोक्तं ब्रह्म ज्ञात्वा ज्ञानसामर्थ्याद्ब्रह्मीभूतश्चेदाचार्यस्तर्हि कथं तस्मै नमस्कर्तुं प्रवर्तते। न हि परिपूर्णं वस्तु वस्तुतो व्यवहारगोचरतामाचरतीत्याशङ्क्याऽऽह—**अव्यवहार्यमिति**। परमार्थतो व्यवहारागोचरत्वेऽपि परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहारगोचरतां परिकल्प्य नमस्कारक्रिया तस्मिन्प्रयोजनवशादाश्रितेत्यर्थः॥ १००॥

**अजमपि जनियोगं प्रापदैश्वर्ययोगा-**
**दगति च गतिमत्तां प्रापदेकं ह्यनेकम्।**
**विविधविषयधर्मग्राहिमुग्धेक्षणानां**
**प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि॥ १॥**

इदानीं भाष्यकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादितपरदेवतातत्त्वमनुस्मृत्य तन्नमस्काररूपं मङ्गलाचरणमाचरति—**अजमपीति**। यद्ब्रह्माशेषोपनिषत्प्रसिद्धं सर्वथा परिच्छेदराहितं तदहं प्रत्यग्भूतं नमस्ये(नतोऽस्मि) तद्विषयं प्रह्वीभावं करोमीति संबन्धः। प्रणामप्रयोजनमाह—**प्रणतेति**। ये हि प्रणता ब्रह्मणि प्रकटीभूतास्तन्निष्ठास्तिष्ठन्ति तेषां यदविद्यातत्कार्यात्मकं भयं तदाचार्योपदेशजनितबुद्धिवृत्तिफलकारूढं ब्रह्मैव हन्ति। न खलु जडा बुद्धिवृत्तिर्वस्तुसामर्थ्यमन्तरेणाज्ञानं सकार्यमपनेतुमलम्। बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरुक्तं फलमादधातीत्यर्थः। तस्यैव ब्रह्मणः संप्रति तटस्थलक्षणं विवक्षति—**अजमित्यादिना**। यद्यपि जन्मादिसर्वविक्रियाशून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथाऽपि तदैश्वर्येण तदीयशक्त्यात्मकेनानिर्वाच्याज्ञानवैभवेन योगादाकाशादिकार्यात्मना जन्मसंबन्धं प्राप्य जगतो निदानमिति व्यपदेशभाग्भवति तथा च श्रुतिसूत्रयोर्ब्रह्मणो जगत्कारणत्वं प्रसिद्धमित्यर्थः। यद्यपि चेदं ब्रह्म कूटस्थतया विभुतया

१ क. श्रुतिः। २ क. प्रकटीभा°। ३ ख. °षयः श्लो°। ४ ग. घ. °हित्वं। ५ ख. घ. ङ. ज. °थोक्तप°। ६ ज. °पूर्णव°। ७ घ. ङ. ज. °रमा°। ८ क. °हारगो°। ९ च. °योग्यप्र°। १० छ. °न्नमस्ये॥ १०॥ ११ घ. °दितं दे°। १२ ङ. °तात्वम°। १३ ग. छ. झ. °नुसृत्य। १४ क. प्रकटीभा°। १५ क. °डा वृ°। १६ क. °नं स्वका°। १७ क. °द्धा बु°। १८ ख. ज. झ. °रूक्तफ°। १९ झ. °क्षते। अ°। २० ग. छ. झ. °वैक्रि°। २१ घ. च. °ह्मण° कार°।

[illegible] गति ... [illegible]ऽपि यथोक्ताज्ञानमाहात्म्यात्कार्यब्रह्मतां प्राप्य गतिमत्तां [illegible]न्तव्य ... प्रकरणन्यायेन प्रतिपद्यते तदाह—अगति चेति। यद्यपि चेदं ब्रह्म परस्तुतो नि[illegible]तनानात्वमेकरसमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथाऽपि जीवो जगदीश्वरश्चेत्येवं[illegible]नेवा[illegible]विद्यावशादनेकमिव प्रतिभातीत्याह—एकमिति। केषां दृष्ट्या पुनरने[illegible]णोऽवगम्यते तदाह—विविधेति। विविधाश्च ते विषयधर्माश्च तद्ग्राहि[illegible] ...[illegible]विकल्पमीक्षणं येषां तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु [illegible]स्व[illegible] ... तु [illegible]मनेकत्वमत्र प्रामाणिकमित्यर्थः॥ १॥

[illegible]शास्त्रवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे।
कारुण्यादुद्[illegible]रामृतमिदममरैर्दुर्लभं भूतहेतो-
र्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि॥२॥

[illegible]गायनप्रयोजनप्रदर्शनपूर्वकं परमगुरूनागमशास्त्रस्य व्याख्यातस्य प्रणेतृत्वेन [illegible] —प्रज्ञेति। यो हि कारुण्यादिदं ज्ञानाख्यममृतं भूतहेतोस्तदुपकारार्थ- [illegible] नतोऽस्मीति संबन्धः। अमुमिति तस्य पुरोदेशे संनिहितत्वेनापरोक्षत्वं [illegible] रुत्वं पूज्यानामपि गुरूणामतिशयेन पूज्यत्वादाचार्यस्य समधिगतमित्याह— [illegible]ज्येति। [illegible]कारप्रक्रियां प्रकटयति—पादपातैरिति। पादौ तदीयौ पादौ तयोः [illegible]यस्योत्तमा[illegible]स्य पातो भूयो भूयो नम्रीभावास्तैरिति यावत्। आचार्यो ज्ञानाख्यममृतं कथंभूतमुद्धृतवा[न]पेक्षायामुक्तम्—अन्तरस्थमिति। कस्यान्तरस्थमिति विवक्षायामाह—वेदेति। [कथं]भूतमित्यत्राऽऽह—प्रज्ञेति। मेधासहिता प्रज्ञैव वैशाखो मन्थास्तस्य वेधो वेधनं क्षेपणं तेन क्षुभितो विलोडितो जलनिधिर्वेदनामा तस्यान्तरेऽभ्यन्तरे स्थितमिदममृतमिति याव[त्]। उक्तस्य ज्ञानामृतस्य प्रसिद्धादमृतादवान्तरवैषम्यमादर्शयति—अमरैरिति। यद्धि [भग]वता नारायणेन क्षीरसागरान्तरावस्थितममृतं समुद्धृतं तदेव कथंचिदमरा लेभिरे। इदं तु [अ]नायासलभ्यं न भवति। ज्ञानसामग्रीसंपन्नैरेव लभ्यत्वादित्यर्थः। यदि कारुण्या[दा]चार्येण वेदोदधेर्भूतोपकारार्थमुद्धृतं कथं तर्हि कारुण्यं तस्य प्रादुरभूदित्याशङ्[क्याह]—भूतानीति। योऽयं समुद्रवद्दुरुत्तारः संसारस्तस्मिन्नविरतमनवरतं

[illegible] त°। २ छ. °भतां ग°। ३ [illegible] °था जी°। ४ ख. °णोराग°। ५ ग. झ. °विकल°। ६ ख. ङ. छ. [illegible] शास्त्र°। घ. शास्त्रतो द°। ७ घ. °गुरुगम्यशा°। ८ घ. ङ. ज. °वे च सं°। ९ ज. [illegible]यति। १० ङ. °शयत्वेन। ११ ङ. पूज्याचा°। १२ ङ प्रकथयति। १३ ख. °यौ त°। १४ ख. °कीयोत्त°। १५ ग. झ [illegible]जा मनो न°। १६ ख. मन्थस्त°।

संततमेव यानि जननानि विग्रहभेदग्रहणानि तान्येव ग्राहा जलचरास्तैर्घोरे क्रूरे मग्नानि मग्नसंकल्पानि परवशानि भूतान्युपलभ्य कारुण्यमाचार्यस्य प्रादुरासीत् । त मृतमुद्धृत्य भूतेभ्यो दत्त्वा तानि रक्षितवानित्यर्थः ॥ २ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत्स्वान्तमोहान्ध
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रा
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतौ गौडपादीयागमशास्त्रविवरणेऽलातशान्त्याख्यं चतुर्थप्रकरणं समाप्तम् ॥ ४ ॥

ॐ तत्सत् ।

अथाधुना स्वगुरुभक्तेर्विद्याप्राप्तावन्तरङ्गत्वमङ्गीकृत्य तदीयपादसरसीरुहयुगलं प्र यत्प्रज्ञेति । तेषामस्मद्गुरूणां पादौ सर्वभावैर्वाङ्मनोदेहानां प्रह्वीभावैर्नमस्ये नम्री भवा संबन्धः । तौ च जगतः सर्वस्यापि पावनीयौ पवित्रतया पवित्रत्वमापाद्य निर्वृणाते तं स्वसंबन्धिनां सर्वेषां भवः संसारस्तत्प्रयुक्तं भयं स्वकारणेन सहापनुद्य पुरुषार्थपरिस कुर्वाते । तानेव गुरून्विशिनष्टि—यत्प्रज्ञेति । मे मम स्वान्तमन्तःकरणं व्याकुलताहेतुरविवेकस्तस्य कारणं यदनाद्यज्ञानं तद्येषां प्रज्ञैवाऽऽलोकस्तस्य प्रतिहतिं विनाशमगमद्गतवत्तत्पादाविति संबन्धः । न केवलमज्ञानमेवाऽऽचार्य तुच्छी भवति किं तु तत्कार्यमनर्थजातमपि कारणनिवृत्तौ स्थितिमलभमाना स्याह—मज्जोन्मज्जदिति । असकृदनेकशो देवतिर्यगादियोनिषु योऽयमुप देहभेदसंग्रहोऽसावेवोदन्वानुदधिस्तस्मिन्नतित्रासने भयावहे कदाचिद्यथोक्तमज्ञ मजदनभिव्यक्तमवतिष्ठते तदेव चावस्थाविशेषे तद्रूपेणोन्मजदभिव्यक्तमनर्थ तदेवमतिक्रूरे संसारसागरे परिवर्तमानमज्ञानं सकार्यमाचार्यप्रसादादपनीतमा केवलमेकस्य ममैव यथोक्तफलप्राप्तिराचार्यप्रसादादाविरभूत्किं तु तच्चरणपरिचा

१ ग. छ. झ. °रादयस्तै° । २ छ. विमग्नानि । ३ घ. °न्तमोहा° । ४ ख. °न्मजं ( ज्जं ) श्च घो° । ५ ग. झ. अधुना । ६ क. प्रकटीभा° । ७ घ. ङ. ज. '१ ८ ग. झ. °मापद्य° । ९ घ. ज. 'पाद्येते नि° । १० ख. निर्वृण्वाते । ११ क. कुर्वाते । छ. °व स्वगु° । १३ घ. °म तत्स्वान्त° । १४ घ. ज. वदेषां । १५ छ. १७ ज. °त्रासेन भ° । १८ क. 'विषये त° । १९ क. °नं स्वक° ।

मन्येषामपि भूयसामित्याह—**यत्पादाविति** । येषां गुरूणां पादद्वयमाश्रितानामन्येषामपि शिष्याणां तदीयशुश्रूषाप्रणयिमनीषाजुषां श्रुतिर्मनननिदिध्यासनसहकृतं श्रवणज्ञानम् । शमः शान्तिरिन्द्रियोपरतिः । विनयोऽवनतिरनौद्धत्यं तेषां प्राप्तिरग्र्या श्रेष्ठा प्रतिष्ठिता सिध्यति । यस्मादमोघा सफला श्रवणादीनां प्राप्तिस्तस्मादग्र्यत्वं तस्यां संभाव्यते तदेवमाचार्यप्रसादादात्मनोऽन्येषां च बहूनां पुरुषार्थे परिसमाप्तिसंभवादाचार्यपरिचरणं पुरुषार्थकामैराचरणीयमित्यर्थः ॥ ३ ॥

विष्णुं कृष्णं स्वमायाविरचितविविधद्वैतवर्गं निसर्गा-
दुद्यातानर्थसार्थं निरवधिमधुरं सच्चिदेकस्वभावम् ।
आज्ञायाऽऽत्मानमेकं विधिमुखविमुखं नेति नेतीति गीतं
वन्दे वाचां धियां चापरमपि जगतामास्पदं कल्पितानाम् ॥ १ ॥

गौडपादीयभाष्यस्य व्याख्या व्याख्यातृसंमता ।
संमिता निर्मिता सेयमर्पिता पुरुषोत्तमे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयभाष्यटीकायामलातशान्त्याख्यं चतुर्थं प्रकरणम् ॥ ४ ॥

ॐ तत्सत् ।

## समाप्तेयमानन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषत् ।

---

१ क. °ण्मय° । ख. णयिनां म° । ग. झ. °णयनम° । ज. °णयिनीम° । २ ग. तस्या भा° । ३ क. घ. जं. °षार्थप° । ४ ख. ङ. दुत्खाता । घ. छ. झ. °दुद्धाता° ।

# शंकरानन्दभगवत्कृता माण्डूक्योपनिषद्दीपिका ।

माण्डूक्योपनिषद्व्याख्यां करिष्ये पदचारिणीम् ।
ओमात्माभेदसंबोधादानन्दात्मप्रकाशनीम् ॥ १ ॥

नामनामिनोर्लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वादत ओंकारं ब्रह्मनामधेयं ब्रह्मदृष्ट्या[1]ऽऽह—**ओम्** । अवति ब्रह्मबुद्ध्या दृष्टो द्रष्टॄनित्योम् । इति, ओंकारानुकरणार्थः । **एतत्** । उक्तमोंकाररूपं जगत्पर्णस्य शङ्कुस्थानीयं ब्रह्मणा तादात्म्यं प्राप्तं[2] ब्रह्मणो विकारो नामधेयं च । **अक्षरम्** । वर्णात्मकम् । **इदं** विविधप्रत्ययगम्यं चेतनाचेतनात्मकं जगत्**सर्वं** निखिलं **तस्य** सर्वात्मकस्योंकारस्यो**पव्याख्यानम्**उप सामीप्येन विस्पष्टमा समन्तात्कथनमुक्तार्थविवरणमित्यर्थः । **भूत**मतीतं **भवद्**वर्तमानं **भविष्यद्**नागतमित्यनेन प्रकारेण **सर्वं** निखिलमोंकार **एव** प्रणव एव न त्वन्यत् । **यच्च** यदपि प्रसिद्धं सदसदात्मकमन्यदुक्ताद्व्यतिरिक्तं **त्रिकालातीत**मुक्तकालत्रयासंसृष्टं[3] **तदप्युक्तं** ब्रह्म नरविषाणादिकमपि । अपिशब्दः पूर्वेण समुच्चयमाह । **ओंकार एव** । व्याख्यातम् । ओंकारस्य ब्रह्मणो नामधेयत्वादिसंव्याप्तिरित्यभिप्रायेणाऽऽह[4]—**सर्वं** निखिलं **हि** निश्चितमेतत्प्रपञ्चजातं **ब्रह्म** सत्यज्ञानादिलक्षणं बृहत् । जडस्यैव ब्रह्मात्मत्वमुक्तं न चेतनस्येतिशङ्कानिराकरणार्थमाह—**अयम**नुभूयमान **आत्मा**ऽस्मत्प्रत्ययालम्बनश्चेतनस्त्वंपदार्थः । **ब्रह्मो**क्तं तत्पदार्थः । **स** कार्यकारणभावमन्तरेण ब्रह्मणा तादात्म्यं प्राप्तो**ऽयमात्मा** व्याख्यातम् । **चतुष्पा**च्चत्वारः पादा यस्य स चतुष्पात् ।

गौरिव किं चतुष्पादित्याशङ्क्य नेत्याह—**जागरितस्थानो** जागरितं स्थानं यस्य स जागरितस्थानः । ***बहिःप्रज्ञो** बही रूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिःप्रज्ञः **सप्ताङ्गः** सप्तसंख्याकानि द्युसूर्यवाय्वाकाशै[5]रयिपृथिव्याहवनीयाख्यानि मूर्धचक्षुःप्राणशरीरान्तर्भागमूत्राशयपादास्यान्यङ्गानि यस्य स सप्ताङ्गः । **एकोनविंशतिमुखः**, पञ्चज्ञानकर्मेन्द्रियप्राणान्तःकरणचतुष्टयरूपाणि मुखान्येकोनविंशतिसंख्याकानि यस्य स एकोनविंशतिमुखः । **स्थूलभुक्**, स्थूलं रूपादिकं भुङ्क्ते इति स्थूलभुक् । वैश्वानरो विश्वेषामयं नरो विश्वे वा नरा यस्य विश्वश्चासौ नरश्चेति[वा] विश्वानरः, स एव वैश्वा-

---

* अत्र नित्यं समासेऽनुत्तरपदस्थस्येतिषत्वाभावस्तु च्छन्दसि दृष्टानुविधेराश्रयणात् ।

---

१ ग. °दृष्ट्येत्याह । २ ग. ग. °प्तं भवति । ओंत्र° । ३ ग. °संस्पृष्टं । ४ ग. °ह—शरीरान्तर्भागं स° । ५ ग. °शवारिष्ट° ।

नरः । अथ वा विश्वेषां नरशब्दवाच्यानां चतुर्विधानां स्थूलानां देहानामधिष्ठाताऽयं **वैश्वानरः प्रथमः पादः** । आत्मनोऽयं सर्वैः सुकरावगमत्वात्प्रथमोंऽशः ।

इदानीं द्वितीयं पादमाह—**स्वप्नस्थानः** स्वप्नं जागरितवासनाजन्यं स्थानं यस्य स स्वप्नस्थानः । **अन्तःप्रज्ञो**ऽन्तर्मानसवासनाविलासे प्रज्ञा बुद्धिर्यस्य सोऽन्तःप्रज्ञः । **सप्ताङ्ग एकोनविंशतिमुखः** । व्याख्यातम् । **प्रविविक्तभुक्**प्रविविक्तं सूक्ष्मं भुङ्क्त इति प्रविविक्तभुक् । **तैजसस्**तेजोऽन्तःकरणं कर्तृकरणकार्यादिभावेन परिणतं तदेव स्थूलशरीरादिहीनं यस्य स तैजसः । अन्तःकरणस्य स्वामीत्यर्थः । जागरितानन्तरभावित्वात् । **द्वितीयः पादः** । स्पष्टम् ।

इदानीं तृतीयं पादं वक्तुमाह—**यत्र** यस्मिन्काले **सुप्त** उपरतेन्द्रियग्रामो **न कंचन कामं कामयते** कमपि पुण्यपापहेतुभूतं पुत्रक्षेत्रादिकं नाभिलषति । **न कंचन स्वप्नं पश्यति** कमपि शुभमशुभं वासनाविलासं नावलोकयति **तत्**कामाकामनस्वप्नानवलोकनरूपं **सुषुप्तं** गाढनिद्राप्राप्तिस्थानम् । **सुषुप्तस्थानः** । सुषुप्तं स्वयं श्रुत्या व्याख्यातं स्थानं यस्य स सुषुप्तस्थानः । **एकीभूतः** । सर्वजगद्बीजभूतस्याऽऽवरणात्मकस्याज्ञानस्यानुपरमादनेकोऽप्यन्तःकरणविक्षेपोपरमादेकतां गतः **प्रज्ञानघन एव** प्रज्ञानमात्मनो रूपं ब्रह्मणा भेदरहितं स्वयंप्रकाशं तस्य घनः पिण्ड इव स एव न त्वन्तःकरणादिवाह्यं च । न च निरानन्द इत्याह—**आनन्दमयो** विक्षेपाणामुपरमादावरणस्यानुवृत्तेश्च स्वरूपानन्दप्रचुरो **हि** यस्मात्तस्मा**दानन्दभुगा**नन्दो विक्षेपाभावोपलक्षित आत्मा तमेव भुङ्क्तेऽज्ञानवृत्तिभिरवगच्छतीत्यानन्दभुक् । **चेतोमुखश्चेत** आत्मस्वरूपबोधः स एवाऽऽवरणशक्तिसहितो मुखं यस्य स चेतोमुखः । **प्राज्ञः** प्रकृष्टे स्वयंप्रकाश आनन्दात्मनि साज्ञाने ज्ञप्तिरज्ञानवृत्तिरूपो बोधो यस्य स प्रज्ञः प्रज्ञ एव प्राज्ञः । उक्तावस्थाद्वयाभावेनावगम्यमानत्वात् । **तृतीयः पादः** । स्पष्टम् । इदानीं प्राज्ञं प्रस्तौति सर्वकारणत्वात्तस्य । **एष** उक्तः प्राज्ञः **सर्वेश्वरः** सर्वनियामक **एष प्राज्ञः सर्वज्ञः** सर्वश्चासौ ज्ञश्चेति सर्वकार्यात्मकत्वादज्ञानस्य वा जानातीति सर्वज्ञः । **एष** प्राज्ञो**ऽन्तर्याम्य**न्तर्यमयिता । **एष** प्राज्ञो **योनिः** कारणं **सर्वस्य** निखिलस्य चेतनाचेतनात्मकस्य जगतः । योनित्वे हेतुमाह—**प्रभवाप्ययौ** उत्पत्तिविनाशौ **हि** यस्मा**द्भूतानां** चेतनाचेतनरूपाणामितो भवत इति शेषः ।

इदानीं तुरीयं पादमाह—**नान्तःप्रज्ञं** न मानसवासनाविलासदर्शनलालसं **न बहिःप्रज्ञं** नेन्द्रियैर्विषयावलोकनपरं **नोभयतःप्रज्ञं** जागरणस्वप्नान्तरालावस्थावबोधशून्यं **न प्रज्ञानघनं** न ज्ञानमात्रबोधं **न प्रज्ञं** निर्विकल्पबोधशून्यं **नाप्रज्ञं** न बोधाभावरूपम् । **अदृष्टं** प्रत्यक्षादिप्रमाणैरनवलोकितम् । **अव्यवहार्यं** वचनादानादिव्यहारग-

न्धरहितम्। **अग्राह्यं** सर्वप्रकारग्रहणायोग्यम्। **अलक्षणं** गन्धवत्त्वादिबोधशून्यम्। **अचिन्त्यमन्तः**करणवृत्त्यविषयभूतम्। **अव्यपदेश्यं** पृथिवीत्यादिव्यपदेशवद्व्यपदेशायोग्यम्। **एकात्मप्रत्ययसारं** सर्वाद्वैतप्रत्ययः सारभूतोऽवगतिहेतुत्वेन यस्मिंस्तदेकात्मप्रत्ययसारं वाङ्मनसातीतमप्यात्मबोधेनावगन्तुं शक्यमित्यर्थः। **प्रपञ्चोपशमं** प्रपञ्चस्य कार्यकारणात्मकस्योपशमोऽभावो यस्मिंस्तत्प्रपञ्चोपशमम्। [ **शान्तं** स्पष्टम्। ] **शिवं** स्वयंप्रकाशमानन्दात्मस्वरूपत्वान्मङ्गलम्। **अद्वैत**मानन्दात्मव्यतिरिक्तशून्यं **चतुर्थं** तुरीयं पादं **मन्यन्ते** संख्याशून्यमपि पूर्वापेक्षयाऽवगच्छन्ति **स** वस्तुतस्त्वतुरीयरूपोऽप्यविद्यया चतुष्पा**दात्मा**ऽऽनन्दात्माऽस्मत्प्रत्ययव्यवहारयोग्यः **स** तुरीयरूपोऽपगतसमस्तविशेषो **विज्ञेयो** विशेषेण साक्षात्कर्तव्यः।

इदानीमात्मोंकारयोरभेदं कण्ठत आह—**सोऽयमात्मा** व्याख्यातम्। **अध्यक्षरमक्ष**राण्यकारोकारमकारार्धमात्राख्यानि स्वपादसंमितान्यधिकृत्य वर्तत इत्यध्यक्षरम्। **ओंकार** ओंकारस्वरूप ओंकारस्याऽऽत्मस्वरूपत्वे साम्यम्। **अधिमात्र**मकाराद्याश्चतस्रो मात्रा विश्वादिपादसमसंख्याका अधिकृत्याधिमात्रम्। आत्मोंकारयोरभेदे कारणमाह—**पादा** विश्वतैजसप्राज्ञतुरीयाख्या **मात्रा** अकारोकारमकारार्धमात्राः। तादात्म्यं दृढीकर्तुमुक्तं विपर्ययेण निर्दिशति—**मात्राश्च पादाः**। चकार एवकारार्थः। नायं विपर्ययनिर्देशस्त्वमहमितिवदुपचारार्थः किं तु घटः कलशः कलशो घट इतिवन्निरुपचरितं मात्राणां पादानां च तादात्म्यमित्येवकारार्थः। व्याख्यातमन्यत्। अर्धमात्रायास्तुरीयपादरूपत्वात्तुरीयस्य च पूर्वपादत्रयादत्यन्तवैलक्षण्यादतोऽर्धमात्रां परित्यज्य शेषमात्रा[2] आह—**अकार उकारो मकारः**, स्पष्टम्। इति मात्रात्रयनिर्देशार्थः। इदानीं विभागेन मात्राणां पादरूपतामाह—**जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा**। पूर्वा मात्रा। व्याख्यातमन्यत्। अकारस्य पूर्वमात्रात्व उपपत्तिमाह—**आप्तेर्व्याप्तेः**। अकारो हि जागरितस्थानादिकं सर्वमाप्नोति। प्रकारान्तरेण पुनर्निरुक्तिमाह—**आदिमत्त्वाद्वा**। अ आ इ इत्येवमादिरादिः स यस्मिन्नस्ति सोऽयमादिमांस्तस्य भाव आदिमत्त्वमादिसामान्यवत्त्वमित्यर्थः। प्रथमपादोऽपि यथा पादानामादिरत एव तत्सामान्यवानाप्नोति चेतरत्पादजातं पूर्वभावित्वात्। वाशब्दः पक्षान्तरार्थः। विश्वाकारयोरैक्यमाप्तेर्वाऽऽदिमत्त्वाद्वेत्यर्थः। इदानीं विश्वाकारयोराप्ता(प्त्या)दिमत्त्वज्ञानात्फलमाह—**आप्नोति**। प्राप्नोति ह प्रसिद्धान्वै स्मर्यमाणान्**सर्वा**न्निखिलान्**कामा**न्काम्यमानान्पुत्रक्षेत्रादीन्। आप्तेः फलमुक्त्वाऽऽदिमत्त्वस्य फलमाह—**आदिश्च** स्वानां मध्ये सर्वेषु कार्येषु प्रथमगण्यः। चकारादपि प्रथमं फलं **भवति**, स्पष्टम्। यस्य फलं तमाह—**यः** पादमात्रातादात्म्यज्ञ **एवमुक्तेन** प्रकारेणो-

---

१ क. ख. 'भेदका°। २ ग. °शेषा मा°।

कयोः पादमात्रयोः सामान्यं **वेद** जानाति स आप्नातीत्यन्वयः **स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा ।** स्पष्टम् । तैजसोकारयोस्तादात्म्ये हेतुमाह—**उत्कर्षा**-दूर्ध्वभावित्वेनोत्कृष्टत्वात् । पुनरन्यत्सामान्यमाह—**उभयत्वाद्वा** विश्वाकाराभ्यां तैजसो-कारयोर्द्वितीयत्वात् । वाशब्दः पूर्ववत् । इदानीमुक्तज्ञानस्य फलमाह—**उत्कर्षति ह वै ज्ञानसंततिं** शिष्यप्रशिष्यादिज्ञानसंतत्योत्कृष्टो भवति । व्याख्यातमन्यत् । उभयत्वज्ञानस्य फलमाह—**समानश्च भवति,** यो हि स्वावस्थानदेशे काले वोत्कृष्टस्ततसमानः । चकारात्तस्मादुत्कृष्टोऽपि भवति । इदानीमुभयज्ञानस्य साधारणं फलमाह—**नास्याब्रह्म-वित्कुले भवति ।** अस्योत्कर्षोभयत्वज्ञानवतः कुलेऽन्वये शिष्यप्रशिष्यादिरूपेऽहं ब्रह्मास्मीत्येतज्ज्ञानशून्यो न भवति । **य एवं वेद,** व्याख्यातम् । **सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा,** स्पष्टम् । प्राज्ञमकारयोस्तादात्म्ये हेतुमाह—**मितेर्मिनोति हि** प्राज्ञः सर्वमात्मनि तादात्म्येन मकारोऽप्यकारोकारौ प्रक्षिपत्येवमात्मस्वरूपेऽन्यथोंकारस्या-निष्पत्तेः । **अपीतेर्वा** मकारो ह्योंकारे वर्तमानः स्पष्टं नोपलभ्यते ततः प्रलयः प्राज्ञश्च प्रलयः प्रसिद्धः प्रलयसामान्यात् । वाशब्दः पूर्ववत् । इदानीं मितिज्ञात(न)स्य फलमाह—**मिनोति ह वा इदं सर्वम् ।** इदं विविधप्रत्ययगम्यं जगन्निखिलं प्रस्थमिव यावत्, मिनोति सर्वात्मभावेन स्वात्मनि प्रक्षिपति । अपीतिज्ञानस्य फलमाह—**अपीतिश्च भवति,** सर्वाधिक्येन प्रलयः सर्वस्य, चकारात्स्वयं प्रलयशून्यश्च भवति । **य एवं वेद,** व्याख्यातम् । अर्धमात्राया अवयवस्योंकारस्यावयविनश्चाभेदमुररीकृत्य चतुर्थपादरूपनिर-ञ्जनात्मस्वरूपतामोंकारस्याऽऽह—**अमात्रोऽ**कारादिमात्राशून्यश्च**तुर्थोऽव्यवहार्यः प्रप-ञ्चोपशमः शिवोऽद्वैतः,** स्पष्टम् । एवमुक्तेन मात्रातादात्म्येनों**कार आत्मैव,** स्पष्टम् । **संविशति** सम्यक्प्रवेशं करो**त्यात्मनों**कारेणाऽऽ**त्मान**मानन्दात्मस्वरूपं **य** ओंकारात्मज्ञ एवमुक्तेन प्रकारेणोंकारात्मनोस्तादात्म्यं **वेद** जानाति तस्योक्तोंकाररूपान-न्दात्मप्राप्तिफलमर्थसिद्धं ततः श्रुत्या नोक्तम् । अथ वा संविशत्यात्मनाऽऽत्मानमितीदं फलवाक्यमस्तु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ माण्डूक्योपनिषद्दीपिका समाप्ता ॥

---

# श्रीमद्गौडपादाचार्यविरचितमाण्डूक्योपनिषत्कारिकाद्यचरणानामकारादिवर्णानुक्रमसूची ।

समाप्तेयं श्रीमद्गौडपादाचार्यविरचितमाण्डूक्योपनिषत्कारिकाद्यचरणानां वर्णानुक्रमसूची ।



# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११

# ऐतरेयोपनिषत्

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

तथा च

विद्यारण्यविरचिता ऐतरेयोपनिषद्दीपिका ।

एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८३३

खिस्ताब्दाः १९११



मूल्यं सपाद एको रूपकः। (१।४)

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्या ऐतरेयोपनिषद आदर्शपुस्तकानि यैः परहितैकपरायणमनीषया प्रदत्तानि तेषां नामग्रामादीनामुल्लेखः कृतज्ञतया क्रियते—

क. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, बडलीग्रामनिवासिनां वे० शा० सं० मार्तण्डदीक्षितानाम् । लेखनकालः—शके १७६७

ख. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, करवीरपुरनिवासिनां श्रीमतां वे० शा० सं० गुरुमहाराजानाम् ।

ग. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, इन्दूरपुरनिवासिनां श्रीयुतानां किबे इत्युपाह्वानां " भाऊसाहेब बाळासाहेब " इत्येतेषाम् ।

घ. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, वटोदरग्रामनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा० रा० " कृष्णराव भीमाशंकर " इत्येतेषाम् ।

ङ. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, नागपुरनिवासिनां श्रीयुतानां रा० रा० "आप्पासाहेब बुटी" इत्येतेषाम् । लेखनकालः—शके १७१४ ।

च. इति संज्ञितम्—ऐतरेयोपनिषद्भाष्यम् , पुण्यपत्तननिवासिनां कै० वे० शा० सं० देवोपाह्वबालशास्त्रिणाम् । लेखनकालः—शके १७९२ ।

छ. इति संज्ञितम्—ऐतरेयोपनिषद्भाष्यम् , वैराजक्षेत्रनिवासिनां वे० शा० सं० " शिवराम वीरेश्वर शास्त्री भट्ट " इत्येतेषाम् । लेखनकालः—संवत् १७६६ ।

ज. इति संज्ञितम्—ऐतरेयोपनिषद्भाष्यम् , वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा० रा० " कृष्णराव भीमाशंकर " इत्येतेषाम् ।

झ. इति संज्ञिता—ऐतरेयोपनिषद्भाष्यसहिता, करवीरपुरनिवासिनां श्रीयुतानां वे० शा० सं० गुरुमहाराजानाम् ।

ञ. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता काश्यां शिलामुद्रिता,

के० रा० रा० "महादेव चिमणाजी आपटे" इत्येतेषाम् ।
मुद्रणकालः—संवत् १९४१ ।

ट. इति संज्ञिता—ऐतरेयोपनिषत्सटीकभाष्योपेता, कलिकातानगरे मुद्रणालये मुद्रिता "जीवानन्द" इत्येतैः संस्कृता के० वे० शा० सं० "बाळशास्त्री देव" इत्येतेषाम् ।

ठ. इति संज्ञितम्—ऐतरेयोपनिषद्भाष्यम् । उज्जयिनीक्षेत्रनिवासिनां वे० शा० सं० रा० रा० "सोरटीबुवा" इत्येतेषाम् ।

ङ. इति संज्ञितम्—ऐतरेयोपनिषद्भाष्यम्, अष्टग्रामनिवासिनां रा० रा० "गोविन्दराव लिमये" इत्येतेषाम् ।

क. इति संज्ञिता—ऐतरेयोपनिषन्मूलमात्रा, वैराजक्षेत्रनिवासिनां वे० शा० सं० "शिवराम वीरेश्वर शास्त्री भट्ट" इत्येतेषाम् ।

ख. इति संज्ञिता—ऐतरेयोपनिषन्मूलमात्रा, पुण्यपत्तननिवासिनां श्रीयुतानां रा० रा० "भाऊसाहेब नगरकर" इत्येतेषाम् ।

क्र. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका, वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा० रा० "कृष्णराव भीमाशंकर" इत्येतेषाम् । लेखनकालः—शके १७७१ ।

ख. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका, विंचूरपुरनिवासिनां श्रीयुतानां रा० रा० "रावसाहेब अण्णासाहेब" इत्येतेषाम् । लेखनकालः—संवत् १७६३ ।

ग. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका, मुम्बापुरनिवासिनां वे० शा० सं० रा० रा० जयकृष्णमहाराजानाम् ।

घ. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका प्रान्तिजसकाशादागता*

ङ. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका समूला*

च. इति संज्ञिता—ऐतरेयोपनिषद्दीपिका समूला* ।

---

* एतत्स्वामिनो नाम न ज्ञायते ।

ॐ तत्सद्ब्रह्मणे नमः ।

ऋग्ब्राह्मणारण्यककाण्डान्तर्गतद्वितीयारण्यकस्था

# *ऐतरेयोपनिषत् ।

---

## आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

---

परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन[1] । सैषा कर्मणो ज्ञानसहितस्य परा गतिरु[2]क्थविज्ञानद्वारेणोपसंहृता । "एतत्सत्यं ब्रह्मप्राणाख्यम्" "एष एको देवः" "एतस्यैव प्राणस्य सर्वे देवा विभूतयः" "एतस्य प्राणस्याऽऽत्मभावं गच्छन्देवता अप्येति" इत्युक्तम् । सोऽयं देवताप्ययलक्षणः[3] प[4]रः पुरुषार्थः । एष मोक्षः । स चायं यथोक्तेन ज्ञानकर्म[5]समुच्च[6]यसाधनेन प्राप्तव्यो नातः परमस्तीत्येके[7] प्रतिपन्नास्तान्निराचिकीर्षुरुत्तरं केवलात्म[8]ज्ञानविधानार्थमात्मा वा इदमित्याद्याह ।

आत्मा वा इदमित्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्तयति—परिसमाप्तमिति । तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्य तत्फलोपसंहारादित्याह[9]—सैषेति । परा गतिः[10] परं गन्तव्यं[11] प्राप्तव्यं फलमित्यर्थः । उपसंहारमेव वाक्योदाहरणेन दर्शयति—एतदिति । तत्र सह सर्वेण भोज्येन संयुक्तोऽध्यात्माधिदैवलक्षणः प्राणः सत्यैकशब्दवाच्यो भवती[12]ति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः । अनेन प्राण एक एवेत्युक्तमित्याह—एष इति । तर्हि वागग्न्याद[13]यो देवाः क इत्याशङ्क्य "तस्य वाक्तन्तिरथातो विभूतयोऽस्य पुरुषस्य" इत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह—एतस्यैवेति । एवं सर्वात्मकप्राणस्याऽऽत्मत्वेन विज्ञानात्कर्मसहितात्सर्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं "प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता

---

* इयमैतरेयोपनिषदैतरेयब्राह्मणारण्यककाण्डान्तर्गतद्वितीयारण्यकस्थचतुर्थपञ्चमषष्ठेत्यध्यायत्रिकरूपा । अस्या अध्यायत्रिकरूपाया उपनिषदः खण्डषट्कं वर्ततेऽतोऽस्या आत्मषट्कमिति नाम्ना प्रसिद्धिः ।

---

१ क. ग. छ. °न । एषा । २ क. ग. घ. छ. °रुक्तवि° । ३ ग. °णः पु° । ४ क. घ. ङ. परमपु° । ५ च. °र्मसा° । ६ ख. °च्चयेन सा° । ७ च. ज. °के विप्र° ८ च. छ. ज. °त्मविद्यावि° । ९ क. °ह । एषे° । १० ख. गतिरिति प° । ११ क. ग. घ. °व्यं फ° । १२ ख. °वति । प्रा । १३ क. ग. °दयः क° ।

अप्येति य एवं वेद" इत्यनेन वाक्येनोपसंहृतमित्याह—एतस्येति। तथा च ज्ञानसहितेन कर्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः। अत्रान्तरे सर्वात्मकसूत्रात्मप्राप्तिव्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषांचिन्मतमुत्थापयति—सोऽयमिति। एतस्यैव विषयादिमतः सुखरूपत्वेन पुरुषार्थत्वान्मोक्षत्वं न निर्विषयस्य केवलात्मस्वरूपावस्थानस्येत्याह—एष इति। अयमपि चेन्मोक्षः केवलात्मज्ञानेन साध्यते[1] तदा तदारम्भोऽर्थवानित्याशङ्क्य सविशेषेणैव साधनेन सिद्धिर्युक्तेत्याह—स चेति। आत्मनः सविशेषत्वेन केवलात्मविद्याया अभावादपि न तस्या हेतुत्वमित्याह—नातः परमिति। तन्मतं[2] प्रदर्श्य तन्निराकरणार्थत्वेन केवलात्मविद्यावाक्यमवतारयति—तानिति। केवलात्मज्ञानेति[3] निर्विशेषात्मविषयत्वमकर्मिनिष्ठत्वं कर्मानङ्गत्वलक्षणं कर्मासंबन्धित्वं च कैवल्यमिह विवक्षितमित्यर्थः।

कथं पुनरकर्मसंबन्धिकेवलात्मविज्ञानविधानार्थ[4] उत्तरो ग्रन्थ इति गम्यते। अन्यार्थानवगमात्। तथा च पूर्वोक्तानां देवतानामग्न्यादीनां[5] संसारित्वं दर्शयिष्यत्यशनायादिदोषवत्त्वेन तमशनापिपासाभ्यामन्ववार्जदित्यादिना। अशनायादिमत्सर्वं[6] संसार एव परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः। भवत्वेवं केवलात्मज्ञानं[7] मोक्षसाधनं न त्वत्राकर्म्यैवाधिक्रियते। विशेषाश्रवणात्[8]। अकर्मिण आश्रम्यन्तरस्येहाश्रवणात्। कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्यानन्तरमेवाऽऽत्मज्ञानं[9][10][11] प्रारभ्यते। तस्मात्कर्म्यैवाधिक्रियते।

ननु "आत्मा वा इदम्" इत्यादि कथं केवलात्मविषयं "स इमाँल्लोकानसृजत" इति लोकसृष्टिप्रतीतेः। तस्याश्च सविशेषहिरण्यगर्भादिकर्तृकत्वेन[12] पुराणेषु प्रसिद्धेः। ताभ्यो गामानयदित्यादिव्यवहाराणां लोके सविशेषविषयत्वप्रसिद्धेः। पूर्वत्र "अथातो रेतसः सृष्टिः" "प्रजापते रेतो देवाः" इत्यत्र[13] प्रजापतिशब्दितस्य हिरण्यगर्भस्य प्रस्तुतत्वाच्च तस्य तद्विषयत्वस्यौचित्यादित्यात्मगृहीतिरित्यधिकरणपूर्वपक्षन्यायेन शङ्कते—कथमिति। सविशेषविषयत्वे सत्यात्मविद्यायाः कर्मासंबन्धोऽप्यसिद्ध इत्यभिप्रेत्योक्तमकर्मसंबन्धीति। "आत्मा वा इदमेक एवाग्र आसीत्" इत्यद्वितीयात्मोपक्रमात्। "एष ब्रह्मैष इन्द्रः" इत्याद्यनुक्रम्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्" इति प्रज्ञानशब्दितप्रत्यगात्माधिष्ठानत्वेन तद्व्यतिरेकेण ब्रह्मशब्दितहिरण्यगर्भादिप्रपञ्चस्याभा-

---

१ क. °ते यदा त°। २ ग. तत्र तं। ३ ग. °रमविद्येति। ४ क. ग. घ. °त्मज्ञा°। ५ ख. देवाना°। ६ ख. °नायापि°। ७ ग. ङ. °मत्संसा°। ८ च. ज. °त्मविज्ञा°। ९ ग. छ. नन्वक च. मनु क°। १० छ. °त्। क°। ११ च. °त्मविज्ञा°। १२ ख. °गर्भक°। १३ क. ग. घ. °हीत्य°

यमुक्त्वा प्रज्ञानं ब्रह्मेत्यद्वितीयात्मनोपसंहारात् " स एतमेव पुरुषं ब्रह्म ततममपश्यत् " इति मध्ये परामर्शाद्ब्रह्मात्माद्वितीयत्वस्य मानान्तरागम्यत्वेनापूर्वत्वादमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदिति स्वर्गशब्दितनिरतिशयसुखात्मकब्रह्मणैक्येन स्थितस्य तदंशभूतवैषयिकसर्वानन्दप्राप्तिलक्षणफलोक्तेः । सृष्ट्याद्यर्थवादात् " स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत " इति प्रवेशोक्तेः । "तस्य त्रय आवसथास्त्रयः स्वप्नाः " इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च । निर्विशेषाद्वितीयात्मपरत्वावगमेन ग्रन्थस्यार्थान्तरशङ्कानवकाशाल्लोकादिसृष्ट्युक्तेश्चाध्यारोपापवादाभ्यामुक्तात्मप्रतिपत्त्यर्थमात्मन्यध्यारोपा*त्परमात्मैवेहाऽऽत्मशब्देन गृह्यत इतरवत् । यथेतरेषु सृष्टिश्रवणेषु " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्येवमादिषु परस्याऽऽत्मनो ग्रहणं यथा वेतरस्मिँल्लौकिक आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति । कुतः । वाक्यार्थदर्शनात् । आत्मगृहीतिरितरवदुत्तरादित्यधिकरणसिद्धान्तन्यायेन केवलात्मपरत्वनिश्चयान्न सविशेषपरत्वमुत्तरग्रन्थस्येत्याह—**अन्यार्थेति** । यच्चैष एव मोक्ष इत्युक्तं तत्राऽऽह—**तथा चेति** । तथा संसारित्वं च दर्शयिष्यतीत्यन्वयः । तं हिरण्यगर्भस्य स्थूलं रूपं वैराजं पिण्डमशनायापिपासाभ्यां संयोजितवानीश्वर इति श्रुत्यर्थः । अशनायादिमत्त्वेऽपि निरतिशयसुखवत्त्वेन देवताभावस्य मोक्षत्वं स्यादित्यत आह—**अशनायादीति** । अशनायादेर्दुःखनियतत्वान्निरतिशयसुखवत्त्वं तस्यासिद्धमिति संसारित्वमित्यर्थः । यच्च निर्विशेषात्मस्वरूपावस्थानस्य विषयादिरहितत्वेन न मोक्षत्वमिति तदसत् । तस्य योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यशनायाद्यत्ययश्रुतेस्तन्नियतदुःखाप्रसक्तेः । स्वतश्च " आनन्दो ब्रह्मेति व्यजानात् " इति श्रुत्यन्तरादमुष्मिन्स्वर्गे लोक इतीहाप्यानन्दरूपतावगमात्स्वर्गशब्दस्य सुखसामान्यवाचित्वात् " अनन्ते स्वर्गे लोके ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः " इत्यादिश्रुतिषु ब्रह्मानन्दे स्वर्गशब्दप्रयोगाच्च । तस्य विषयाभावेऽपि पुरुषार्थत्वान्मोक्षत्वमित्याह—**परस्य त्विति** । एवं निर्विशेषात्मविद्याया मोक्षसाधनत्वमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमरूपं कैवल्यं न संभवतीति वदन्संन्यासमाक्षिपति—**भवत्विति** । विशेषाश्रवणमेव स्फोटयति—**अकर्मिण इति** । संन्यासिन इत्यर्थः । न केवलं विशेषाश्रवणं किंतु संनिधानात्कार्मिणः प्रतीतेः कर्मसंबन्धित्वनियमश्रवणं

---

* परमात्मैवेत्यादि वाक्यार्थदर्शनादित्यन्तं क. ख. ग. संज्ञितपुस्तकेषु नास्ति ।

---

१ क. घ. °ह्मण्यैक्ये° । २ ख. तदन्तर्भूत° । ३ ख. °त्मन्यारो° । ४ ख. स्थूलरू° । ५ घ. °नापि° । ६ ख. °खत्वेन । ७ ख. ग. °नादी° । ८ ख. यादिमदिति । ९ ख. °नाय° । १० ख.° वि । न त्वि° । ११ ख. ग. कार्मिसं° ।

चास्तीत्याह—**कर्म चेति** । तथा च तद्द्वारा कर्मी संनिहित इत्यर्थः । **तस्मादिति** । ततो न कर्मत्यागरूपसंन्यासाश्रमोऽस्तीत्यर्थः ।

**न च कर्मासंबन्ध्यात्मविज्ञानं पूर्ववदन्त उपसंहारात् । यथा कर्मसंबन्धिनः पुरुषस्य सूर्यात्मनः स्थावरजङ्गमादिसर्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च सूर्य आत्मेत्यादिना, तथैव "एष ब्रह्मैष इन्द्रः" इत्याद्युपक्रम्य सर्वप्राण्यात्मत्वम् । यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रमित्युपसंहरिष्यति । तथा च संहितोपनिषदि—"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते" इत्यादिना कर्मसंबन्धित्वमुक्त्वा "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्युपसंहरति । तथा तस्यैव योऽयमशरीरः प्रज्ञात्मेत्युक्तस्य यश्चासावादित्य एकमेव तदिति विद्यादित्येकत्वमुक्तम् । इहापि कोऽयमात्मेत्युपक्रम्य प्रज्ञात्मत्वमेव प्रज्ञानं ब्रह्मेति दर्शयिष्यति । तस्मान्नाकर्मसंबन्ध्यात्मज्ञानम् ।**

एवमात्मविद्यां केवलां कर्मासंबन्धिनीमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमो निराकृतः । इदानीमङ्गीकारं परित्यजति—**न चेति** । पूर्वत्र कर्मसंबन्धिज्ञानविषयस्य सर्वात्मत्वोक्तेरेष ब्रह्मेत्यादिनाऽत्रापि सर्वात्मत्वोक्तेस्तेनैव लिङ्गेनास्याप्यात्मज्ञानस्य कर्मसंबन्धित्वानुमानाद्वक्ष्यमाणस्याऽऽत्मज्ञानस्य न कर्मासंबन्धित्वमित्यर्थः । संग्रहवाक्यं विवृणोति—**यथेत्यादिना । कर्मसंबन्धिन इति** । तस्य "एष हीमं लोकमभ्यार्चत्" "पुरुषरूपेण य एष तपति" इत्यादिना सूर्यात्मत्वमुक्त्वा तस्य सर्वात्मत्वं "तस्माच्छतार्चिन इत्याचक्षत एतमेव सन्तम्" इत्यादिना "प्राण ऋच इत्येवं विद्यात्" इत्यन्तेन "प्राणो वै सर्वाणि भूतानि च" इत्यनेन चोक्तमित्यर्थः । जगतो जङ्गमस्य तस्थुषः स्थावरस्य सूर्य आत्मेति मन्त्रार्थः । **प्रज्ञानेत्रमिति** । प्रज्ञाशब्दितब्रह्मनेतृकमित्यर्थः । संदेशन्यायेनाप्यस्य कर्मसंबन्ध्यात्मविषयत्वमिति वदन्सर्वात्मत्वालिङ्गस्य कर्मसंबन्ध्यात्मनियतत्वमाह—**तथा चेति** । तथा **संहितोपनिषदि** चेति चकारान्वयः । महत्युक्थे बृहतीसहस्राख्ये शस्त्र एतं प्रकृतमात्मानमृग्वेदिनो विचारयन्तीति श्रुत्यर्थः । **संहितोपनिषदि** प्रज्ञात्मेत्युक्तस्याऽऽत्मनो यो यज्ञस्योल्बणं पश्येदित्यादिवाक्यपर्यालोचनया कर्मसंबन्धप्रतीतेरस्यापि प्रज्ञात्म-

१ ख. °ति । बृहतीसहस्रलक्षणमिति । त° । २ च. ज. °त्मज्ञा° । ३ क. ख. ग. ङ. °त्मना स्था° । ४ च. छ. °त्मकत्व° । ५ क. ग. ङ. च. छ. ज. °क्तं म° । ६ ग. ङ. मन्त्रत्रयेण । ७ ग. ङ. °ण सू° । ८ च. ज. °षत् । ए° । ९ क ग. घ. च. छ. °त्युक्थ इ° । १० छ. °ना° । मीमांसन्ते । क° । ११ ख. च. ज. °हरिष्यति । १२ च. ज. °त्युपक्रम्य य° । १३ क. ग. च °मेत° । १४ ङ. च. ज. °म् । तथेहा° । १६ ख. °स्तेन च लि° । १६ ख. °स्य कर्मसं° । १७ क. °त्येव वि° । १८ क. °स्य च सू° । १९ क. ग. घ. ङ. °षचेति । ।

त्वोक्त्या च कर्मसंबन्धावगमात्तज्ज्ञानस्य कर्मसंबन्धित्वमित्याह—**तथा तस्येति** । शङ्कामुपसंहरति—**तस्मादिति** ।

**पुनरुक्त्याऽऽनर्थक्यमिति चेत्कथं[1] " प्राणो वा अहमस्म्यृषे " इत्यादिब्राह्मणेन " सूर्य आत्मा " इति मन्त्रेण च निर्धारितस्याऽऽत्मन " आत्मा वा इदम् " इत्यादिब्राह्मणेन कोऽयमात्मेति प्रश्नपूर्वकं पुनर्निर्धारणं पुनरुक्तमनर्थकमिति चेत् । न । तस्यैव धर्मान्तरविशेषनिर्धारणार्थत्वान्न पुनरुक्ततादोषः । कथम्, तस्यैव कर्मसंबन्धिनो जगत्सृष्टिस्थितिसंहारादिधर्मविशेषनिर्धारणार्थत्वात् । केवलोपास्त्यर्थत्वाद्वा । अथवाऽऽत्मेत्यादिपरो ग्रन्थसंदर्भ आत्मनः कर्मिणः कर्मणोऽन्यत्रोपासनाप्राप्तौ कर्मप्रस्तावेऽविहितत्वात्केवलोऽप्यात्मोपास्य इत्येवमर्थः । भेदाभेदोपास्यत्वाद्वैक एवाऽऽत्मा कर्मविषये भेददृष्टिभाक् । स एवाकर्मकालेऽभेदेनाप्युपास्य इत्येवमपुनरुक्तता ।**

शङ्कावाद्येव सिद्धान्त्याशङ्कामाशङ्कते—**पुनरुक्तीति** । संग्रहवाक्यं विवृणोति—**प्राणो वा इत्यादिना** । पूर्वोत्तरब्राह्मणयोरेकार्थत्वे वक्ष्यमाणमपि प्राणात्मविषयं स्यात्तच्च निर्धारितमिति पुनरुक्तमित्यर्थः । स एवाऽऽशङ्कां परिहरति—**न तस्येति** । तमेव प्रश्नपूर्वकं विवृणोति—**कथमित्यादिना** । **जगत्सृष्टीति** । " स इमाँल्लोकानसृजत " इत्यादिश्रवणादित्यर्थः । प्रकारान्तरेण पुनरुक्तिं परिहरति—**केवलेति** । एतं परिहारं[11] वाशब्दार्थं वदन्विवृणोति—**अथवेति** । **कर्मणोऽन्यत्रेति** । कर्माङ्गत्वं तदङ्गोक्त्याद्याश्रयत्वं च विनेत्यर्थः । अप्राप्ताविति च्छेदः । अप्राप्तौ हेतुमाह—**कर्मप्रस्ताव इति** । अविहितत्वादिति[12] च्छेद उत्तरत्र हेतुः । न चैवं स्वोक्तकर्मसंबन्धित्वानियमत्यागापत्तिः कर्माङ्गाश्रितत्वमात्रस्य त्यागेऽपि कर्मसंबन्धित्वस्य सविशेषविषयत्वलक्षणस्य कर्मसमुच्चितत्वलक्षणस्य[13] वाऽत्यागादङ्गीकारवादेनास्य पक्षस्योक्तेर्वाऽस्मिन्नपि पक्षे कर्मिनिष्ठत्वं नियतमिति भावः । अत्रैव पक्षे विशेषान्तरमाह—**भेदेति** । **भेददृष्टीति** । इदंतयोपास्य इत्यर्थः । **अभेदेनेति** । अहंतयेत्यर्थः ।

**" विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते "[14] इति । " कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः " इति च वाजिनाम्[15] । न च वर्षशतात्परमायुर्मर्त्यानाम्[16] । येन**

---

१ ख. ङ. च. °चेत्प्राणो । २ ख. मस्म्येष इ° । ३ ग. छ. ज. °ति च । ४ ङ. च. छ. °त्यादिः ष° । ५ च. छ. °परतो ग्र° । ६ ख. ग. ङ. कर्म° । ७ क. ख. घ. ङ. छ. °त्वाच्चैक । च. ज. °त्वादेक । ८ ङ. च. छ. ज. °मप्युपु° । ९ ख. एव श° । १० ख. एतमेव प° । ११ ख. °ङ्गोक्याद्यधिकरणत्वं । १२ ख. °ति च्छेदेनोत्त° । १३ ख. °स्य चात्या° । १४ ख. च छ. ज. °ति च । कु° । १५ च. वाजसनेयिना° । १६ ख. °म् । यतः क° ।

**कर्मपरित्यागेनाऽऽत्मानमुपासीत । दर्शितं च " तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति " इति । वर्षशतं चाऽऽयुः कर्मणैव व्याप्तम् । दर्शितश्च मन्त्रः " कुर्वन्नेवेह कर्माणि " इत्यादिः । तथा " यावज्जीवमग्निहोत्रं जुहोति " " यावज्जीवं दर्शपूर्णमासाभ्यां यजेत " इत्याद्याश्च । " तं यज्ञपात्रैर्दहन्ति " इति च । ऋणत्रयश्रुतेश्च ।**

आत्मा वा इदमित्यादिषट्कस्य स्वपक्षेऽर्थवत्त्वमुक्त्वा तस्य कर्मत्यागेनाऽऽत्मज्ञानार्थत्वपक्षे बहुश्रुतिविरोधमाह—**विद्यामित्यादिना** । अविद्याशब्देनात्र तत्कार्यं कर्मोच्यते । ननु कुर्वन्नेवेति मन्त्रे वर्षशतस्य कर्मनियतत्वोक्तावपि तदनन्तरं संन्यासः स्यादित्यत आह—**न चेति** । " शतायुर्वै पुरुषः " इति श्रुतेरित्यर्थः । इहापि बृहतीसहस्राख्यस्य शस्त्रस्य षट्त्रिंशतमक्षराणां सहस्राणीत्युक्त्वा तावन्ति पुरुषायुषोऽह्नां सहस्राणीत्युक्त्वा वत्सरशतमेवाऽऽयुरित्याह—**दर्शितं चेति** । भवन्तीत्यनन्तरमितिशब्दो द्रष्टव्यः । पुरुषायुषस्याह्नामिति पाठः साधुः । पुरुषायुषोऽह्नामिति तु समासान्तविधेरनित्यत्वाभिप्रायेण कथंचिन्नेयः । पुरुषायुषं चेद्वर्षशताधिकं नास्ति तर्हि तन्मध्य एव कर्मसंन्यासः स्यादत आह—**वर्षशतं चेति** । तत्र मानमाह—**दर्शितश्चेति** । ननु पुराणेषु शताधिकस्याऽऽयुषो दशरथादेः श्रुतत्वाच्छतवर्षानन्तरं कर्मसंन्यासः स्यादित्याशङ्क्य शतायुःश्रुतिविरोधेन तस्यार्थवादत्वात्तथाऽङ्गीकारेऽपि जीवनकालस्य सर्वस्यापि कर्मणा व्याप्तत्वश्रुतेर्नैवमित्याह—**तथा यावज्जीवमिति** । जीर्णो वा विरमेदिति वचनाज्जरानन्तरं संन्यासः स्यादित्याशङ्क्य यज्ञपात्रैर्दहनविधानान्नेत्याह—**तं यज्ञपात्रैरिति** । ननु यावज्जीवादिवाक्यानां प्रतिपन्नगार्हस्थ्यविषयत्वं वक्तव्यम् । अन्यथा ब्रह्मचारिणोऽपि तद्विधिविप्रसङ्गात्ततश्च गार्हस्थ्यात्पूर्वं कर्मत्यागः स्यादत आह—**ऋणेति** । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति श्रुतेः, "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् " इति स्मृतेश्चेत्यर्थः । ततश्च तदपाकरणार्थं तेनापि गार्हस्थ्यमेव प्रतिपत्तव्यं न संन्यास इत्यर्थः ।

**तत्र पारिव्राज्यादिशास्त्रं व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यात्मज्ञानस्तुतिपरोऽर्थवादोऽनाधिकृतार्थो[11] वा[12] । न । परमा[13]र्थविज्ञाने फलादर्शने क्रियानुपपत्तेः । यदुक्तं " कर्मण एव[14] चाऽऽत्मज्ञानं कर्मसंबन्धि च " इत्यादि तन्न । परं ह्याप्तकामं सर्वसंसारदोष[15]वर्जितं ब्रह्माहमस्मीत्यात्म-**

१ क. ख. ग. ञ. °वन्ति । व° । २ च. °तमत्र कु° । ३ च. °त्यादि । त° । ४ ज. इत्येवमाद्या° । ५ क. कर्मेष्यते । ६ ग. °ह्लस्य । ७ ख. °त्वात्संवत्स° । ८ ख. °ति भाष्यपा° । ९ क. ग. घ. °श्रुतेर्विरो° । १० छ. °त्याद्यात्म° । ११ ज. °तार्थविषयो वा । १२ छ. वाऽनधिकारिपरः । न । १३ ग. छ. °मार्थात्मवि° । ङ. °मार्थत आत्मवि° । १४ च. छ. ञ. एवाऽऽत्म° । १५ च. [illegible] °षधर्मव° ।

स्येन विज्ञाने कृतेन कर्तव्येन वा प्रयोजनमात्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते । फलादर्शनेऽपि नियुक्तत्वात्करोतीति चेत् । न । नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगं चाऽऽत्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके न तु तद्विपरीतनियोगाविषयब्रह्मात्मत्वदर्शी । ब्रह्मात्मत्वदर्श्यपि संश्चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिन्न नियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्तव्यं प्राप्नोति । तच्चानिष्टम् । न च स नियोक्तुं शक्यते केनचित् ।

" यदहरेव विरजेत्तदहरेव प्रव्रजेत् " " व्युत्थायाथ भिक्षाचर्यं चरन्ति " " ब्राह्मणः प्रव्रजेद्गृहात् " इत्यादिश्रुतिस्मृत्योः का गतिरित्यत आह—**तत्रेति** । **ज्ञानस्तुतीति** । सर्वसंन्यासेनाप्यात्मा ज्ञातव्य इति ज्ञानस्तुतिः प्रतीयत इति तत्पर इत्यर्थः । विधित्वेऽपि कर्मानधिकृतान्धपङ्ग्वादिविषयत्वमेवेत्याह—**अनधिकृतेति** । तस्मान्नाकर्मिनिष्ठा विद्या किंतु कर्मिनिष्ठा तत्संबन्धिनी चेति स्थितं तदेतत्सिद्धान्ती परिहरति—**नेति** । एवं हि कर्मिनिष्ठा विद्या स्यात् । यदि विदुषोऽपि कर्मानुष्ठानं स्यात्तदपि प्रयोजनार्थितया वा स्यात्काम्य इव नियोगबलाद्वा **प्राभाकरमत** इव नित्यकर्माणि । तत्र नाऽऽद्य इत्याह—**परमार्थेति** । संग्रहवाक्यं विवृण्वन्निषेध्याध्याहारपूर्वकं नञर्थं विवृणोति—**यदुक्तमित्यादिना** । **कर्मसंबन्धि चेति** । कर्माङ्गोक्थ्याद्याश्रयमित्यर्थः । परमार्थेतिवाक्यांशं विवृणोति—**परमिति** । अर्थप्राप्त्यर्थमनर्थनिवृत्त्यर्थं वा कर्म स्यान्नोभयमपीति वक्तुं विशेषणद्वयं दोषपदेन रागद्वेषाभावेनापि प्रवृत्त्यभावं सूचयति । प्रागनुष्ठितकर्मणाऽप्यसंबन्धे कर्तव्येन संबन्धो दूरापास्त इति वक्तुं कृतेनेत्युक्तम् । द्वितीयं शङ्कते—**फलादर्शनेऽपीति** । ममेदं कार्यमिति बोद्धा हि नियोगस्य विषयो नियोज्यः कार्ये स्वकीयत्वज्ञान च तज्जन्यफलार्थिनो न चाऽऽत्मनोऽसङ्गित्वज्ञानिनो ममेदमिति बुद्धिर्भवति । अतो न तस्य नियुक्तत्वमित्याह—**न नियोगेति** । तदेवोपपादयति—**इष्टेति** । ममेदं कार्यमितिबोधाभावेऽपि चेन्नियुज्येत तर्हि राजसूयादिकं ब्राह्मणादिना कर्तव्यं स्यादग्निष्टोमादिकं च सर्वदा कर्तव्यं स्यान्निर्निमित्तत्वाविशेषादित्याह—**ब्रह्मात्मत्वेति** । **न कश्चिन्न नियुक्त इति** । नञ्द्वयेन सर्वोऽपि नियुक्त एवेत्यर्थः । किंच नियोक्ताऽप्यस्य किं यः कश्चन पुरुषो वेदो वा । आद्ये विदुष ईश्वरात्मत्वज्ञानात्सर्वनियोक्तृत्वेन स्वनियोज्येनान्ये-

---

१ ख. च. °ज्ञाते कृ° । २ क. °रीतो नि° । ३ ख. ङ. छ. °त्मद° । ४ ज. °पि न क. । ५ ख. ग. घ. °श्चिदनि° । ६ ग. सर्वक° । ७ क. ग. घ. °जेद्व्युत्था° । ८ ख. इतिश्रु° । ९ ख. °निष्ठैव वि° । १० °षेधार्थेऽध्याहा° । ११ क. ख. °ङ्गोक्थाद्या° । १२ क. ग. घ. °ष्ठितेन क° ।

नास्य नियोज्यत्वं स्यात्तच्च विरोधान्न संभवतीत्याह—न च स इति। तस्यैव सर्वनियोक्तृत्वादित्यर्थः।

आम्नायस्यापि तत्प्रभवत्वान्न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते। नापि बहुवित्स्वाम्यविवेकि[1]ना भृत्येन। आम्नायस्य नित्यत्वे सति स्वातन्त्र्यात्सर्वान्प्रति नियोक्तृत्वसामर्थ्यमिति चेत्। न। उक्तदोषात्। तथाऽपि सर्वेण सर्वदा[2] सर्वमविशिष्टं कर्म कर्तव्यमित्यु[3]क्तो दोषो[4]ऽप्यपरिहार्य एव। तदपि शास्त्रे[5]णैव विधीयत इति चेत्। यथा कर्मकर्तव्यता शास्त्रेण कृता तथा तदप्यात्मज्ञानं तस्यैव कर्मिणः शास्त्रे[6]ण विधीयत इति चेन्न[7]। विरुद्धार्थबो[8]धकत्वानुपपत्तेः। न ह्येकस्मिन्कृताकृ[10]तासंबन्धित्वं तद्विपरीतत्वं च बोधयितुं शक्यम्। शीतो[11]ष्णतामिवाग्नेः।

नन्वन्य[12]स्य नियोज्यत्वाभावेऽप्याम्नायेन विद्वान्नियोज्यः स्यादिति द्वितीयमाशङ्क्य तस्याऽऽम्नायस्येश्वरतामापन्नस्य [13]स्वविज्ञानपूर्वकत्वात्स्ववचनेन स्वस्य नियोज्यत्वमेकत्र [14]कर्मकर्तृत्वविरोधान्न संभवतीत्याह—आम्नायस्यापीति। किंच व्याकरणादेस्तत्कर्तृपाणिन्यादिज्ञैयैकदेशार्थविषयत्वद[15]र्शनेन वेदस्यापीश्वरजन्यस्येश्वरज्ञेयैकदेशविषयत्वेनाल्पज्ञत्वादप्यधिकज्ञेश्वरनियोक्तृत्वमयुक्तमित्याह—नापि बहुविदिति। अविवेकिनेत्यल्पज्ञेनेत्यर्थः। अचेतनत्वाद्वा तस्याविवेकित्वं भृत्येन न नियुज्यत इत्यनुषङ्गः। ननु वेदस्येश्वरज्ञानपूर्वकत्वपक्षे पूर्वोक्तदोषानुषङ्गेऽपि तस्य नित्यत्वपक्षे नायं दोष इति शङ्कते—आम्नायस्येति। तस्याचेतनस्य नियोक्तृत्वं न संभवति तस्य चेतनधर्मत्वादित्युत्तरमाह—नेति। नियोक्तृत्वमभ्युपेत्यापि दोषमाह—उक्तदोषादिति। तदेव विवृणोति—तथाऽपीति। अनियोज्यस्यापि चेत्कर्तव्यं विदुषस्तर्हि[16] सर्वं शिष्टं विहितं[17] सर्वेणापि[18] कर्तव्यं संकोचे हेत्वभावादित्यर्थः। असङ्गिब्रह्मात्मत्वज्ञानस्य कर्मकर्तव्यतायाश्च शास्त्रेण कृतत्वादुभयोरपि शास्त्रयोः प्रामाण्याविशेषात्कदाचिदात्मज्ञानं कदाचित्कर्मानुष्ठानं च स्यादिति शङ्कते—तदपीति। तदेव विवृणोति—यथेति। स्वाभाविकाकर्त्रात्मबोधेन सकृदुत्पन्नेनैव कर्तृताबोधबाधनान्न पुनः शास्त्रेण कर्तृत्वबोधः संभवतीत्याह[19]—नेति। कृताकृतेत्यत्र कृतमिदानीमकृतं[20]मितः परं कर्तव्यं यत्तदुच्यते।

---

१ च. °किमृ°। २ ख. च. छ. °दाऽपि°। ३ क. छ. ज. °त्युक्तदो°। ४ ख. च. छ. ज. °षोऽप°। ५ ख. °स्त्रेणेति। छ. °स्त्रेणैवेति। ६ च. छ. ज. °स्त्रेणैव वि°। ७ क. चेत्तन्न। ८ च. छ. °बोधानु°। ९ च. छ. ज. °कस्य कृता°। १० क. ख. ग. च. छ. ज. °कृतसं°। ११ च. छ. ज. °ष्णत्वमि°। १२ क. ग. घ. °न्यनि°। १३ ख. स्वज्ञा°। १४ ख. कर्तृकर्मवि°। १५ क. °र्शनवद्वेद°। १६ ख. °र्हिविशि°। १७ ख. °तं कर्म स°। १८ ख. °र्वेण सर्वदाऽपि। १९ क. °ह। तन्नेति। २० क. °तमतः।

**न चेष्टयोगचिकीर्षाऽऽत्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता सर्वप्राणिनां तद्दर्शनाच्छास्त्रकृतं चेत्तदुभयं गोपालादीनां न दृश्येताशास्त्रज्ञत्वात्तेषाम् । यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यम् । तच्चेत्कृतैकर्तव्यताविरोध्यात्मज्ञानं शास्त्रेण कृतं कथं तद्विरुद्धां कर्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इवं च भानौ ।**

एवं तावन्नियोगाविषयाकर्त्रात्मदर्शित्वाद्विदुषः प्रयोजनार्थित्वाभावाच्च विदुषो न कर्मेत्युक्तम् । इदानीं स्वत इष्टानिष्टसंयोगवियोगरूपप्रयोजनार्थिताभावेऽपि विदुषः स्वर्गकामो यजेतेतिशास्त्रेणैव साऽप्याधीयत इत्याशङ्क्य स्वभावतःप्राप्तप्रयोजनार्थितानुवादेन तदुपायमात्रं शास्त्रेण बोध्यते न तु साऽप्याधीयते । अन्यथाऽशास्त्रज्ञानां तदर्थिता न स्यादित्याह—न चेष्टेति । अत्र चिकीर्षाशब्देन फलेच्छामात्रमुच्यते न तु कर्तुमिच्छा फले तदयोगादिति । ननु कृताकृतासंबन्धित्वं तद्विपरीतत्वं च विरुद्धत्वान्न बोधयति चेच्छास्त्रं तर्हि कृताकृतासंबन्धित्वमेव मा बोधीत्याशङ्क्य[15] तस्य मानान्तरासिद्धत्वेनावश्यं शास्त्रबोध्यत्वे वक्तव्ये तद्विपरीतत्वस्य मानान्तरसिद्धस्यैव न शास्त्रबोध्यत्वं विरुद्धत्वादित्याह—यद्धीति[16] । चेदिति निश्चयार्थे । कृतेति । इदं कृतमिदं कर्तव्यमितिज्ञानविरोधीत्यर्थः । कर्तव्यतां तज्ज्ञानमित्यर्थः ।

**न बोधयत्येवेति चेत् । न । स म आत्मेति विद्यात्प्रज्ञानं ब्रह्मेति[18] चोपसंहारात् । तदात्मानमेवावेत्तत्त्वमसीत्येवमादिवाक्यानां तत्परत्वात् । उत्पन्नस्य[19] च ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्नं भ्रान्तं वेति शक्यं वक्तुम् ।**

विध्यभावेन वेदान्तानां न तादृगात्मबोधकत्वमित्याशङ्क्य पुरुषस्य कर्तव्याभिमुखीकरणार्थत्वाद्विधेरिहाऽऽत्मज्ञानाभिमुखीकरणार्थं विधिस्वरूपस्यार्थवादस्य सत्त्वात्स्वरूपबोधकस्य तत्परवाक्यस्यापि सत्त्वाच्च नैवमित्युत्तरमाह—**न बोधयत्येवेत्यादिना** । उपसंहारादित्यनेन तत्सहचरितमात्मा[20] वा इदमित्याद्युपक्रमादितात्पर्यलिङ्गं सूचयति । ज्ञानोत्पत्त्यनुवादिकाण्वश्रुतिबलादप्यनुत्पत्तिशङ्का न कार्येत्याह—**तदात्मानमिति** । तदिति जीवरूपेणावस्थितं ब्रह्मेत्यर्थः । छान्दोग्यबलादप्येवमेवेति वदन्नातिसामान्यन्यायं दर्शयति—**तत्त्वमसीति** । अनेन तद्धास्य विजज्ञाविति वाक्यशेषोऽप्युपलक्ष्यते ।

---

१ ज. चेदु° । २ ग. °त्कृतं क° । ३ क. ग. घ. ङ. °तकर्मक° । ४ ख. °रुद्धक° । ५ ख. °व भा° । ६ ख. °च्च न । ७ क. ख. घ. ङ. °ष्टयो° । ८ क. °र्थित्वाभा° । ९ ङ. °वे वि° । १० ङ. °र्थित्वानु° । ११ क. ग. न क° । १२ घ. ङ. तु कर्म क° । १३ घ. °कृतसं° । १४ घ. °कृतसं । १५ ख. °धीदित्या° । १६ ख. °ति । तच्चेदि° । १७ ख. °यार्थम् । कृ° । १८ क. ग. घ. ङ. °ह्मेत्युप° । १९ ख. °स्य म° । २० क. °रितात्मा° ।

अयमात्मा ब्रह्मेत्यादिरादिशब्दार्थः। कर्त्रात्मबोधककर्मकाण्डविरोधादुत्पन्नमपि ज्ञानं भ्रान्तमित्याशङ्क्य तस्य यथाप्राप्तकर्त्रात्मानुवादेनोपायमात्रपरत्वान्न वस्तुपरवेदान्तजन्यज्ञानबाधकत्वमित्याह—**उत्पन्नस्येति**। **नानुत्पन्नमिति**। वाक्यश्रवणानन्तरमकर्ताऽऽत्माऽहमितिज्ञानस्यानुभवसिद्धत्वान्नाहमकर्तेति विपरीतज्ञानादर्शनाच्च नोभयं वक्तुं शक्यमित्यर्थः।

**त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत् "नाकृतेनेह कश्चन" इतिस्मृतेः। य आहुर्विदित्वा ब्रह्म व्युत्थानमेव कुर्यादिति तेषामप्येष समानो दोषः प्रयोजनाभाव इति चेत्। न। अक्रियामात्रत्वाद्व्युत्थानस्य। अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्मः। सर्वप्राणिनां तद्द(द्द)र्शनात्। प्रयोजनतृष्णया च प्रेर्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात्। "सोऽकामयत जाया मे स्यात्" इत्यादिना पुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति "उभे ह्येते साध्यसाधनलक्षणे एषणे एव" इति वाजसनेयिब्राह्मणेऽवधारणात्।**

विदुषः प्रयोजनाभावान्न कर्मणि प्रवृत्तिरित्युक्तं तर्हि तत्त्यागेऽपि प्रयोजनाभावात्तत्रापि न प्रवृत्तिः स्यादिति शङ्कते—**त्यागेऽपीति**। तस्य विदुषः कृतेन कर्मणाऽर्थो नास्ति अकृतेन कर्माभावेनापीह लोके नार्थोऽस्तीति गीतासु स्मरणात् त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेदित्यन्वयः। शङ्कामेव विवृणोति—**य आहुरिति**। कर्मत्यागस्य व्यापारात्मकत्वे व्यापारस्य क्लेशात्मकत्वात्तदनुष्ठानं प्रयोजनापेक्षं स्यात्। न त्वेतदस्ति किंतु क्रियाभावमात्रमौदासीन्यरूपम्। तस्य च स्वार्थस्वरूपत्वात्स्वत एव प्रयोजनत्वान्न प्रयोजनान्तरापेक्षत्वमिति परिहरति—**नेति**। त्यागस्यान्यत्र क्लृप्तव्यापारहेतुजन्यत्वाभावान्न व्यापारत्वमिति वक्तुमन्यत्र क्लृप्तव्यापारहेतुमाह—**अविद्येत्यादिना**। यद्वा विदुषः कथं यत्नं विना व्युत्थानमौदासीन्यमात्रेण सिध्यतीत्याशङ्क्य क्रियाहेत्वभावात्क्रियाभाव इति वक्तुं तद्धेतुमाह—**अविद्येत्यादिना**। **प्रयोजनस्य भाव इति**। प्रयोजनस्य तृष्णेत्यर्थः। तस्या वस्तुधर्मत्वे विदुषोऽपि तृष्णा स्यादिति तन्निषेधति—**न वस्तुधर्म इति**। न वस्तुस्वभाव इत्यर्थः। वस्तुधर्मत्वे हि विदुषामविदुषां च सुप्तमूर्छितादीनां सा स्यान्न त्वेतदस्ति। तत्र हेतुमाह—**सर्वेति**। तद्दर्शनादिति पाठे वस्तुस्वभावाज्ञानिनां गोपालादीनामपि तृष्णादर्शनान्न वस्तुधर्म इति कथंचिद्योज्यम्। तृष्णाया अविद्याजन्यत्वमुक्त्वा तस्या व्यापारहेतुत्वमाह—**प्रयोजनेति**। दर्शनादिति पञ्चम्यविद्याकामदोषानिमि-

१ ख. °दिश°। २ ख. °कर्त्रात्मा°। ३ च. °दिना पु°। ४ ख. °जनतृष्णाभा°। ५ ख. घ. °लक्ष त°। ६ ख. °पेक्षितं स्या°। ७ ख. °स्थ्यरू°। ८ क. ग. घ. ङ. °त्वे वि°।

त्तायां इत्युत्तरत्र हेतुत्वेन संबध्यते । न केवलं दर्शनमेव किंतु श्रुतिरप्यस्तीत्याह—सोऽकामयतेति । सोऽकामयतेत्यादिनोभे ह्येते एषणे एवेति वाक्येन च पुत्रवित्तादि काम्यमेवेति वाजसनेयिब्राह्मणेऽवधारणादित्यन्वयः । पाङ्क्तलक्षणमिति । जायापुत्रदैवमानुषवित्तद्वयकर्मभिः पञ्चभिर्योगात्पाङ्क्तलक्षणं कर्मेत्यर्थः । उभे इत्यस्यार्थमाह—साध्यसाधनेति ।

**अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्तलक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तेः क्रियाभावमात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्मकं तच्च विद्यावत्पुरुषधर्म इति न प्रयोजनमन्वेष्टव्यम् । न हि तमसि प्रविष्टस्योदित आलोके यद्गर्तपङ्ककण्टकाद्यपतनं तत्किंप्रयोजनमिति प्रश्नार्हम् । व्युत्थानं तर्ह्यर्थप्राप्तत्वान्न चोदनार्हमिति । गार्हस्थ्ये* चेत्परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्वत आसनं न ततोऽन्यत्र गमनमिति चेत् । न । कामप्रयुक्तत्वाद्गार्हस्थ्यस्य । एतावान्वै काम इति । उभे ह्येते एषणे एवेत्यवधारणात् । कामनिमित्तपुत्रवित्तादिसंबन्धनियमाभावमात्रं न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते । ततो + न गार्हस्थ्य एवाकुर्वत आसनमुत्पन्नविद्यस्य । एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा ।**

एवं क्रियाहेतुं प्रदर्श्य तदभावादेव विदुषः क्रियाभावोऽयत्नसिद्ध इत्याह—अविद्याकामेति । पाङ्क्तलक्षणाया इति । जायापुत्रदैववित्तमानुषवित्तकर्मभिः पञ्चभिर्लक्ष्यते साध्यत इति वैदिकी प्रवृत्तिः पाङ्क्तलक्षणेत्युच्यते । पञ्चसंख्यायोगेन गौण्या वृत्त्या पङ्क्तिच्छन्दःसंबन्धोपचारात्पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ इति श्रुतेरित्यर्थः । पाङ्क्तलक्षणाया इत्यनन्तरमनुपपत्तेरित्यनुषङ्गः । व्युत्थानमित्यनन्तरमयत्नसिद्धमिति शेषः । एवं च क्रियाभावस्यौदासीन्यात्मकस्य पुरुषस्वभावस्वेनायत्नसिद्धत्वे सति न प्रयोजनापेक्षेत्याह—तच्चेति । पुरुषधर्म इति । पुरुषस्वभाव इत्यर्थः । अज्ञानकार्यस्याज्ञाननिवृत्तावयत्नत एव निवृत्तिरित्यत्र दृष्टान्तमाह—न हीति । व्युत्थानस्य पुंव्यापाराधीनत्वाभावे विधेरनवकाशाद्विदुषो

---

* क. संज्ञितपुस्तके बहिर्लिखितः—°स्थ्ये वासं कुर्वतः परब्रह्मविज्ञानं जातं चेत्तत्रैवाऽऽसनं न ततोऽन्य° । + क. संज्ञितपुस्तके बहिर्लिखितः—°तोऽकुर्वत उत्पन्नविद्यस्य गार्हस्थ्य आसनं नैव भवति । एतेन ।

---

१ क. ग. घ. ङ. छ. ज. °ह. । सोऽकामयतेत्या° । २ क. ख. ग. घ. ङ. च. छ. ज. °षानु° । ३ ग. ज. पत्तेरभावादक्रि° । च. °पत्तेरभावात्क्रिया° । ४ ज. °यामा° । ५ ख. च. छ. ज. °द्यावृत्तपुरु° । ६ च. छ. °र्तक° । ७ क. ख. °त्रैव वासं कु° । ८ च. छ. कामः । उ° । ९ च. °बन्धाभा° । १० ख. °मात्रमेव हि । ११ छ. °ते । ततो ।

नियमेन व्युत्थानं न सिध्यतीति शङ्कते—व्युथानं तर्हीति । ततोऽन्यत्र गमनमिति । पारिव्राज्यस्वीकार इत्यर्थः । किं गार्हस्थ्यशब्देन गृहस्थोऽहमित्यभिमानपुरःसरं पुत्रवित्ताद्यभिमान उच्यत उत गृहस्थलिङ्गधारणम् । नाऽऽद्यः । विद्ययाऽविद्याकार्याभिमानानिवृत्तेरित्याह—न कामेति । न द्वितीयः । लिङ्गेऽप्यभिमानराहित्यस्य तुल्यत्वात् । न चैवं पारिव्राज्यलिङ्गेऽप्यभिमानाभावात्तस्याप्यासिद्धिरिति वाच्यम् । सर्वतोऽप्यभिमानराहित्येन सर्वसंबन्धराहित्यलक्षणं हि परमहंसपरिव्राजो लक्षणं न लिङ्गधारणम् । "न लिङ्गं धर्मकारणम्" इति स्मृतेः । ततश्च लिङ्गेऽप्यभिमानशून्यस्य पारिव्राज्यं सिद्धमित्याह—कामनिमित्तेति । गार्हस्थ्य इति । अभिमानात्मक इत्यर्थः । तर्हि गुरुशुश्रूषादावप्यभिमानो न स्यादित्याशङ्क्येष्टापत्तिरित्याह—एतेनेति ।

अत्र केचिद्गृहस्था भिक्षाटनादिभयात्परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः । भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वासनमिति । न स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत् । स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषभावेऽर्थाद्भिक्षुकत्वमेव । शरीरधारणार्थायां भिक्षाटनादिषु प्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादिश्रुतिनियुक्तत्वात्प्रत्यवायपरिहारायेति । एतन्नियोगाविषयत्वेन विदुषः प्रयु(त्यु)क्तमशक्यनियोज्यत्वाच्चेति ।

नतु यथा पुत्रादिसंबन्धनियमरहितस्यापि त्वन्मते देहधारणार्थिनो भिक्षोः परिग्रहव्यावर्तनार्थो भिक्षाटनादि नैवेति नियमोऽङ्गी क्रियते तथा गृहस्थस्याप्यभिमानशून्यस्यैव सतो देहधारणार्थं गृह एवास्त्वासनं न भिक्षुकत्वमविशेषादिति शङ्कते—अत्र केचिद्गृहस्था इति । तेषां न न्यायो मूलं किंतु दृष्टभयादिकमेव मूलमित्युपहसन्नाह—भिक्षाटनादीति । परिभवः पामरैः क्रियमाणस्तिरस्कारः । सूक्ष्मेति । वाक्या व्यतिरेकेण स्थूलदृष्टय इत्यर्थः । भिक्षाटनादीत्यादिशब्देन प्राक्प्रणीतमयाचितमित्याद यो गृह्यन्ते ।

---

१ क. °तोऽभि° । २ ख. °हित्यं हि । ३ ज. °धनोभ° । ४ ख. °क्षुत्व° । ५ क. ग. घ. ङ. °र्थाय भि° । ६ छ. °दिप्र° । ७ ग. छ. क्षोः प्रवृत्तिः शौ° । ८ ग. घ. ङ. °दौ त° । ९ ख. छ. °रायेति । १० क. ख. ग. घ. ङ. °योगत्वा° । ११ ख. °दिरेवे । १२ क. ग. घ. ङ. चिदिति । १३ ग. °पसंहरन्ना° ।

आत्मा कः इति विचारार्थः । न चायमात्मेति निश्चये विचारायोगः । तस्यैव कार्यकरणसंकीर्णत्वेन विचारोपपत्तेरिति । ननु भूतानां व्याकरणार्थं यः प्रविष्टः स एवाऽऽत्मेतिनिर्धारणसंभवाद्विचारानुपपत्तिरित्याशङ्क्यैवमपि द्वयोः प्रविष्टत्वेन स्मर्यमाणत्वान्न निर्धारणमिति वक्तुं द्वयोः प्रविष्टत्वं स्मृतमित्याह—**एवं जिज्ञासेति । अतिक्रान्तेति ।** अतिक्रान्तौ पूर्वमुक्तौ यौ विशेषौ देहे प्रविष्टौ प्राणात्मानौ तद्विषया श्रुतिजन्यानुभवजन्यसंस्कारजनिता स्मृतिरित्यर्थः । तामेव स्मृतिं स्वरूपतो दर्शयति—**तं प्रपदाभ्यामिति ।** तमिमं पुरुषं शरीरं प्रपदाभ्यां पादाग्राभ्यां ब्रह्मापरंब्रह्मरूपः प्राणः प्रविष्ट इत्यर्थः । अन्यस्य प्रवेशे श्रुतिमाह—**स एतमिति ।** श्रुतिभ्यां लब्धमर्थमाह—**एतमेवेति ।** अत्रेति श्रुतिभ्यामित्यध्याहृत्येति श्रुतिभ्यामितरेतरप्रातिकूल्येनेतरेतराभिमुखतयैतमेव पुरुषशरीरं प्रतिपन्ने प्रविष्टे द्वे ब्रह्मणी इति स्मृतिरजायतेत्यन्वयः । न त्वेतमेवेत्यनेनैतमेव पुरुषं ब्रह्म ततममपश्यदिति वाक्यं द्वे ब्रह्मणी इत्यनेन द्वे ब्रह्मणी वेदितव्ये इति वाक्यं च द्वयोः प्रवेशे मानतयोपन्यस्तमिति भ्रमितव्यम् । आद्यवाक्ये द्वयोः प्रवेशाप्रतीतेः । द्वितीये च शब्दब्रह्मपरब्रह्मणोरभिधानेन तयोर्द्वयोः प्रवेशे मानत्वायोगादिति । तथाऽपि तयोर्द्वयोः कथमात्मत्वशङ्केत्यत आह—**ते चेति ।** तयोरन्यतरेण विना शरीरास्थित्यभावात्तयोरात्मत्वशङ्केत्यर्थः । एवं विचारापेक्षितामात्मद्वयस्मृतिमुक्त्वा विचारमाह—**तयोरन्यतर इति ।** आत्मा वा इदमेक एवेत्येकस्यैवं ज्ञेयत्वोपक्रमान्न द्वयोरुपास्यत्वमित्यर्थः । **कः स आत्मेति ।** यं उपास्य आत्मा स क इत्यन्वयः । **पप्रच्छुरिति ।** कतरः स आत्मेति वाक्येनेति शेषः ।

**येन वा पश्यति येन वा शृणोति येन वा**
**गन्धानाजिघ्रति येन वा वाचं व्याकरोति**
**येन वा स्वादु चास्वादु च विजानाति ।**

**पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत् । कथं, द्वे वस्तुनी अस्मिन्पिण्ड उपलभ्येते अनेकभेदभिन्नेन करणेन येनोपलभते यश्चैक उपलभते करणान्तरोपलब्धविषयस्मृतिप्रतिसंधानात् । तत्र न तावद्येनोपलभते स आत्मा भवितुमर्हति । केन पुनरुपलभत इति ।**

---

१ ङ. °यंकार° । २ ग. घ. ङ. देहं । ३ क. °तो निर्दिशति । ४ ग. ङ. °ररू° । ५ ग. घ. ङ. °रूपप्रा° । ६ क. ग. घ. ङ. प्रतिपत्तेः । द्वि° । ७ ग. घ. ङ. °ने त° । ८ ख. ट. °ह । इतीति । ९ ख. ट. °रेणापि वि° । १० क. ग. घ. °व मेय° । ११ ट. वा रूपं प° । १२ ट. वा शब्दं शृ° । १३ ग. विषयानिच्छया १४ घ. ङ. °विषयानिच्छतां तद्विष° । १५ ग. घ. ङ. ज. °तिसं° ।

**उच्यते । येन वा चक्षुर्भूतेन रूपं पश्यति येन वा शृणोति श्रोत्रभूतेन शब्दं येन वा घ्राणभूतेन गन्धानाजिघ्रति येन वा वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च । येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति ।**

एवं विचारे क्रियमाणेऽतिपरिशुद्धान्तःकरणत्वात्तेषां प्रपदाभ्यां प्रपन्ने करणत्वेनानात्मत्वनिश्चयो मूर्ध्ना प्रविष्ट उपलब्धृत्वेनाऽऽत्मत्वनिश्चयश्चाभूदित्याह—**पुनरित्यादिना । विशेषेति ।** विचारणास्पदप्राणात्मद्वयविषयैकस्मिन्करणत्वेनापरस्मिन्नुपलब्धृत्वेन प्रकारेण विशेषरूपा मतिरजायतेत्यर्थः । ननु द्वयोः सत्त्व इयं विशेषमतिः स्यात्तदेव नास्तीति शङ्कते—**कथमिति ।** चक्षुषा पश्यामीत्यादिप्रकारेण द्वयोः प्रतीतेर्नैवमित्याह—**द्वे इति ।** येनोपलभते यश्चोपलभते ते द्वे उपलब्धिकर्तृकरणे वस्तुनी उपलभ्येते इत्यन्वयः । तत्र किं करणमित्यत आह—**अनेकेति ।** चक्षुःश्रोत्राद्यनेकभेदभिन्नेनेत्यर्थः । अनेन यदनेकात्मकचक्षुरादिकरणसंघातात्मकं प्राणस्वरूपं तत्संहतत्वात्परार्थमिति परशेषत्वेन करणमित्युक्तम् । उपलब्धरि त्वनेकात्मकस्वाभावान्न परार्थत्वेन शेषत्वम् । किंतु शेषित्वमेवेति वक्तुमेक एवेत्युक्तम् । अनेन करणस्य परार्थत्वं परं शेषिणमन्तराऽनुपपन्नं सत्परं व्यतिरिक्तमुपलब्धारं गमयतीति तस्मिन्नपि तत्प्रमाणमित्युक्तम् । इदानीं करणानामेवोपलब्धृत्वं तद्व्यतिरिक्तोपलब्धा नास्तीति वदन्तं नास्तिकं प्रति प्रमाणान्तरमाह—**करणान्तरेति ।** पूर्वं चक्षुषा रूपं दृष्ट्वा पश्चादुद्धृतचक्षुः स्मरति रूपमद्राक्षमिति । तथा योऽहमद्राक्षं स एवेदानीं स्पृशामीति प्रतिसंदधाति । तदुभयं व्यतिरिक्तोपलब्धुरभावे न स्यात् । अन्यानुभूतेऽन्यस्य स्मृतिसंधानयोरदर्शनादित्यर्थः । एवमनेकात्मकस्य करणत्वमुक्त्वा तत एव तस्याऽऽत्मत्वं नास्तीत्याह—**तत्र न तावदिति ।** तयोर्मध्य इत्यर्थः । अर्हतीत्यनन्तरं किंतु परिशेषादुपलब्धाऽऽत्मा भवितुमर्हतीति वक्ष्यमाणान्वयेन वाक्यं पूरणीयम् । एवमर्थमुपवर्ण्य तमर्थं श्रुत्यक्षरारूढं कर्तुं पृच्छति—**केन पुनरिति ।** श्रुत्यारूढं करोति—**उच्यत इति । येनेति ।** तृतीयया करणत्वं चक्षुरादेरुक्तमित्यर्थः । **वाक्करणेति ।** वाग्रूपकरणेनेत्यर्थः । वाचमिति करणं नोच्यते तस्य येनेत्यनेनोक्तत्वात्किंतु वक्तव्यमुच्यत इत्याह—**नामात्मिकामिति । साध्विति ।** गौरितीदं नाम साधु गावीति नामासाध्विति व्याकरोति व्याकरणेन व्यक्ती करोतीति चार्थः ।

---

१ ज. °श्चेत्ये° । २ ग. ङ. °लब्धत्वे° । ३ ग. °लब्धत्वे° । ४ क. ग. घ. ङ. ननूभयं । ५ क. द्वे वस्तुनी इ° । ६ क. ग. घ. ङ. °त्मकं च° । ७ क. ग. ङ. °दिसं° । ८ क. °णरू° । ९ ख. ट. °क इत्यु° । १० क. परशे° । ११ ख. ट. °रिक्त उप° । १२ क. ग. ङ. ङ. एव स्पृ° । १३ क. ग. °ह । न । १४ क. ग. तत्रेति तयो° । घ. तत्र तयो° । १५ ख. °व्यमित्या° । ट. °व्यमित्यत आह ।

किं पुनस्तदे[1]वैकमनेकधा भिन्नं करणमिति, उच्यते—

यदेतद्धृदयं मनश्चैतत् ।

यदुक्तं पुरस्तात्प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमास्तदेवैतद्धृदयं मनश्चैकमेतदने-कधा । एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्रभूतेन शृणोति घ्राणभूतेन जिघ्रति वाग्भूतेन वदति जिह्वाभूतेन रसयति स्वेनैव विक-ल्पनारूपेण मनसा विकल्पयति हृदयरूपेणाध्यवस्यति । तस्मात्सर्वक-रणविषयव्यापारकमेकमिदं करणं सर्वोपलब्ध्यर्थमुपलब्धुः । तथा च कौषीतकिनां—“ प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति ” इत्यादि । वाजसनेयके च–“ मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि जानाति ” इत्यादि । तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिक-रणत्वं प्रसिद्धम् । तदात्मकश्च प्राणो यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण इति ब्राह्मणम् । करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसं-वादादौ । तस्माद्यत्पदभ्यां प्रापद्यत तद्ब्रह्म तदुपलब्धुरुपलब्धिकरणत्वेन गुणभूतत्वान्नैव तद्वस्तु ब्रह्मोपास्यात्मा भवितुमर्हति । पारिशेष्याद्यस्यो-पलब्धुरुपलब्ध्यर्था एतस्य हृदयस्य मनोरूपस्य करणस्य वृत्तयो वक्ष्य-माणाः स उपलब्धोपास्य आत्मा नोऽस्माकं भवितुमर्हतीति निश्चयं कृतवन्तः ।

ननु चक्षुरादीनां करणत्वेऽपि प्रपदाभ्यां प्रविष्टस्य प्राणस्य करणत्वे किमायातमित्या-शङ्क्ते—किं पुनस्तदिति । तत्र प्राणस्यैव करणत्वं वक्तुं तावद्धृदयमनःशब्दवाच्यस्य चक्षुरादिभेदभिन्नत्वमाह—उच्यत इति । यदेतद्धृदयमित्यत्र यच्छब्दार्थमाह—यदु-क्तमिति । रेत इति । सारभूतं कार्यमित्यर्थः । प्रजानां रेतो हृदयमित्यादिषु मनसश्च-न्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति तदेवैतत्त्वया पृष्टं करणमित्यर्थः । तदेवैक-मेव सच्चक्षुरादिभेदेनानेकधाभूतमिति श्रुतिगतद्वितीयैतच्छब्दार्थमाह–एकमेतदनेकधेति । अत्र येन चक्षुरादिना दर्शनादिक्रियां करोति संघातात्मकः पुरुषः, तच्चक्षुरादिकं प्रजानां

१ ज. 'देक' । २ क. 'श्चैतदेकमने' । ३ ख. 'तत्तद' । ४ ज. 'सा संक' । ५ ग. घ. च. 'कमि' । ६ च. ज. 'ति हि ब्रा' । ७ ङ. 'द्यत्प्रपदाभ्यां । ८ ख. ट. 'त ब्रह्मैतदु' । ङ. च. ज. 'तब्रह्म' । ९ ग. ज. ट. 'लब्धि' । १० ख. ट. 'न्नैत' । ११ च. 'व वस्तु । ज. 'व ब्र' । १२ ज. ट. 'ति । परिशेषाद्य' । च. 'ति । तस्मात्परिशेषाद्य' । १३ घ. ङ. ट. 'ब्ध्यर्थमेत' । १४ ख. ङ. ट. 'यम' । १५ ख. ग. च. ज. ट. नो भ' । १६ क. ग. घ. ङ. 'मिति श' । १७ ख. ट. 'र्थः । एत' । १८ क. एतदेकमने' । १९ ग. 'तत्तद' ।

रेतो हृदयमित्यादिषु[१] मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति करणं तदेतत्[२]त्वया पृष्टमेतदेवैकं सदनेकधा भिन्नं चेति श्रुतिगतयेनेतितृतीयान्तयदितिप्रथमान्तयच्छब्दद्वयस्यैतदितिप्रथमान्तैतच्छब्दद्वयस्य चान्वयो दर्शितः। एकस्यैवानेकात्मकत्वं विशदयति—**एतेनेत्यादिना । सर्वकरणेति ।** सर्वाणि करणानि विषयाश्च व्यापारो यस्येति विग्रहः । करणानां विषयाणां च हृदयशब्दवाच्यबुद्धिव्यापारैकत्वे श्रुतिमाह—**तथा चेति ।** प्रज्ञया चिदाभासयुक्तया बुद्ध्या वाचं करणं समारुह्य बुद्धेर्वागात्मना परिणामे सति तद्बुद्धिद्वारा स्वयमप्यात्मा वागभिमानी भूत्वाऽनन्तरं वाचोऽपि बुद्धिव्यापाररूपाया नामात्मना वक्तव्यशब्दरूपेण परिणामे सति वाचा वाग्द्वारा सर्वाणि नामान्याप्नोति । तत्स्फुरणात्मना स्वयमपि वर्तत इति श्रुत्यर्थः । एवं प्रज्ञया चक्षुरित्यादिष्वप्यर्थो द्रष्टव्यः । अत्र बुद्धेर्वागाद्यात्मना परिणामो वागादेश्च नामात्मना परिणाम उक्त इत्यर्थः । मनसा ह्येव पश्यतीत्यत्र मनसः साक्षाद्दर्शनादिकरणत्वायोगाच्चक्षुरादिभावमापन्नस्य दर्शनादिकरणत्वमुक्तमिति भावः । एवं हृदयेन हीत्यत्रापि द्रष्टव्यम् । आदिशब्देन हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति रूपाणां हृदयशब्दितबुद्ध्यात्मकत्वमुक्तं संग्राह्यम् । एवं हृदयस्य सर्वकरणात्मत्वमुक्त्वेदानीं तस्य प्राणात्मत्वमाह—**तदात्मकश्चेति ।** एवं हृदयमनोद्वारा प्राणस्य सर्वकरणात्मकत्वमुक्त्वा[१०] साक्षादेव प्राणस्य तदाह—**करणसंहतीति ।** तव वयं स्मो न शक्ष्यामस्त्वदृते[११] जीवितुम् । इतरे चक्षुरादयः प्राणा इत्येवाऽऽख्यायन्त इत्यादिप्राणसंवादस्थवचनबलात्करणसंहतिरूपत्वं करणसमूहरूपत्वं प्राणस्यावगतमित्यर्थः । आदिशब्देन संवर्गविद्यादिगतं प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रतिबुध्यते प्राणादधि पुनर्जायत इत्यादिवाक्यं ग्राह्यम् । करणस्यानात्मत्वमुक्तमुपसंहरति—**तस्मादिति । ब्रह्मेति ।** ब्रह्मत्वेनोपास्यो ज्ञातव्य आत्मेत्यर्थः । तर्हि कस्तथा ज्ञातव्य इत्यत आह[१४]—**पारिशेष्यादिति । वक्ष्यमाणा इति ।** संज्ञानमित्यादिना वक्ष्यमाणा इत्यर्थः ।

**तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयास्ता इमा उच्यन्ते—**

**संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा**
**दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः**

---

१ क. ग. घ. °षु श्रु° । २ ङ. °रणमेतत्त्व° । ३ ख. ट. °तदे° । ४ ख. ङ. °येन वेति° । ५ क. ग. घ. ङ. °रत्वे । ६ ख. °मायात्म° । ७ ख. °त्वमि° । ८ क. ट. प्रथिता° । ९ ङ. °त्मकत्व° । १० ङ. °वैकार° । ११ क. ग. घ. ङ. °मस्त्वामृते । १२ ख. ट. °गम्यत इत्य° । १३ ख. ट. °त्याद्युच्यते । १४ ख. ग. भ. ट. °ह । परिशेषादि° । १५ घ. ज. °णस्य वृ° ।

संकल्पः क्रतुरसुः कामो वश इति ।

**संज्ञानं संज्ञप्तिश्चेतनभावः आज्ञानमाज्ञप्तिरीश्वरभावः । विज्ञानं कलादिपरिज्ञानम् । प्रज्ञानं प्रज्ञप्तिः[1] प्रज्ञता । मेधा ग्रन्थधारण[2]सामर्थ्यम् । दृष्टिरिन्द्रियद्वारा सर्वविषयोपलब्धिः । धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां यथोत्तम्भनं भवति । धृत्या शरीरमुद्वहन्तीति[3] हि वदन्ति । मतिर्मननम् । मनीषा तत्र स्वातन्त्र्यम् । जूतिश्चेतसो रुजादिदुःखित्वभावः । स्मृतिः स्मरणम् । संकल्पः शुक्लकृष्णादिभावेन संकल्पनं रूपादीनाम् । क्रतुरध्यवसायः । असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामोऽसंनिहितविषयाकाङ्क्षा तृष्णा । वशः स्त्रीव्यतिकराद्यभिलाषः । इत्येवमाद्या अन्तःकरण[4]वृत्तयः प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि[5] भवन्ति संज्ञानादीनि ।**

येन वा पश्यतीत्यादि मनश्चैतदित्यन्तं प्राणस्य करणत्वेनानात्मत्वार्थमित्युक्त्वा संज्ञानमित्यादि वश इत्यन्तमन्तःकरणवृत्तिद्वारा तद्व्यतिरिक्तमुपलब्धारं दर्शयितुं[6]माह—**तदन्तःकरणेति** । निर्विशेषस्य कथं वृत्तिविषयत्वमन्यथा कथं तदुपलब्ध्यर्थता तासां स्यादत आह—**बाह्यान्तर्वर्ति[7]विषयेति** । तर्हि तासामन्यविषयत्वे ततो बाह्यान्त[8]र्विषयप्रतीतिरेव स्यान्नाऽऽत्मन इत्यत आह—**उपलब्ध्यर्था इति** । निर्विशेषत्वेनाविषयत्वेन[9][10] चैतस्य साक्षादिदंतया ज्ञानासंभवेऽपि संज्ञानाद्यन्तःकरणवृत्तिसाक्षितयाऽविषयत्वेनैव तस्योपलब्धिः संभवतीत्यर्थः । अविषयत्वार्थं प्रज्ञानरूपस्येति विशेषणम् । प्रकृष्टा ज्ञप्तिः स्वप्रकाशचैतन्यं तस्य विषयत्वे स्वप्रकाशत्वव्याहतिरित्यर्थः । ब्रह्मण इति विशेषणं निर्विशेषत्वार्थम् । सविशेषत्वे हि तस्य परिच्छेदेन ब्रह्मत्वं न स्यादित्यर्थः । नन्वसङ्गस्य कथमन्तःकरणवृत्तिसंबन्धः स्यादत आह—**अन्तःकरणो[11]पाधिस्थस्येति** । असङ्गस्याप्यन्तःकरणप्रतिबिम्बद्वारा[12] तद्वृत्तिसंबन्ध इत्यर्थः । **चेतनभाव इति** । यया वृत्त्या चेतन इत्युच्यते जन्तुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनी संज्ञानमित्यर्थः । कलादिपरिज्ञानं चतुःषष्टिकलादिजन्यं लौकिकं[13] ज्ञानमित्यर्थः[14] । **प्रज्ञतेति** । तात्कालिकप्रतिभेत्यर्थः । यथोत्तम्भनं भवति सा वृत्ति[15]धृतिरित्यन्वयः । शरीराद्युत्तम्भकस्य वृत्तिविशेषस्य धृतित्वे लौकिकं व्यवहारं मानमाह—

---

१ घ. ङ. च. ज. °प्तिः प्राज्ञ° । २ ख. च. ट. °रणे सा° । ३ क. ग. घ. ङ. °ति व° । ४ क. छ. °णस्य वृ° । ५ क. ख. ङ. °नि सं° । ६ ख. ट. °तुमित्याह । ७ क. ग. घ. ङ. °वर्तीति । ८ क. ग. घ. ङ. °न्तरविष° । ९ ग. °विषयत्वे° । १० ङ. °न च त° । ११ ख. °रणेति । १२ क. ग. घ. ङ. °रा वृत्ति° । १३ क. ग. ङ. °कं विज्ञा° । १४ ग. घ. ङ. °र्थः । प्राज्ञ° । १५ ख. ट. सा धृति° ।

**धृत्येति** । **तत्र स्वातन्त्र्यमिति** । मनस ईषा मनीषेति व्युत्पत्तेरित्यर्थः । **रुजादिदुःखित्वभाव इति** । रोगादिजन्यदुःखित्वप्राप्तिरित्यर्थः । **संकल्पमिति** । सामान्येन प्रतिपन्नानां रूपादीनां शुक्लादिरूपेण सम्यक्कल्पनमित्यर्थः । **जीवनक्रियेति** । जीवनप्रयत्न इत्यर्थः । **स्त्रीव्यतिकरेति** । स्त्रीसंपर्क[1] इत्यर्थः । इतिशब्दस्य प्रदर्शनार्थत्वमाह—**इत्येवमाद्या इति** । एवमाद्या वृत्तयः प्रज्ञानस्य नामधेयानि भवन्तीत्युत्तरेणान्वयः । अत्र प्रज्ञानशब्देन पूर्ववत्[2]प्रज्ञता[3] वृत्तिरूपा[4] नोच्यते[5] तस्याः संज्ञानादिनामवत्त्वानुपपत्तेः[6], किंतु शुद्धं[7]चैतन्यमुच्यत इत्याह—**प्रज्ञप्तिमात्रस्येति** । नन्वन्तःकरणवृत्तीनां शब्दरूपत्वाभावात्कथं प्रज्ञाननामधेयत्वमित्याशङ्क्य नामधेयस्य नामार्थो[8]पलब्धिहेतुत्वात्संज्ञानादिवृत्तीनामपि प्रज्ञानोपलब्धिहेतुत्वात्तेन गुणेन तन्नामधेयत्वमुपचाराद्रुच्यते न मुख्यया[9] वृत्त्येत्याह—**उपलब्धुरुपलब्ध्यर्थत्वादिति** । उपलब्धु[10]रुपलब्ध्यर्थत्वं वा कथमित्याशङ्क्य तदुपाधित्वादित्याह—**शुद्धेति** । यत उपाधिभूता[11] उपलब्ध्यर्था अतो गौण्या वृत्त्या नामधेयानि भवन्तीत्यर्थः । यद्वा श्रुतौ संज्ञानादिशब्दैर्न वृत्तय उच्यन्ते किंतु संज्ञानादिशब्दा एव लक्षणयाऽभिधीयन्ते गामुच्चारयतीत्यत्रेव । तथा च संज्ञानादिशब्दाः संज्ञानादिवृत्तिविशिष्टप्रज्ञानस्य नामधेयानि[12] सन्ति, तद्द्वारा शुद्धस्यैव[13] प्रज्ञानस्य लक्षणया नामधेयानीत्याह—**तदुपाधिजनितेति** । वृत्त्युपाधिजनितो गुणो वृत्त्युपहित[14]रूपं तन्नामधेयानि सन्ति सर्वाण्येवैतानि संज्ञानादीनि संज्ञानादिशब्दाः प्रज्ञानस्यैव नामधेयानि भवन्तीत्यन्वयः ।

### सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।

**सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य[15] नामधेयानि भवन्ति न स्वतः साक्षात् । तथा चोक्तं प्राणन्नेव प्राणो नाम भवतीत्यादि ।**

**प्राणन्नेवेति** । प्राणनक्रियां कुर्वन्प्राणो नाम भवतीत्यनेन प्राणनवृत्त्युपाधिकमात्मनः प्राणनामवत्त्वमुक्तम् । यद्यपि संज्ञानादिनाम्नां तत्र नोपाधिकत्वमुक्तं तथाऽपि तुल्यन्यायतयैतेषामप्यौपाधिकत्वमुक्तप्रायमिति भावः । एतदुक्तं भवति—संज्ञानादिशब्दाः प्रकाशात्मकवस्तुवाचिनः । न च साक्षादन्तःकरणवृत्तीनां जडानां प्रकाशात्मकत्वं संभवतीति प्रकाशात्मकवस्तुन्यध्यासादेव तासां प्रकाशात्मकत्वमिति कल्पयन्तोऽधिष्ठानभूतमतिरिक्तं प्रकाशं गमयन्तः पर्यवसानगत्या प्रकाशात्मनः प्रज्ञानस्यैव नामधेयानीति । अत्र संज्ञाना-

---

१ ख. ग. घ. ङ. ट. °पर्केत्य° । २ घ. °वत्प्राज्ञ° । ३ ङ. °त्प्रज्ञा वृ° । ४ क. °रूपता नो° । ५ क. °ते सं° । ६ क. घ. ङ. ञ. °पत्तेर्नान्तःकरणं किं° । ७ ग. घ. ङ. शुद्धं चै° । ८ ट. नाम्न्यर्थो° । ९ ख. ट. °ख्यवृ° । १० क. ग. घ ङ. °लब्ध्य° । ११ ख. ङ. ट. °ता अत उ° । १२ ख. ट. °नि भवन्ति । १३ क. ग. घ. ङ. °द्धस्य विज्ञा° । १४ ग. घ. ग. °हितं रू° । १५ ग. घ. ङ. प्रज्ञाभिधानस्य° ।

दीनामनित्यत्वेन जडानां वृत्तीनां प्रकाशात्मकवस्तुवाचकसंज्ञानादिनाम[1]त्वानुपपत्तेस्तद्व्यतिरिक्तः कश्चित्प्रकाशरूपोऽस्तीत्युक्तम् । तथा[2] संज्ञानादिशब्दवाच्यत्वोक्त्या तत्प्रज्ञानं विज्ञानं[3] प्रज्ञानमित्यत्रै[4]वं[5] प्रज्ञतारू[6]पा वृत्तिर्न भवतीत्युक्तम् । तस्याः संज्ञानादिवाच्यत्वानुपपत्तेः[7] । तथा संज्ञानादीनि सर्वाण्येकस्य प्रज्ञानस्य नामानीत्युक्त्या च तत्प्रज्ञानमेकं सर्ववृत्त्यनुगतमित्युक्तं तदनेकत्वे[8] तत्तद्वृत्तिगतानां प्रज्ञानानां तत्तन्नामकत्वेन सर्वनामकत्वानुपपत्तेः । प्रज्ञानस्येत्येकवचनानुपपत्तेश्च । अतो येन वा पश्यतीत्यादिना नामधेयानि भवन्तीत्यन्तेन सर्वकरणतद्वृत्तिव्यतिरिक्तः स्वप्रकाशात्मकः सर्वसाक्षी सर्ववृत्त्यनुगत एक आत्मा शोधितः ।

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव ।**

**स एष प्रज्ञानरूप आत्मा ब्रह्मापरं सर्वशरीरे[9]स्थप्राणः[10] प्रज्ञात्माऽन्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्[11]हिरण्यगर्भः प्राणः प्रज्ञात्मा । एष एवेन्द्रो[12] गुणाद्देवराजो वा । एष प्रजापतिर्यः प्रथमजः शरीरी । यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः । स प्रजापतिरेष एव । येऽप्येतेऽग्न्यादयः सर्वे देवा एष एव । इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नान्नाद[13]त्वलक्षणान्येतानि । किंचेमानि च क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मिश्राणि । इवशब्दोऽनर्थकः ।**

एवं शोधितस्याऽऽत्मनः प्रतिशरीरं नानात्वं वारयितुमेष ब्रह्मेत्यादि वाक्यं तद्व्याचष्टे—**स एष इत्यादिना** । एष इत्यस्यार्थमाह—**प्रज्ञानरूप आत्मेति** । प्रज्ञानं ब्रह्मेति मुख्यब्रह्मताया वक्ष्यमाणत्वादिह मूर्धद्वाराऽनुप्रविष्टं समष्टिलिङ्गशरीराभिमानी[14] हिरण्यगर्भः[15] प्राणः[16] प्रज्ञात्मादि[17]शब्दैस्तत्र तत्रोक्तमपरं ब्रह्मोच्यत इत्याह—**अपरमित्यादिना** । सर्वशरीरेत्यनेन समष्टिस्थूलशरीरमुच्यते । अन्तःकरणोपाधिष्वित्यनेनापि समष्टिलिङ्गशरीरमुक्तम् । आद्याभ्यां प्राणप्रज्ञात्मशब्दाभ्यां क्रियाशक्तिज्ञानशक्तिम-

१ क. ख. °मकत्वा° । २ ङ. °था च सं° । ३ घ. ङ. °नं संज्ञा° । ४ ख. ञ. ट. °त्यत्रैव । ५ ग. घ. °व प्राज्ञ° । ६ ङ. ट. °रूपवृ° । ७ ख. °पत्त्या त° । ८ ख. ट. °त्वेन त° । ९ ख. च. ज. °रस्थं प्रा° । झ. °रस्थः प्रा° । १० क. ग. ङ. च. °प्राणप्र° । ११ च. छ. ज. °वद्धैर° । १२ क. ख. ग. घ. च. छ. ट. °वेन्द्र इन्द्रगु° । १३ क. ख. ग. घ. ङ. °दल° । १४ ख. ग. घ. ङ. °मानिहि° । १५ ख. ङ. °गर्भप्रा° । १६ ख. °प्राणप्र° । १७ ख. ट. °ज्ञानात्मा° ।

स्वमुक्तम् । द्वितीयाभ्यां तु तत्र तत्र तथा निर्दिष्ट इत्युच्यत इत्यपौनरुक्त्यम् । ननूक्तप्रज्ञानात्मैवापरं ब्रह्मेत्यत्र किं प्रमाणमित्याशङ्क्य प्रवेशवाक्यं प्रमाणमिति वक्तुमेष इन्द्र इति वाक्यं व्याचष्टे—**एष इति । गुणादिति** । इदमदर्शमितिश्रुत्युक्तगुणयोगादित्यर्थः । प्रवेशवाक्ये प्रविष्टस्येन्द्रत्वाभिधानाद्धिरण्यगर्भस्यापीन्द्रत्वोक्तौ प्रविष्टत्वप्रत्यभिज्ञानात्प्रवेष्टुरेव प्रविष्टसर्वरूपत्वादभेदः सिध्यतीति भावः । न तु पारमैश्वर्यगुणयोगात्प्रज्ञानात्मेन्द्रः परमेश्वर इत्यर्थो ग्राह्यः । प्रज्ञानात्मनः परमेश्वराभेदस्य प्रज्ञानं ब्रह्मेत्यनेन वक्ष्यमाणत्वात्परमेश्वरत्वगुणवत्त्वप्रतिपादनस्य च प्रकरणविरोधात् । न च हिरण्यगर्भाद्यात्मत्ववन्मायाविशिष्टपरमेश्वरात्मत्वमनेनोच्यत इति वाच्यम् । तथा सति भाष्योक्तगुणादितिहेत्वनन्वयादेष ब्रह्मैष इन्द्र एष प्रजापतिरिति पूर्वोत्तरपर्यायेष्विव गुणयोगाभावेऽप्युपपत्तेश्चेति । अस्य व्याख्यानस्य क्लिष्टत्वं मनसि निधायार्थान्तरमाह—**देवराजो वेति** । प्रजापतेर्हिरण्यगर्भाद्भेदमाह—**यः प्रथमज इति** । स लिङ्गशरीराभिमान्ययं तु स्थूलशरीराभिमानीति भेद इत्यर्थः । तत्राद्भ्य एव पुरुषं समुद्धृत्यामूर्छयन्मुखं निरभिद्यतेत्यादिवाक्यं प्रमाणमाह—**यत इति** । देवग्रहणं मनुष्यादीनामुपलक्षणम् । तथा च सर्वे जीवात्मान एष एवेत्यर्थः । एवमेष ब्रह्मेत्यादिवाक्येष्वैक्ये सामानाधिकरण्यं गृहीत्वा सर्वभूतस्थस्याऽऽत्मन एकत्वमुक्त्वा सजातीयभेदं निराकृत्य तदुपाधीनां भूतभौतिकानामपि बाधायां सामानाधिकरण्यमाश्रित्याऽऽत्मव्यतिरेकेणाभावं तस्य विजातीयभेदनिराकरणार्थं वक्तुमिमानि चेत्यादिवाक्यं तद्व्याचष्टे—**इमानि चेति** । एतान्यन्नान्नादत्वेन पूर्वमुक्तानीति वक्तुं विशिनष्टि—**अन्नेति** ।

**बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ।**

सर्पादीनि बीजानि कारणानीतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि । कानि तानि उच्यन्ते । अण्डजानि पक्ष्यादीनि । जारुजानि जरायुजानि । मनुष्यादीनि । स्वेदजानि यूकादीनि । उद्भिज्जानि च वृक्षा-

---

१ ख. °था तथा नि° । २ ख. ट. °नूक्तं प्र° । ३ ग. घ. °परब्र° । ४ ख. ट. वाक्यमितिव्या° । ५ ख. ट. रगु° । ६ ख. ठ. °हेतुक्वनान° । ७ क. ख ग. घ. ङ. °राज इति । ८ क. ग. घ. °र्थः । अत्रा° । ९ क. ग. घ. °म् । स° । १० ख. ट. °णार्थमि° । ११ ख. ट. °राश्यत्वेन । १२ ख. छ. °नि च प° । १३ च. ज. °नि च ज° । १४ च. छ. °नि च यू° । १५ क. ग. घ. ङ. च. °कामशकादी° । १६ क. ग. घ. ङ. च. °नि वृ° ।

**दीनि । अश्वा गावः पुरुषा हस्तिनोऽन्यच्च यत्किंचेदं प्राणिजातम् । किं तत् । जङ्गमं यच्चलति पद्भ्यां गच्छति । यच्च पतत्रि । आकाशेन पतनशीलम् । यच्च स्थावरमचलं सर्वं तदशेषतः प्रज्ञानेत्रं प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव नीयतेऽनेनेति नेत्रं प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम् । प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रयमित्यर्थः । प्रज्ञानेत्रो लोकः पूर्ववत् । प्रज्ञाचक्षुर्वा सर्व एव लोकः । प्रज्ञा प्रतिष्ठा सर्वस्य जगतः । तस्मात्प्रज्ञानं ब्रह्म ।**

सर्पादीनां न केवलं क्षुद्रमिश्रत्वं किंतु सर्पान्तरादीन्प्रति बीजत्वं चेत्याह—**कारणानि चेति । द्वैराश्येनेति ।** स्थावरजङ्गमभेदेन निर्दिश्यमानानीत्यर्थः । स्वेदजा[न्ता?]नि जङ्गमान्युद्भिज्जानि स्थावराणीत्याह—**उच्यन्त इति ।** जङ्गममित्यस्य व्याख्या यच्चलतीति । स्थावराणामपि वाय्वादिना चलनमस्तीत्याशङ्क्याऽऽह—**पद्भ्यामिति ।** स्थावरमचलमित्यनन्तरं सर्वं तदेष एवेति शेषः । तत्सर्वमेष एवेत्यत्र हेतुं वक्तुं सर्वं तत्प्रज्ञानेत्रमित्यादि प्रतिष्ठित्यन्तं वाक्यं तद्व्याचष्टे—**सर्वमित्यादिना । नीयतेऽनेनेति ।** अनेन प्रज्ञानेन सत्तां नीयते सत्तां प्राप्यते सत्तावक्रियत इत्यर्थः । यद्वा स्वस्वव्यापारेषु प्रवर्त्यत इति वा । नन्वेवंभूतं ब्रह्मैवेत्युपनिषत्सु प्रसिद्धं न तु प्रज्ञानमित्याशङ्क्य वस्तुतः प्रज्ञानस्यैव तत्र तत्र ब्रह्मशब्देनाभिधानान्न दोष इत्युक्तं प्रज्ञानं ब्रह्मैवेति । यद्वा कोऽयमात्मेत्यारभ्यैते सर्वे देवा इत्यन्तं त्वंपदार्थशोधनार्थमिमानि चेत्यादि प्रतिष्ठित्यन्तं तत्पदार्थशोधनार्थम् । तत्र पक्षे प्रकृष्टं ज्ञानं प्रज्ञानमिति तत्पदार्थो ब्रह्मैवोच्यते । पञ्चभूतादि स्थावरान्तं सर्वं तत्प्रज्ञानेत्रं ब्रह्मनेत्रमित्यर्थः । प्रज्ञासत्तयैव सर्वस्यापि सत्तावत्त्वं साधयितुं प्रज्ञाने प्रतिष्ठितमित्युक्तम्, तद्व्याचष्टे—**प्रज्ञाने ब्रह्मणीति ।** न केवलं प्रज्ञासत्तयैव सत्त्वं सर्वस्य किंतु प्रवृत्तिरपि तदधीनैवेत्याह—**प्रज्ञानेत्र इति । पूर्ववदिति ।** नीयते प्रवर्त्यतेऽनेनेतिव्युत्पत्तेर्नेत्रं प्रवर्तकमित्यर्थः । **लोक इति ।** सर्वं जगदित्यर्थः । यद्वा पूर्वं नेत्र शब्देन सर्वस्य सत्ताव्यापारहेतुत्वमुक्तमिदानीं सर्वस्य स्फुरणहेतुरप्ययमेवेत्युच्यत इत्याह—**प्रज्ञाचक्षुर्वेति ।** चक्षुरिति स्फुरणमित्यर्थः । जगत इव प्रज्ञानस्यापि स्फुरणप्रतिष्ठयोरन्याधीनत्वमाशङ्क्य तस्य स्वप्रकाशत्वात्स्वमहिमप्रतिष्ठितत्वेनाऽऽश्रयान्तराभावाच्च नैवमित्याह—**प्रज्ञा प्रतिष्ठेति ।** यद्वा सर्वस्य जगतः सत्तास्फूर्त्योः प्रज्ञानाधीनत्वादुत्पत्त्यादिष्वप्यवस्थासु प्रज्ञाने

---

१ च. छ. °मं च य° । २ च. प्रज्ञैव ने° । ३ ख. च. ञ. °ज्ञानाश्र° । ४ क. ग. घ. ङ. °र्पादी° । ५ क. °णानीति । ६ क. ख. ग. घ. ङ. ट. °राश्यत्वेने° । ७ क. ग. घ. ब्रह्मेत्यु° । ८ क. ग. घ. ङ. °र्वस° । ९ क. ग. ग. ङ. °रय° । १० ख. ट. °मेवोच्य° । ११ ख. ट. °तिष्ठत्वे° । १२ क. °न्तरत्वाभा° । १३ क. °ज्ञाधी° ।

**तदेतत्प्रत्यस्तमितसर्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेतिनेतीतिसर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसंबन्धेन सर्वज्ञमीश्वरं सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति । तदेव व्याकृतज-** प्रतिष्ठितत्वेन तदुपादानत्वाच्च वाचारम्भणन्यायेन प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञानमेव सर्पादे रज्ज्वादिरिव पर्यवसानभूमिरित्याह—**प्रज्ञा प्रतिष्ठेति** । प्रतिष्ठा ध्रुवं पर्यवसानभूमिः परिशिष्टं वस्त्वित्यर्थः । एवं च प्रज्ञानस्य प्रत्यगात्मनो निर्विशेषत्वादिकं सिद्धमित्याह—**तस्मादिति** । प्रज्ञानस्यैव परिशिष्टत्वेन परमार्थसत्यत्वादित्यर्थः । ब्रह्मशब्दार्थमाह—**प्रत्यस्तमितेति** । अस्मिन्पक्षे ब्रह्मशब्देन प्रत्यगात्मनो निर्विशेषत्वादिकमेव सामानाधिकरण्येन समर्थ्यते । ब्रह्मशब्दस्यापि निर्विशेषत्वादिकमेवार्थः । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते । बृंहतेर्धातोरर्थानुगमादिति शारीरकभाष्य उक्तत्वान्न तु प्रत्यग्ब्रह्मणोरैक्यमनेन वाक्येनोच्यते । आत्मा वा इदमेक एवाग्र आसीदित्यात्माद्वितीयत्वेनैवोपक्रमाद्ब्रह्मपदार्थानुपक्रमाच्च । एवं चाऽऽत्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इत्ययं पक्षोऽत्र स्फुटीकृत इति द्रष्टव्यम् । यदा त्विमानि च पञ्च महाभूतानीत्यारभ्य तत्पदार्थशोधनार्थत्वेन व्याख्यायते तदा तत्पदार्थशोधनानन्तरं वाक्यार्थकथनार्थं प्रज्ञानं ब्रह्मेति वाक्यमिति व्याख्येयम् । अत्र च पक्षेऽत्रत्यप्रज्ञानशब्देन प्रज्ञानस्य नामधेयानीत्यत्रत्येन च प्रत्यगात्मोच्यते । अत्र ब्रह्मशब्देन च जगत्कारणत्वोपलक्षितं चैतन्यमुक्तमिति द्रष्टव्यम् । तस्मादिति चोभयोर्निर्विशेषचिद्रूपत्वाविशेषादित्यर्थः । ननु प्रज्ञानस्य ब्रह्मत्वोपदेशे किं सिध्यतीत्याशङ्क्य तस्य निर्विशेषत्वादिकं सिध्यतीति फलितार्थकथनपरत्वेन व्याख्येयं प्रत्यस्तमितेति । अन्यत्समानम् । **उपाधिविशेषमिति** । उपाधिकृतकर्तृत्वभोक्तृत्वदुःखित्वादिविशेषमित्यर्थः । तस्य पुरुषार्थत्वमाह—**शान्तमिति** । परितृप्तं परमानन्दरूपामित्यर्थः । निर्विशेषत्वे मानमाह—**नेतीति** । **सर्वेति** । यतो वाचो निवर्तन्ते । आनन्दं ब्रह्मणो विद्वानितिश्रुतिर्निर्विशेषानन्दत्वे मानमित्यर्थः । नन्वेवंभूतस्य प्रज्ञानस्य कथं सर्वज्ञादिस्तम्बान्तनानाविधभेद इत्याशङ्क्य नानाविधोपाधिसंबन्धादित्याह—**तदत्यन्तेत्यादिना** । विशुद्धोपाधिसंबन्धाविशेषेऽप्यन्तर्यामिहिरण्यगर्भप्रजापतीनां सर्वज्ञाद्भेदमाह—**सर्वसाधारणेति** । व्याकृते सर्वजगत्कारेण-

---

१ क. ख. ग. ज. °त्प्रज्ञानं ब्रह्म प्रत्य° । २ क. ख. ट. °श्वरसंज्ञं भवति । स° । ३ च. छ. ज. °यन्त्रन्त° । ४ ख. ट. °ति । ध्रु° । ५ क. घ. ङ. °शिष्टव° । ६ ख. ट. °कं प्रसि° । ७ ग. घ. °शेषादि° । ८ क. ग. घ. यद्वेत्वि° । ९ ख. ट. वाक्यं व्या° । १० ग. घ. ङ. °अन्यत्र° । ११ ख. ट. °न ज° । १३ ग. घ. ङ. °शेषत्वादि° । १४ क. °वज्ञत्वादि° । १५ ख. ट. °रणे स° ।

गद्बीजभूतबुद्ध्यात्माभिमानलक्षणहिरण्यगर्भसंज्ञं भवति । तदेवा-न्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट्प्रजापतिसंज्ञं भवति । तदुद्भू-ताग्न्याद्युपाधिमद्देवतासंज्ञं भवति । तथा विशेषशरीरोपाधिष्वपि । ब्रह्मादिस्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणः । तदेवैकं सर्वोपाधि-भेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा । एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राण-मपरे ब्रह्म शाश्वतमित्याद्या स्मृतिः ॥ ३ ॥

समष्टिबुद्धावात्मत्वाभिमान एव लक्षणमुपाधिर्यस्य तदित्यर्थः । **अन्तरण्डेति** । अण्डो-पाधिकं विराट् तेदन्तर्भूतप्रथमशरीरोपाधिकः प्रजापतिरित्यर्थः । **तदुद्भूतेति** । तस्माद-ण्डादुद्भूता इमेऽग्न्यादीनामुपाधयः समष्टिवागादयस्तदुपाधिमत्प्रज्ञानमग्न्यादिदेवतासंज्ञं भव तीत्यर्थः । आदिशब्देन व्यष्टिवागाद्यभिमानिनो गृह्यन्तेऽसुरादयश्च । व्यष्टिमनुष्यादिशरी-रोपाधिषु मनुष्यादिसंज्ञं भवतीत्याह—**तथेति** । अपीत्यनन्तरं तत्तत्संज्ञं भवतीति शेषः । उपसंहरति—**ब्रह्मादीति** । अत्रैवमिति शेषः । एवं ब्रह्मादिस्तम्बेति योज्यम् । ननु सांख्यादिभिर्जीवानामेव नानात्वमुच्यते । अन्यैश्च जीवेश्वरनानात्वं जगत्कारणं चान्यथाऽ-न्यथाऽप्याहुस्तत्कथमेकस्यैव ब्रह्मणो नानारूपत्वमत आह—**तदेवैकमिति** । अस्मिन्नर्थे प्रमाणमाह—**एतमेक इति** ॥ ३ ॥

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामु-

स वामदेवोऽन्यो वैवं यथोक्तं ब्रह्म वेद प्रज्ञेनाऽऽत्मना येनैव प्रज्ञेनाऽऽत्मना पूर्वे विद्वांसोऽमृता अभूवंस्तथाऽयमपि विद्वानेतेनैव

एवं तावत्कोऽयमात्मेत्यारभ्य प्रज्ञानं ब्रह्मेत्यन्तेन विचारपुरःसरमात्मतत्त्वं निर्धारितम् । आत्मा करणसंघातात्मकप्राणव्यतिरिक्तः संज्ञानादिसर्वान्तःकरणवृत्त्यतिरिक्तस्तदनुगतः स्वप्रकाशः सर्वशरीरेष्वेकः सर्वप्रपञ्चाधिष्ठानभूतोऽद्वितीयः प्रज्ञानं ब्रह्म नित्यशुद्धबुद्धमुक्तस्व-भाव इति । इदानीमेवंभूतब्रह्मात्मविदः फलं वक्तुं स एतेनेत्यादि श्रुतिवाक्यम् । तत्रैतच्छब्देनै-कवचनान्तेन प्रकृतानामपि कोऽयमात्मेत्येवं विचारयतां बहूनां परामर्शायोग्यत्वादिदानींतनस्य विदुषश्च स इति भूतवाचिना परामर्शायोग्यत्वात्पूर्वाध्यायोक्तो वामदेवः परामृश्यत इत्याह—**स वामदेव इति** । ब्रह्मविदः फलमित्यत्र वाक्यस्य तात्पर्याद्वामदेवादिपुरुषविशेषे तात्पर्या-भावाद्यः कश्चन ग्राह्य इत्याह—**अन्यो वेति** । **एवमिति** । कोऽयमात्मेत्युक्तप्रकारेणैतं

१ घ. च. छ. ज. °क्षणं हि° । २ ख. छ. ज. ट. °तादिसं° । ३ ख. ङ. °देव चैकं । ४ क. ख. °तदुद्भू° । ५ ङ. °ष्टिसमष्टिम° । ६ क. ग. घ. ङ. °णं वाऽन्य° । ७ ख. ग. घ. ङ. ट. °देव चैक° । ८ ख. ट. °ह्म यो वे° । ९ च. प्रज्ञानेना° । १० क. प्रज्ञाना° । क. ग. घ. ङ. छ. ज. प्रज्ञात्म° । ११ क. घ. °त्मत्ववि° । १२ क. ग. घ. ङ. °योक्तवा° । १३ ख. ट. °क्यता° ।

ष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः सम-
भवत्समभवत् ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥

इत्यैतरेये द्वितीयारण्यके षष्ठोऽध्यायः ॥ ६ ॥

हरिः ॐ । * वाङ्मे मनसि प्रतिष्ठिता मनो मे
वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म
आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहो-

प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्येत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्र-म्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदित्योमिति ॥४॥

इति पञ्चमखण्डभाष्यम् ॥ ५ ॥

इत्यैतरेये द्वितीयारण्यकभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

प्रज्ञानरूपं यथोक्तं ब्रह्म प्रज्ञानेनाऽऽत्मना वेदेत्यर्थः । एतेनैवेत्येतच्छब्दोक्तं प्रकृतत्वं व्यक्ती करोति—येनैवेति । येनैव प्रज्ञेनाऽऽत्मना ब्रह्म विद्वांसः पूर्वेऽमृता अभूवंस्तेनैतेनैवं प्रज्ञे-नाऽऽत्मना यथोक्तं ब्रह्म वेद वामदेवोऽन्यो वा सोऽमृतोऽभवत् । तथाऽयमपीदानींतनोऽपि विद्वानेतेनैव प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामृतः समभवदित्यन्वयः । अत्रोत्क्रमणं पक्षिणो नीडादिवोर्ध्वगमनं न संभवति किंतु देहात्मभावत्यागेन प्रज्ञानात्मभाव एवेत्यभिप्रेत्य प्रज्ञा-नात्मनोत्क्रम्येत्युक्तम् । प्रज्ञानात्मना विद्वानिति वाऽन्वयः । उक्तमात्मतत्त्वमङ्गीकारवाचि-नोंकारेण न स्वानुभवप्रकटनेन दृढीकुर्वन् । ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति स्मृतेरोंकारेण ब्रह्मात्मानुसंधानलक्षणं मङ्गलं कर्तुमोमित्युक्तमिति ॥ ४ ॥

इति पञ्चमखण्डभाष्यटीका ॥ ५ ॥ इत्यैतरेये द्वितीयारण्यकभाष्यटीकायां षष्ठोऽ-ध्यायः ॥ ६ ॥

इति श्रीमदानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥ ६ ॥

---

* षष्ठखण्डस्य भाष्यं स्पष्टत्वादात्मतत्त्वाप्रतिपादनाच्च श्रीमच्छंकराचार्यैर्न कृतमित्येतट्टीकात एव ज्ञायते । सा तु टीका दीपिकातोऽभिन्नैवेति ज्ञात्वाऽत्र न संगृहीता । अस्य खण्डस्य व्याख्या-नमेतत्पुस्तकसंगृहीतदीपिकायां विवृत एव ।

---

१ च. °वत्समभवदि° । २ क. ख. ग. घ. प्रज्ञानेना° । ङ. प्रज्ञाना° । ३ क. ख. ग. घ. अमु° । ४ ट. °वदित्योम् । ५ ख. ट. °ब्दोक्तप्र° । ६ ख. ट. प्रज्ञना° । ७ ख. ट. नैव । ८ ख. ट. प्रज्ञाना° । ९ ख. ट. प्रज्ञाना° । १० ख. ट. न भ° । ११ क. ग. घ. ङ. °ह्मानु° । १२ क. ग. घ. ङ. °कम् ॥ ४ ॥

रात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः । इति षष्ठः खण्डः ॥ ६ ॥ इत्यैतरेये द्वितीयारण्यके सप्तमोऽध्यायः ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ बह्वृचब्राह्मणोपनिषद्भाष्यं समाप्तम् ।

---

ॐ उदितः शुक्रियं दधे । तमहमात्मनि दधे । अनु मामैत्विन्द्रियम् । मयि श्रीर्मयि यशः । सर्वः सप्राणः सबलः । उत्तिष्ठाम्यनु मा श्रीः । उत्तिष्ठत्वनु माऽऽयन्तु देवताः । अदब्धं चक्षुरिषितं मनः । सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः । तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । ॐ शान्तिः शान्तिः शान्तिः ।

इति ऋक्शाखीयायामैतरेयोपनिषदि द्वितीयारण्यकान्तर्गतमात्मषट्कं द्वितीयारण्यकं च समाप्तम् ॥ ॐ तत्सत् ॥

# अथ विद्यारण्यकृता ऐतरेयोपनिषद्दीपिका ।

यस्य निश्वासितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थमध्यायत्रयेण प्राणविद्या प्रपञ्चिता तावता ब्रह्मविद्यायां पुरुषस्य मुख्याधिकारः संपन्नः । कर्मकाण्डोक्तैः कर्मभिर्विविदिषाया उत्पन्नत्वादुपासनया चित्तैकाग्र्यस्य संपन्नत्वाच्च । तत्संपत्तौ [1]शमदमादयो गुणा अर्थसिद्धाः। ते चाऽऽत्मविद्यायामन्तरङ्गभूताः। शान्तो दान्त उपरतस्तितिक्षुः समा[2]हितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यती[3]ति श्रुतेः । अतो मुख्याधिकारिणमुपल[4]क्ष्य श्रुतिरध्यायत्रयेण ब्रह्मतत्त्वं विस्पष्टमु[5]पदेष्टुमादौ तत्त्वं संग्रहेण सूचयति—

आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । इति ।

आत्म[6]शब्दस्यार्थो महर्षिभिरेवं स्मर्यते—

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
य[7]च्चास्य संततो भावस्तस्मादात्मेति कीर्तितः[8] ॥

इति । द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्चेति । व्यवहारोऽपि त्रिविधः—जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म प्राप्नोति । तथा च कैवल्योपनिषदि श्रूयते—सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेतीति । तस्मादाप्नोतीत्यात्मेति स्मर्यमा[9]णं प्रथमं निर्वचनं द्रष्टव्यम् । स्वप्नावस्थायामयं जीवो जागरणस्थपदार्थवासनाः सर्वा आदत्ते । तथा च वाजसनेयिन आमनन्ति—स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मा[10]त्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति । अस्यायमर्थः—यदाऽयं जीवो वाक्चक्षुरादिदशविधबाह्यकरणोपरतिरू[11]पं स्वापं प्राप्नोति तदानीं सर्वावतो गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य लोकस्येन्द्रियैरवलोक्यमानस्यास्य जगतो मात्रां लेशरूपां वासनामपादाय तत्तत्पदार्थे[12]भ्योऽवच्छिद्य स्वयं स्वीकृत्य ततो जागरणाभिमानं स्वयमेव विनाश्य स्वप्ने जगद्रूपं च स्वयमेव निर्माय जगदाकारेण परि[13]णमते स्वेन भासा स्वकीयेनान्तःकरणेन । तथा

---

१ ग. शमा° । २ ग. °हितः श्रद्धान्वितो भू° । ३ क °ति अ° । ४ क. ख. °लभ्य श्रु° । ५ ग. °पदिशति तत्रादौ ६ ख. °शब्दो म° । ग. °शब्दार्थो म° । ७ ख. यदस्य । ८ घ. कीर्त्यते । ९ घ. °णं निर्वचनं प्रथमं द्र° । १० घ. °त्रामादा° । ११ ख. घ. °पं प्रस्वा° । ग. °पं स्वप्नं प्रा° । १२ ख. ग. °भ्योऽपच्छि° । १३ ख. ग. °णतेन स्वे° ।

स्वेन ज्योतिषा स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन्प्रस्व-पितीति। तस्माद्वासनां[1]स्वीकारादादत्त इत्यात्मेति द्वितीयं निर्वचनं द्रष्ट-व्यम्। जागरणावस्थायां चक्षुरादीन्द्रियैर्बाह्या[2]न्रूपा[3]दिविषयानत्ति भुङ्क्ते। तथा चाऽऽथर्वणिकै[4]रेवाऽऽम्नायते—स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेतीति। ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यम्। उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम्। अथ केवलस्य निर्वचनमुच्यते—यद्यस्मात्कारणादस्याऽऽत्मनो भावः स्वभावविशेषः संततः परिच्छेदरहितः। तथा च सत्यं ज्ञानमनन्तं ब्रह्मे[5]त्यत्र श्रुत्यन्तरे देशकालवस्तुपरिच्छेदराहित्यलक्षणमानन्त्यमभिहि-तम्। तस्मादतति सांतत्येन सर्वत्र संगच्छतीत्यात्मेति चतुर्थं निर्वचनं द्रष्टव्यमिति। एवं सत्यत्राऽऽत्मतत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसत्वेन संततत्वमात्मशब्दप्रवृत्तिनिमित्तम्।

यदि धातुप्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य स्वरूपवाचित्व-मुच्येत। तदाऽप्यध्यस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन सर्वस्वरूपत्व-मस्ति। न ह्यारोपितानां सर्पधारादण्डमालाबलीवर्दमूत्रितादीनामधि-ष्ठानभूतां रज्जुमन्तरेण किंचिदन्यद्वास्त[8]वं स्वरूपमस्ति। किं बहुना यद्य-यमात्मशब्दो यौगिको यदि वा रूढः सर्वथाऽपि संततोऽखण्डैकरसः सर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थ आत्मशब्देनात्र विव-क्षितः। वैशब्दोऽवधारणार्थः। इदमिदानीं सार्वजनीनप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगदग्रे सृष्टेः पूर्वमात्मैवाऽऽसीत्। न तु तत्कार्यभूतं नामरूपात्मकं जगदासीत्। नाप्यात्मगोचरौ शब्दप्रत्ययावास्ताम्। लोके मृत्का[10]र्यभूतघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति न तु घटादिकम्। तथाऽपि मृद्गोचरौ शब्दप्रत्ययौ विद्येते एव तद्वदत्रापि प्रसक्तौ सत्यां शब्दप्रत्यया-वपि वैशब्देन व्यावर्त्येते। देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यशब्दस्य मनोनिष्पाद्यस्य प्रत्ययस्य चाभावः सुतरामुपपद्यते। नन्विदमात्माऽऽ-सीदिति सामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनः प्रतीयते नीलमुत्पल-मिति सामानाधिकरण्यश्रवणे सत्युत्पलद्रव्यस्य नीले[12]गुण[13]वैशिष्ट्यस्य प्रतिभासात्। मैवं वैशिष्ट्ये सत्यग्रशब्दवैयर्थ्यप्रसङ्गात्। इदानीं जग-

१ ग. °नानां स्वी°। २ ख. °र्बाह्यादीन्रू°। ग. °र्बाह्यविषयान्रू°। ३ ग. °पादीन्विष°। ४ क. °कैराम्ना°। ५ ख. ग. °ह्मेति श्रु°। ६ घ. °स्तवतत्त्वस्य स्व°। ७ ख. °नतत्त्वेन। ८ ख. °तस्तं भ°। घ. तस्ततप°। ९ ख. ग. °त्ययौ पूर्वमास्ता°। १० ग. °र्यघ°। ११ ख. °न जीवेन जि°। १२ ग. °लत्वगु°। १३ ग. च. °णविशि°।

द्विशिष्ट आत्मा [1]प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुमग्रशब्देन सृष्टेः प्राचीनकाल उपादीयते । तदेवमनेन वाक्येनाखण्डैकरसमात्मतत्त्वं सूचितं भवति । एकादिशब्दैरखण्डैकरसत्वमेव[2] स्पष्टी क्रियते । लोके वृक्षादिपदार्थेषु स्वगतः सजातीयो विजातीयश्च त्रिविधो भेदोऽस्ति । तत्र शाखास्कन्धपत्रादीनां परस्परप्रतियोगिको वृक्षस्य स्वगतो भेदः । वृक्षान्तरप्रतियोगिकः सजातीयः । पाषाणादिप्रतियोगिको विजातीयः । तद्वदात्मनोऽपि प्रसक्ताधेकशब्देन स्वगतो भेदो व्यावर्त्यते । न वृक्षवन्नानात्मको भवति किंत्वेकात्मक इत्यर्थः । एवशब्देनाऽऽत्मान्तरव्यावृत्तिः । योऽयमेकः स एव न त्वन्यः कश्चित्तादृश इत्यर्थः । नान्यदित्यादिना विजातीयभेदो निषिध्यते । अन्यत्प्रकृतादात्मनो विलक्षणं किंचन किंचिदपि वस्तु न मिषत् । धातूनामनेकार्थत्वान्नाऽऽसीदित्युक्तं भवति । न च[3] जगदुत्पादनाय मायाख्यायाः शक्तेरङ्गीकार्यत्वादन्यसद्भावः शङ्कनीयः । आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् । न हि भृत्येभ्यो जीवितं प्रयच्छन्तः[4] स्वामिनस्तवैतावद्धनं त्वदीयशक्तेश्चैतावदिति विभज्य गणयन्ति । नाप्यवस्तुभूतं चन्द्रप्रतिबिम्बादिकमभिलक्ष्य द्वौ चन्द्रमसौ वस्तुभूतावि[5]त्येवं बुद्धिमन्तो व्यवहरन्ति । तस्मादङ्गीकृतायामपि मायायामात्मनोऽखण्डैकरसतायां न कोऽपि विघ्नोऽस्ति । ईदृशः स यदि तत्रापि जगदनुवर्तेत तदानीं व्यर्थोऽयमग्रशब्दप्रयासः स्यात् । सामानाधिकरण्यं तु बाधार्या[6]मप्युपपद्यते । यस्त्वदीयश्चोरः स स्थाणुरि[7]त्येवं बाध[8]दर्शनात् । तद्वदत्रापि यज्जगत्वेनेदमिदानीं प्रतिभासते तज्जगन्न भवति किंत्वात्मैवे[9]त्येवं[10] योजनीयम् । नन्विदानीमपि तत्त्वदृष्ट्या नेदं जगत्किंत्वात्मैव । बाढम् । तथाऽपि बुभुत्सोर्मूढस्य जगत्प्रत्ययदार्ढ्या[11]दनुभवविरो[12]धभ्रमो मा भूदिति सृष्टेः प्राचीनकाल उपन्यस्यते । कालस्यापि सृष्ट्यन्तर्भावात्कालवाचकोऽग्रशब्दोऽनुपपन्न इति चेन्न । परप्रसिद्ध्यनुसरणार्थत्वात् । परप्रसिद्ध्या परो बोधनीय इति न्यायः । परस्य तु बुभुत्सोः पूर्वसृष्टिवर्तमानसृष्ट्योर्मध्ये प्रलयकालप्रसिद्धिरस्ति । अतस्तदीयभाषया बोधयितुमग्र इत्युच्यते । अनेनैव न्यायेनाऽऽत्माऽऽसीदि[13]ति शब्दद्वयं परप्रसिद्ध्या

१ ग. प्रतीयत । २ ग. °व प्रकटी क्रि° । ३ ग. च तदु° । ४ ग. °च्छतः स्वा° । ५ ग. °वितिवु° । ६ घ. °यामुप° । ७ ख. ग. °रितिबा° । ८ ख. °बाधाद° । ९ ग. त्वात्मैवेति यो° । घ. °त्वात्मैव ह्येवं । १० ख. °त्येव यो° । ११ ख. ग. घ. °र्ढ्यानु° । १२ ख. घ. °रोधाद्भ्रमो । १३ ग. °ति पदद्व° ।

योजनीयम्। अन्यथा पुनरुक्तिपरिहाराय शब्दद्वयस्यार्थभेदेऽङ्गीकृते सति सत्ताविशिष्ट आत्मेत्येवं प्रतिभासादखण्डार्थत्वं हीयेत । श्रुतेस्त्वात्मश[1]ब्दसच्छब्दौ पर्यायत्वेनाभिमतौ । अत एव—"आत्मा वा इदमेक एवाग्र आसीत्" इत्यस्य स्थाने छन्दोगाः—"सदेव सोम्येदमग्र आसीत्" इति पठन्ति । सर्वथा सर्वभेदशून्य आत्माऽत्र विवक्षितो न तु हिरण्यगर्भादिर्लौकिक आत्मा ।

एतच्चोत्तर[2]मीमांसायां तृतीयाध्यायस्य तृतीये पादे चिन्तितम्—

"आत्मा वा इदमित्यत्र विराट् स्याद्थवेश्वरः ।
भूतसृष्टेर्नेश्वरः स्याद्गवाद्यानयनाद्[3]विराट् ॥
भूतोपसंहृतेरीशः स्यादद्वैतावधारणात् ।
अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितम् ।

"आत्मा वा इदमेक एवाग्र आसीत्" इत्यत्र विराट्[4] स्याद्थवेश्वर इति संदेहे विराडेवाऽऽत्मशब्दवाच्यो नेश्वरः। कुतः। "स ईक्षत लोकान्नु सृजै" इति पञ्चभूतसृष्टिमनुक्त्वा लोकमात्रसृष्टेरभिधानादीश्वर[5]प्रकरणेषु तैत्तिरीय[6]च्छान्दोग्यादिषु भूतसृष्ट्यभिधान[7]दर्शनात्। ताभ्यो गामानयदिति[8] चोक्तगवाद्यानयनं शरीरिणो विराजो घटते। न त्वशरीरस्य परमेश्वरस्येति प्राप्ते ब्रूमः—एक एवाग्र आसीदित्यद्वैतावधारणादीश्वरोऽत्राऽऽत्मशब्दार्थः। तथा सति शाखान्तरोक्त[9]भूतसृष्टिरत्रोपसंहर्तुं शक्यते। यत्तु गवाद्यानयनं तदर्थवादरूपम्। तद्वेदनस्य स्वातन्त्र्येण पुरुषार्थत्वाभावात्। अथ भूतार्थवादं[10] मन्येथाः, तर्हि विराडादिद्वारा परमेश्वर एव गवादिकमानयतु। श्रूयमाणस्य गवादि[11]प्रपञ्चस्य सर्वस्यार्थवादत्वे श्रुतेर्विवक्षितोऽर्थः कोऽपि न सिध्येदिति चेत् । न । जीवब्रह्मैक्यस्य विवक्षितत्वात् । आत्मा वा इत्युपक्रम्य स एतमेव पुरुषं ब्रह्मततममपश्यत् । प्रज्ञानं ब्रह्मेत्युपसंहारात् । तस्मादीश्वर[12] एवाऽऽत्मशब्दवाच्यः ।

इत्थं संग्रहेणाऽऽत्मतत्त्वं सूत्रितम्[13] । तच्चाध्यारोपापवादाभ्यां प्रपञ्च्यते । तत्र स ईक्षतेत्यारभ्यायमावसथ इत्यन्तेन ग्रन्थेनाध्यारोपं प्रपञ्चयितुकाम आदौ[14]वारोपं संगृह्णाति—

स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत, इति ।

---

१ ङ. °तेश्चाऽऽत्म° । २ ङ. च. °तच्च तृ° । ३ क. ख. °यने विरा° । ४ ङ. °राडे° । ५ ङ. °रकार° । ६ क. ख. घ. °यच्छन्दोगादि° । ७ घ. °धाना° । ८ ग. °ति यच्चोक्तं ग° ९ ङ. °क्तमूलसृ° । १० ङ. °वादत्वं म° । ११ ग. °वाद्यानयनादि° । घ. °वाद्यानयनप्र° । १२ ख. ग. °र आत्म° । १३ ख. च. सूचितम् । १४ ग. °दावध्यारो° ।

आत्मा वा इत्यनेन सूत्रेण सूत्रितः स परमेश्वरः पृथिव्यादीँल्लोकान्स्रक्ष्यामीत्येवमीक्षत, ईक्षणं विचारं कृतवान् । नुशब्दो वितर्के । इत्थं विचार्य स परमेश्वर इमाँल्लोकानसृजत । यद्यप्यत्राऽऽत्मैवेति केवलं तत्त्वं प्रकृतं तथाऽपि निर्विकारस्य जगद्भावापत्त्यसंभवाच्छाखान्तरोक्तमायाशक्तिरप्यर्थादत्रोदितेति द्रष्टव्यम् । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति हि श्रुत्यन्तरम् । "इन्द्रो मायाभिः पुरुरूपः" इति च । मायासहितस्योपादानत्वस्य विवक्षितत्वाद्विवर्तवाद एवात्राभ्युपेतव्यो न त्वारम्भपरिणामवादौ । यद्यपि लोकान्नु सृजा इत्येतावन्मात्रविचारेण कुलालवन्निमित्तकारणत्वमेव प्रतीयते तथाऽपि "सोऽकामयत बहु स्यां प्रजायेय" इति शाखान्तरगतस्य स्वकीयबहुभावविचारवाक्यस्य गुणोपसंहारन्यायेनात्रोपसंहारादुपादानत्वमपि सिध्यति । एतच्च भगवता व्यासेन सूत्रितम्—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [ब्र० सू० अ० १ पा० ४ सू० २३ ] इति । योऽयं परमात्मा नासौ केवलं निमित्तमेव किंतु प्रकृतिरुपादानमपि । कुतः । येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायोपादानरूपदृष्टान्तस्य चानुसरणात् । तदेतत्सूत्रोक्तं स्वपक्षसाधनं परपक्षदूषणमुखेन स्मृतिपादेन तर्कपादेन च प्रपञ्चितम् । स्रष्टव्यानां लोकानां भौतिकत्वेन भूतव्यतिरेकेणासंभवाद्भूतसृष्टिरप्यत्रोपसंहरणीया । सा चान्यत्रैवमाम्नायते—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी" इति । एतदीयविचारश्च द्वितीयाध्यायस्य तृतीयपादस्य पूर्वभागे प्रतिपादितः । परमेश्वरस्य सत्यसंकल्पत्वाद्भूतसृष्टौ लोकसृष्टौ वा संकल्पव्यतिरिक्तं साधनान्तरं नापेक्षितम् । अत एवान्यत्र श्रूयते—"सत्यकामः सत्यसंकल्पः" इति । "स तपस्तप्त्वा । इदꣳ सर्वमसृजत" इत्यन्यत्र श्रवणात्तपोरूपं साधनमपेक्षितमिति चेत् । मैवम् । न ह्यत्र कृच्छ्रचान्द्रायणादिकं तपः । किंतु स्रष्टव्यसंकल्प एव । "यस्य ज्ञानमयं तपः" इति श्रुत्यन्तरात्संकल्पस्य निरङ्कुशत्वान्नास्तीश्वरस्य भूयान्प्रयासः । तस्य च संकल्पस्य सत्यत्वाज्जगतो न मनोराज्यतुल्यत्वम् ।

ये लोकाः परमेश्वरेण सृष्टास्तान्स्वस्वनाम्ना निर्दिशति—

---

१ ग. °त्रितो यः प° । २ क. ख. घ. च. °तः प° । ३ ख. ग. घ. °रोक्ता मा° । ४ ग. °म् । तथेन्द्रो । ५ ग. °प ईयत इत्यादि । मा । ख. °प ईयत इ° । ६ ग. घ. °नस्य° । ७ ग. °यब्रह्मभा° । ८ ग. रस्य वा° । ९ ग. घ. °ज्ञाया उपा° ।

अम्भो मरीचीर्मरमापः, इति ।

एतेषां शब्दानां लोकवाचित्वप्रसिद्धेरभावात्स्वयमेव श्रुतिर्व्याचष्टे—

अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः, इति ।

दिवं परेण द्युलोकस्योपरि महर्लोकजनोलोकतपोलोकसत्यलोका ये सन्ति या च द्यौः प्रतिष्ठा सर्वेषां देवानामाश्रयभूतो द्युलोकोऽदोऽम्भ एतत्सर्वमम्भःशब्दवाच्यम् । लोकेषु पञ्चभूतानां साधारणत्वेऽपि जलस्यास्मदुपलब्धियोग्यत्वेन प्राधान्यमभिप्रेत्यादोऽम्भ इत्युक्तम् । उपरितनलोकाद्वृष्टिद्वारेणाऽऽगतमम्भ एवास्माभिः साक्षादुपलभ्यते न तु भूतान्तरम् । सूर्यमरीचीनामाधारत्वादन्तरिक्षलोको मरीचय इतिशब्देनोच्यते । भूर्लोकवर्तिनां प्राणिनां सहसा म्रियमाणत्वान्मरशब्देन पृथिव्युपलक्ष्यते । पृथिव्या अधस्तात्पातालविशेषरूपा भोगभूमयो याः सन्ति ताः सर्वास्तल्लोकवासिभिर्नागादिभिराप्यायमा(राप्यमा)नत्वादाप इत्युच्यन्ते ।

लोकसृष्टिमुक्त्वा पालकाभावेन लोकानां विनाशो मा भूदिति लोकपालकसृष्टिं दर्शयति—

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति
सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्, इति ।

स एव परमेश्वरः पुनरप्येवं विचारितवान् । इमे खलु लोका निष्पन्नास्तेषां भोगस्थानानामचेतनानां लोकानां रक्षार्थं चेतनाँल्लोकपालान्देवान्सर्वथा स्रक्ष्यामीति । स विचारयुक्त ईश्वरोऽद्भ्य एव जलोपलक्षितपञ्चभूतेभ्य एव पुरुषं पुरुषाकारं विराजं विराट्पिण्डं समुद्धृत्यामूर्छयन्मूर्तं कठिनमकरोत् । यथा कुलालस्तटाके जलस्याधस्तादार्द्रां मृदमानीय शोषयित्वा कठिनं पिण्डं करोति तद्वदेवायं विराट्पुरुषः समष्टिरूपो ब्रह्माण्डरूपलोकस्य पालकः ।

अथ तदवान्तरलोकपालानां चेतनानामग्न्यादिदेवतानां सृष्टिं दर्शयति—

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं

---

१ घ. °त्वे ज° । २ ख. ग. ङ. च. भूलोक° । ३ ख. ग. स प° । ४ घ. °नानां लो° । ५ ग. °ण्डस्य लो° । ६ ख. ङ. च. °पस्य लो° । ७ ख. घ. च. अथेवरदेवा° ।

श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः, इति ।

इत्यैतरेयोपनिषद्यात्मषट्के प्रथमः खण्डः ॥ १ ॥

उपनिषत्क्रमेण प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

इति ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥

तं विराट्पुरुषमभ्यतपत् । अभितस्तत्तच्छिद्रतद्गतेन्द्रियतदभिमानिदेवता-सृष्ट्यर्थं स परमेश्वरः पर्यालोचितवान् । पर्यालोचनमेव तप इति पूर्वमु-क्तम् । अभितः पर्यालोचितस्य विराट्पिण्डस्य मुखं छिन्द्रं निरभिद्यत मुखच्छिद्रं विदारितमभूत् । यथा पक्षिसर्पादीनां पक्वमण्डं भिन्नं भवति तद्वदस्मान्मुखच्छिद्राद्वागिन्द्रियं निष्पन्नम् । तस्माच्चेन्द्रियादग्निर्देवता निष्पन्ना । एवमुत्तरपर्यायेष्वपि च्छिद्रेन्द्रियदेवता व्याख्येयाः । प्राणो घ्राणेन्द्रियम् । लोमशब्देन तदाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते । हृदयमष्टदलं कमलम् । अपानोऽधःसंचारी वायुः । रेतो गुह्येन्द्रियम् ॥

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥

इन्द्रियाणामभिमानिदेवतानां च सृष्टिरुक्ता । अथ तासां देवतानां भोगयोग्याल्पशरीरसृष्टिं विवक्षुस्तदुपोद्घातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति—

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्राप-तंस्तमशनापिपासाभ्यामन्ववार्जत्, इति ।

या इन्द्रियतदभिमानिदेवतास्ता एताः सृष्टाः सत्योऽस्मिन्पूर्वोक्ते महत्यर्णवे समुद्रवदत्यन्तविस्तृते विराड्देहे प्रापतन्प्रकर्षेण पतिता अभू-वन् । तं सर्वेन्द्रियतद्देवताधिष्ठानभूतं विराड्देहं क्षुत्पिपासाभ्यामन्ववा-र्जदनुगमितवान्संयोजितवानित्यर्थः ।

अथाल्पदेहसृष्टिमाह—

ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रति-ष्ठिता अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुव-न्सुकृतं बतेति पुरुषो वाव सुकृतम् , इति ।

---

१ ग. ङ. °षदेहम° । २ घ. °स्तत्र च्छिद्र° । ३ ङ. °द्गतस्म° । ४ ङ. च. °ग्निर्दे° । ५ ग. °न्द्रियाभि° । ६ ग. °निन्यो दे° । ७ ङ. च. अभवन् ।

ता विराड्देहे पतिता इन्द्रियाभिमानिन्यो देवताः[1] स्रष्टारं[2] परमेश्वरं प्रत्येवमब्रुवन्। भोः परमेश्वरायं विराड्देहोऽस्माकं भोगक्षमो न भवति। अतिप्रौढं तं विराड्देहमापूर्य तत्र प्रतिष्ठां प्राप्तुं वयमसमर्थाः। अन्नं चैतद्दे[3]हपर्याप्तं संपादयितुमसमर्थाः। अतो यस्मिन्नल्पशरीरे प्रतिष्ठिताः सत्यो वयं तद्देहपर्याप्तमन्नमत्तुं शक्ता भवामस्तादृशमायतनं[4] शरीरं नोऽस्मदर्थं प्रजानीह्यवधारय[5] संपादयेत्यर्थः। ततः परमेश्वरस्ताभ्यो देवताभ्यो भोगाय गां गोदेहमानयत्। ताश्च देवता अब्रुवन्नोऽस्माकमयं देहो नैवालमुपरितनानां दन्तानामभावेन दूर्वादिमूलस्योत्खातुमशक्यत्वादतोऽयमपि गोदेहस्तिष्ठतु। इतोऽन्य[6]मप्युभयतोदन्तं देहं सृजेत्येवमब्रुवन्। ततः परमेश्वरस्तदर्थमश्वमानयत्ताश्च देवता विवेकज्ञानाभावादयमश्वदेहोऽपि न पर्याप्त इत्युक्तवत्यः। ततः परमेश्वरस्तदर्थं[7] विवेकसंपन्नं पुरुषदेहमानयत्। ताश्च देवतास्तावता परितुष्टा आश्चर्यवाचकेन बतशब्देन स्वकीयपरितोषं सूचयन्त्यः सुष्ठु कृतं परमेश्वरेणेत्यब्रुवन्। यस्मान्मनुष्यदेह एव विवेक[8]संपन्नः। तथा च पूर्वमुदाहृतम्—"पुरुषे[9] त्वेवाऽऽविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नः" इति। तस्मान्मनुष्यदेह एव सुकृतमित्यनेन शब्देन परितोषद्योतकेन वक्तुं योग्यः।

ईश्वरसृष्टेषु भोगक्षमशरीरेषु देवतानां प्रवेशायेश्वरप्रेरणं दर्शयति—

ता अब्रवीद्यथायतनं प्रविशतेति, इति।

यस्मिन्नायतने छिद्रे यदिन्द्रियमुत्पन्नं या चाभिमानिनी देवतोत्पन्ना तदायतनमनतिक्रम्य हे देवताः प्रविशत।

इत्थमनुज्ञातानां देवतानां प्रवेशं दर्शयति—

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्, इति।

योऽयमग्निर्वागिन्द्रियाभिमानी देवः सोऽयं वाग्भूत्वा[10] वाच्यन्तर्भूय मुखाच्छिद्रं प्राविशत्। एवमुत्तरत्रापि योज्यम्। न खलु वागादिष्विन्द्रि-

१ ग. °वता एनं स्र° । २ ग. °रं तं प° । ३ ङ. °देहे प° । ४ क. ख. ग. घ. च. °नं नोऽ° । ५ ग. घ. °नी हि संपादयावधारये° । ६ ख. °न्यमुभ° । ७ ख. °दर्थे वि° । ८ ख. ग. °कज्ञानसं° । ९ घ. °रुषत्वे° । १० ङ. च. वागिन्द्रिय एवान्त° ।

येष्वग्न्यादिदेवताः प्रत्यक्षमुपलभ्यन्ते। नापि देवताभिरप्रेरितानामिन्द्रियाणां स्वस्वविषयग्रहणसामर्थ्यमस्ति। एतच्च भगवता व्यासेन सूत्रितम्—"ज्योतिराद्यधिष्ठानं तु तदामननात्" [ ब्र० सू० अ० २ पा० ४ सू० १४ ] इति। ज्योतिरादिभिरग्न्यादिदैवतैराधिष्ठानं वागादीन्द्रियाणां प्रेरणमभ्युपगन्तव्यम्। कुतः। तदामननात्तस्य देवताप्रेरणस्याग्निर्वाग्भूत्वेत्यादिना श्रूयमाणत्वात्। यथाऽयं विचारो द्वितीयाध्यायस्य चतुर्थपादे चिन्तितः। एवमन्येऽपीन्द्रियविषयविचारास्तस्मिन्नेव पादे द्रष्टव्याः।

क्षुत्पिपासयोर्विराड्देहे नियतस्य स्थानविशेषस्य पूर्वमश्रवणात्कृत्स्नशरीरे प्रवेशं दर्शयति—

तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति* ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः, इति।

इत्यैतरेयोपनिषद्यात्मषट्के द्वितीयः खण्डः ॥ २ ॥

उपनिषत्क्रमेण प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

इति ऋग्ब्राह्मणारण्यककाण्डान्तर्गतद्वितीयारण्यके चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥

ये क्षुत्पिपासे परमेश्वरेण विराड्देहे संयोजिते ते उभे परमेश्वरं प्रति स्वार्थं स्थानविशेषमनुगृहाणेत्यब्रूताम्। ईश्वरस्तु स्थानविशेषमदृष्ट्वा वामुभे अप्येतास्वेवाग्न्यादिदेवतास्वाभजामि, ततस्तास्वेव भागिन्यौ विषयभागयुक्ते करोमीत्यब्रवीत्। यस्मादेवमीश्वरेणोक्तं तस्माल्लोके यस्यै कस्या अग्न्यादिदेवतायै हविर्गृह्यते भोग्यं वस्तु समर्प्यते, अस्यामग्न्यादिदेवतायामेते क्षुत्पिपासे भागयुक्ते एव भवतः। अग्निवाय्वादिदेवतानां शरीरेष्वप्याहारस्वीकारे क्षुत्पिपासयोरेव तृप्तिर्भवति। तथा मनुष्यशरीरेऽपि चक्षुरादिदेवतायै हविःस्वीकारे क्षुत्पिपासे तृप्यतः। यदा पात्रे पतितं समीचीनमन्नमत्तुकाम आदरेण पश्यति तदानीं भोग्यस्य प्रत्यासन्नत्वपरितोषेण मनसि तृष्णा शान्तेव भवति न तु यथापूर्वं बाधते। एवमत्यन्तप्रियान्नवार्ताश्रवणस्पर्शनादौ यथोचितं

---

* °ति स ते, इत्यपि क्वचित्पुस्तके पाठः।

---

१ ख. ग. ङ. च. °रनभिप्रे°। २ ख. प्रेता°। ३ घ. °मभ्युप°। ४ ग. °भ्युपेतव्य°। ५ क. ख. ग. च. °से धिभा°। ६ ख. ग. °न्नत्वात्परि°। ७ ङ. शान्तैव। ८ ग. °तं क्षुद्विनाशो द्र°।

तृप्तिलेशो द्रष्टव्यः । तदेवं[1] सर्वदेवतासु क्षुत्पिपासयोर्भो(र्मा)गोपेतत्वम् ।

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥

यानि भोगाधिष्ठानानि[2] गवाश्वपुरुषशरीराणि यानि च भोगकरणानि वह्न्यादिदेवताधिष्ठितानि वाक्चक्षुरादीनि[3] गवादिदेहेषु प्रविष्टानि तानि सर्वाण्यभिधाय भोग्यसृष्टिमभिधत्ते—

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति
सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत
या वै सा मूर्तिरजायतान्नं वै तत्, इति ।

स परमेश्वरः पुनरप्येवं विचारितवान् । ये पृथिव्यादिलोका ये च लोकपालाः सर्वेन्द्रियशरीरदेवतारूपास्ते सर्वेऽपीमे सृष्टाः खलु । अतः परमेश्वरस्तेषामन्नमन्तरेण जीवनासंभवादेतदर्थमन्नं स्रक्ष्यामीति विचार्यान्ननिष्पादनार्थं तत्कारणभूतानि जलप्रधानानि पञ्च[4] महाभूतान्यभ्यतपत् । सर्वतः पर्यालोचनमकरोत् । ईदृशाज्जलसहितात्क्षेत्राद्व्रीह्यादयो जायन्तां स ईदृशानि मूषकादिशरीराणि मार्जारादीनामन्नभूतानि जायन्तामित्येवं संकल्पं कृतवान् । ताभ्योऽद्भ्यो जलोपलक्षितभूतेभ्यो व्रीहियवादिरूपा मूषकादिरूपा च मूर्तिरजायत । तत्र व्रीहियवादिमूर्तिर्मनुष्यादीनामन्नं तैरद्यमानत्वात्तथा मूषकादिमूर्तिर्मार्जारादिभिरद्यमानत्वात्तेषामन्नम् ।

अन्नसृष्टिमुक्त्वाऽन्वयव्यतिरेकाभ्यां तत्स्वीकारसाधनं निश्चिनोति—

*तदेनत्सृष्टं पराङ्त्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत्तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्तदपानेनाजिघृक्षत्तदावयत्; इति ।

---

* "तदन्नं सृष्टम्" "तदेतदभिसृष्टम्" इति च क्वचित्पुस्तके पाठः ।

---

१ ग. ङ. °देतत्सर्वं° । २ ङ. °गाद्यधि° । ३ ख. घ. °नि दे° । ४ ख. ग. घ. °ञ्च भू° ।

यत्सृष्टमन्नं व्रीहियवादिकं मूषकादिकं च तत्र व्रीह्याद्यन्नस्य स्वकीयवधविषये विवेकज्ञानाभावाद्गन्तुमसमर्थत्वाच्च नास्ति जनात्पलायनम् । यत्तु मूषकादिरूपं तदन्नं तदेनन्मार्जारादीनां भोक्तृणां स्ववधहेतुत्वं निश्चित्य तेभ्यः पराङ्मुखं सदत्यजिघांसदतिशयेन हन्तुं गन्तुमैच्छत्पलायितुं प्रारभतेत्यर्थः । पलायितुमुद्युक्तं तन्मूषकादिरूपमन्नं दृष्ट्वा भोक्तृवर्गो मार्जारादिर्वागिन्द्रियेण ग्रहीतुमैच्छत् । ततः सर्वप्रयत्नेन वागिन्द्रियं प्रयुञ्जानोऽपि तेन तदन्नं ग्रहीतुं नाशक्नोत् । इदानींतनोदाहरणेन सृष्टिकालीना तदशक्तिः स्पष्टी क्रियते । स भोक्तृवर्ग आदिसृष्टिकाले यद्येतन्मूषकादिरूपमन्नं वाचा गृह्णीयात्तदेदानीमपि भोक्ता तदन्नवाचकैः शब्दैरीदृशमित्युक्तिमात्रेण तृप्तो भवेत् । न हि वागिन्द्रियस्याभिधानव्यतिरेकेणाऽऽकर्षणसामर्थ्यं किंचिदस्ति । न चैवमन्नवाचकशब्दोच्चारणमात्रेण तृप्तिर्दृश्यते । तस्मात्सृष्टिकालेऽपि वाचोऽन्नस्वीकारे सामर्थ्यं नास्तीत्यनुमेयम् । प्राणेन घ्राणेन्द्रियेणैतदारभ्य शिश्नान्तेषु षट्सु पर्यायेषु पूर्ववद्व्याख्येम् । अभिप्राण्याऽऽघ्रायेत्यर्थः । अत्रापानशब्देनान्नस्य मुखबिलादन्तःप्रवेशनरूपं निगरणं कुर्वन्नन्तर्मुखो यो वायुः सोऽभिधीयते । तेनापानेन तदन्नं ग्रहीतुमैच्छत्ततस्तदन्नमावयज्जग्राहाशितवान् ।

अन्वयव्यतिरेकाभ्यां वायोरेवान्नग्रहणे साधनत्वं निश्चित्य दार्ढ्यार्थं वायुं प्रशंसति—

सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः, इति ।

मुखबिलादन्तःसंचारी वायुरिति यदस्ति स एषोऽन्नस्य ग्रहो ग्राहकः। अयमर्थोऽस्मदनुभवसिद्ध इत्यर्थः । किंचायं वायुरन्नायुर्वा अन्नद्वारेणाऽऽयुष्यहेतुरेव । अन्नरसेन हि प्राणो देहे बध्यते । अत एव वाजसनेयिनः शिशुब्राह्मणे प्राणवर्णनप्रस्तावे—"अन्नं दाम" इतिवाक्येनान्नस्य प्राणबन्धनरज्जुत्वमामनन्ति । तथाऽन्नबन्धनशैथिल्ये सति जीवस्य देहपरित्यागं सदृष्टान्तमामनन्ति—तद्यथाऽऽम्रं वौदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्यते" इति । अन्नबन्धनप्रयुक्तस्य प्राणावस्थानस्याऽऽयुर्हेतुत्वं लोके प्रसिद्धं कौषीतकिनः

---

१ ङ. °षयवि । २ ग. °तदेतदन्नं मार्जा° । ३ ख. घ. °देतन्मार्जा° । ४ ङ. °देव मार्जा° । ५ ग. °मुद्यतं त° । ६ ङ. °दन्नश° । ७ ख. ग. °न्नं सृष्टिकाले वा° । ८ ङ. °कारसा° । ९ ख. ग. घ. ङ. °हणसा° । १० ख. ग. °वेऽन्नमदा° ।

समामनन्ति—"यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः" इति। तदेत्सर्वमभिप्रेत्याम्नायुर्वा एष इत्युच्यते।

भोगाधिष्ठानभोगसाधनभोग्यभोगानां सृष्टिमभिधाय भोगस्वामिनं दर्शयितुमीश्वरस्य विचारमाह—

स ईक्षत कथं न्विदं मदृते स्यादिति, इति।

यदिदं देहेन्द्रियतदभिमानिदेवतदीयान्नतत्स्वीकाररूपं व्यवहारजातमस्ति तदिदं सर्वं मदृते भोगस्वामिनं जीवरूपं मां विना कथं नु नाम स्यान्न कथंचिदुपपद्यते। न हि नगरस्वामिनं राजानं विहाय पुरस्य पौरजनानां वा रचना शोभते। तस्माद्भोगस्वामिना मया जीवरूपधारिणा देहे प्रवेष्टव्यमित्यर्थः।

प्रवेशद्वारविचारं दर्शयति—

स ईक्षत कतरेण प्रपद्या इति, इति।

द्वावत्र प्रवेशमार्गौ पादाग्रं मूर्ध्नि ब्रह्मरन्ध्रं च। तयोर्मध्ये कतरेण केन मार्गेण प्रपद्ये प्रविशानि।

कथं न्विदमितिवाक्येन जीवप्रवेशस्य देहेन्द्रियादिव्यवहारपालनरूपं प्रयोजनं विचारितम्। इदानीमात्मबोधस्वरूपस्य प्रयोजनान्तरस्य विचारं दर्शयति—

स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं
यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं
यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन
विसृष्टमथ कोऽहमिति, इति।

मां स्वामिनमनपेक्ष्य वागादयोऽभिवदनादिव्यापारेषु स्वतन्त्राः कर्तारः स्युस्तदानीमहं को नाम स्यां न कोऽपि भवेयम्। अस्ति कश्चिद्देहादिव्यतिरिक्तश्चिदात्मा स च परब्रह्मस्वभाव इत्येवं कश्चिदपि न जानीयात्। यदा त्वहमेव सर्वव्यापाराणां कर्ता वागादयस्तु मया प्रेरिताः सन्तोऽभिवदनादिक्रियाः कुर्युस्तदानीं वागादिकरणको व्यापारः सकर्तृको भवितुमर्हति क्रियात्वाल्लोकप्रसिद्धगमनादिक्रियावदिति मम सद्भावोऽनुमातुं शक्यते। सोऽयमनुमानेनाऽऽत्मसद्भाव उषस्तब्राह्मणे समा-

१ क. ख. ग. घ. °धतादौ त°। २ ग. घ. °न्ध्रं चेति। त°। ३ ङ. °श्चिदेष देहा°। ४ घ. °वैव्यवहारा°। ५ घ. °गव्या°। ६ ङं. च. °द्भवासना°।

ज्ञायते—" यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" इति । तस्मा-
दात्मबोधोऽपि जीवरूपप्रवेशस्य प्रयोजनम् । तदेतदभिप्रेत्यान्यत्र श्रूयते—
"रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" [इति] । इति
प्रवेशद्वारं देहेन्द्रियादिपालनस्वात्मावबोधरूपप्रवेशप्रयोजने च विचा-
रितवान् ।

अथ प्रवेशं दर्शयति—

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, इति ।

पूर्वं प्रपदाभ्यां प्रापद्यतेत्यत्र प्राणरूपक्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशोऽभिहितः । इदानीं ज्ञानशक्त्युपाधिकस्य मूर्धमध्यस्थितच्छिद्रप्रवेशोऽत्राभिधीयते । यथोक्तविचारोपेतः स परमेश्वर एतमेव मूर्धमध्यभागमेव कपालसंधिरूपं सीमानं स्थानविशेषं विदार्य च्छिद्रं कृत्वा तच्छिद्ररूपद्वारा ज्ञानशक्तिसहितः सन्देहमध्ये प्राविशत् । यस्माज्ज्ञानोपाधिकस्य मूर्धमध्ये प्रवेशस्तस्मान्मूर्धनि ज्ञानेन्द्रियबाहुल्यमुपलभ्यते । क्रियाशक्त्युपाधिकस्य पादाग्रप्रवेशात्कण्ठादधोभागे कर्मेन्द्रियबाहुल्यमुपलभ्यते

मूर्धगतं प्रवेशद्वारं प्रशंसति—

सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् , इति ।

अक्षिश्रोत्रादिगोलकानां भृत्यादिस्थानीयैश्चक्षुरादीन्द्रियैरधिष्ठितत्वात्स्वामिनः स्वस्य प्रवेशार्थमसाधारणं किंचिद्द्वारमपेक्षितमित्यभिप्रेत्य प्रीतिपूर्वकं विदारितत्वादिकमुत्कर्षं प्रकटयितुं तस्य द्वारस्य विदृतिरिति नाम संपन्नम् । तेन द्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानन्दहेतुत्वेन तदेतद्द्वारं नान्दनमित्युच्यते ।

शरीरे प्रविष्टस्य संचारस्थानानि तेष्ववस्थाविशेषांश्च दर्शयति—

तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावस-
थोऽयमावसथोऽयमावसथ इति, इति ।

यथा महाराजस्य क्रीडार्थमुपर्यधोभागेन वर्तमानाः प्रासादस्य भूमयो निर्मीयन्त एवमस्याऽऽत्मनः शरीरमध्ये क्रीडार्थं त्रय आवसथास्त्रीणि स्थानानि निर्मितानि । त्रिषु स्थानेषु च त्रयः स्वप्नास्तेनाऽऽत्मनाऽवलो-

१ ख. ग. घ. °ञ्ज्ञातः । यः° । २ ग. इत्यादि । त° । ३ ग. °वप्र° । ४ ङ. च. °च्छिद्रे प्र° । ५ ङ. °च्छिद्ररूपया । द्वा° । ६ च. °पया द्वा° । ७ ङ. घ. °दाग्रे प्र° । ८ घ. °लक्ष्यते । ९ ग. °त्वात्प्रधिक° । १० ग. °दस्थसू° ।

क्ष्यन्ते। अयमावसथ इत्यादिना नेत्रकण्ठहृदयाख्यानि स्थानानि हस्ताग्रेण प्रदर्श्यन्ते। तेषु हि जागरणाद्यवस्थानां निष्पत्तिः।

तथा च ब्रह्मोपनिषद्याम्नायते—

"नेत्रे[1] जागरितं विद्यात्कण्ठे स्वप्नं समादिशेत्।
सुषुप्तं हृदयस्थं[2] तु तुरीयं मूर्ध्नि संस्थितम्" इति।

जागरितादीनां महाराजस्य प्रासादत्रय[3]क्रीडावज्जीवक्रीडारूपत्वं कैवल्योपनिषद्याम्नायते—

"स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति।
स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके॥
सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः॥
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्" इति।

ननु जागरणसुषुप्तयोः स्वप्नादन्यत्वे[4] त्रयः स्वप्ना इत्ययुक्त[5]मिति चेत्। न। स्वप्नलक्षणोपेतत्वात्। विद्यमानवस्तुतत्त्वं तिरोधाय समुत्पन्नोऽन्यथा प्रतिभासः स्वप्न इति तल्लक्षणम्। जागरणसुषुप्तयोरपि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानेनान्यथाभूतस्य जीवतत्त्वस्य[6] चावभास इत्यस्ति तल्लक्षणम्। तस्माल्लोकप्रसिद्धस्य स्वप्नस्यैकत्वेऽपि लक्षणासिद्धाः स्वप्नास्त्रयः। त्रय आवसथा इत्यनेन पितृशरीरमातृशरीरस्वशरीररूपाणि[7] त्रीणि स्थानानि[8] च विवक्ष्यन्ते। तथा चोपरितनाध्याये प्रपञ्चयिष्यते। संसारो द्विविधः—दैनंदिनव्यवहारो जन्मान्तरस्वीकारश्चेति। तत्र दैनंदिनव्यवहारस्य नेत्रादीनि स्थानानि[9] जन्मान्तरव्यवहारस्य तु पितृ[10]शरीरा[11]दिस्थानानीति विवेकः। इतिशब्दः संसाररूपा[12]ध्यारोपप्रकरणस्य समाप्त्यर्थः।

अथापवादप्रकरणार्थं संक्षिप्य दर्शयति—

स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति
स एतमेव पुरुषं ब्रह्म ततममपश्यत्, इति।

स परमात्मा जातो देहप्रवेशेन जन्ममरणजागरणस्वप्नसुषुप्तिभिः संसारीभूतः सन्कदाचिदीश्वरानुग्रहाद्गुरुशास्त्रप्रसादेन च भूतान्याका-

१ ङ. च. नेत्रस्थं जा°। २ ङ. च. °स्थं स्विति। ३ ङ. °त्रये क्री°। ४ ग. °त्वे कथं त्र°। ५ ख. ग. इत्युक्त°। ६ क. ख. °स्य जीवत्वस्याव°। ७ ङ. च. °णि वा त्री°। ८ ङ. °नि लक्ष्य°। ९ घ. °नि वि°। १० ङ. च. °त्मातृस्त्रीयश°। ११ ङ. च. °राणि स्था°। १२ ङ. च. °रूपस्याध्या°।

शादीनि प्राणिनश्चाभिव्यैरव्यत् । सर्वतो विवेकेन ज्ञातवान् । दृश्यमानान्याकाशादीनि भूतानि प्राणिदेहाश्च कुत उत्पद्यन्ते केन वा रक्ष्यन्ते कस्मिन्वा प्रलीयन्त इत्येवं शास्त्रं विविच्य सर्वस्य संसारस्य मायाकल्पितत्वाद्ब्रह्मैव सर्वस्यापि वस्तुतत्त्वं तस्मादिह जगति किंवा वस्तु ब्रह्मणोऽन्यद्भावदिषद्वदिष्यामि न किंचिदपि ब्रह्मव्यतिरिक्ततया वक्तुं शक्नोमीति निश्चित्य स जीव एतमेव शरीरे प्रविष्टं पुरुषं चिद्रूपं देहादिसाक्षिणं ब्रह्मापश्यद्ब्रह्मत्वेन निश्चितवान् । कीदृशं ब्रह्म ततमम् । एकस्तकारो लुप्तः । अतिशयेन ततं विस्तृतं तततमम् । दृश्यस्य सर्वस्य जगतो द्रष्टुर्जीवस्य च ब्रह्मैव तत्त्वमित्यपवादप्रकरणस्य सर्वस्य तात्पर्यार्थः ।

यथोक्तं ब्रह्मसाक्षात्कारं नामनिर्वचनेन प्रशंसति—

इदमदर्शमितीँ ३ । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः, इति ।

इत्यैतरेयोपनिषद्यात्मषट्के तृतीयः खण्डः ॥ ३ ॥
उपनिषत्क्रमेण प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

## इत्यैतरेयोपनिषदि प्रथमोऽध्यायः ॥ १ ॥

इति ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यके चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥
इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

शरीरे प्रविष्टः स जीवात्मा ब्रह्मात्मत्वं साक्षात्कृत्येदमदर्शमितिवाक्येन स्वकीयमपरोक्षानुभवं प्रकटयन्परितुतोष । परितोषद्योतनार्था प्लुतिः । यस्मादिदमदर्शमित्युक्तवांस्तस्मादिदं दृष्टमित्यनयैव व्युत्पत्त्या सोऽयमिदन्द्र इति नाम प्राप्तवान् । तस्य नाम्नो निर्वचनानुसारेण योगत्वप्रसिद्धिं द्योतयितुमिदन्द्रो ह वै नामेत्युक्तम् । न च लोके परमेश्वरमिन्द्रमित्येव व्यवहरन्ति न त्विदन्द्रमिति शङ्कनीयम् । परमार्थतो यथोक्तरीत्येदन्द्रमेव सन्तं परोक्षत्वार्थमेकमक्षरं विलोप्येन्द्र इत्येवं व्यवहृतवान् (वन्तः) । नापि परोक्षत्ववैयर्थ्यं शङ्कनीयम् । यस्माद्देवाः पूज्याः सर्वे स्वकीयं नाम गूढं कृत्वोपाध्याया आचार्या इत्यादिके परोक्षनामन्येव प्रीतिं कुर्वन्ति ।

---

१ ग. अमितो । २ ख. एवमे° । ३ ङ. योगत्व° । ४ ङ. °म् । तस्मा° ।

हिशब्देनास्मिन्नर्थे लोकप्रसिद्धिर्दर्शिता । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति पूर्वाचार्यैः कृत्स्नवेदान्तानां तात्पर्यं संगृहीतम् । तच्चात्र चतुर्थाध्याये विस्पष्टमुदीरितम् । आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषदित्येतन्निष्प्रपञ्चब्रह्मात्मतत्त्वस्य प्रतिपादकं सूत्रम् । तस्य सूत्रस्यार्थमवबोधयितुं स ईक्षत लोकान्नु सृजा इत्यारभ्यायमावसथ इत्यन्तेन ग्रन्थेन कृत्स्नप्रपञ्चस्याध्यारोपः प्रतिपादितः । ब्रह्माण्डस्य मध्ये य एते चतुर्दश लोका यश्चैतांल्लोकानात्मशरीरत्वेनाभिमन्यमानो विराट्पुरुषो यानि च तद्देहच्छिद्रेषूत्पन्नानि वाक्चक्षुरादीन्द्रियाणि याश्च तदिन्द्रियाभिमानिन्योऽग्निवाय्वादित्यादिदेवता यानि च तासां देवतानां भोगयोग्यानि गवाश्वमनुष्यादिशरीराणि यच्च तेषु शरीरेषु प्रविष्टानां देवतानामन्नं यश्च वायुनैव तदन्नस्वीकारो यदपि जीवरूपेण तेषु देहेषु प्रविश्य जागरणाद्यवस्थात्रयस्य शरीरान्तरसंचारस्य चानुभवनं सोऽयं सर्वोऽप्यद्वितीये परमात्मन्यध्यारोपितः प्रपञ्चः । स चाऽऽत्मबोधोपयोग्यः । एतेन हि जगदङ्कुरेण तन्मूलमात्मतत्त्वमस्तीत्यवगन्तुं शक्यम् । एतदेवाभिप्रेत्य च्छन्दोगा आमनन्ति—"अन्नेन सोम्य शुङ्गेनाऽऽपोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति । तदेवमध्यारोपेणाद्वितीयस्याऽऽत्मतत्त्वस्यास्तित्वमात्रं सिद्धम् । तस्याध्यारोपस्यापवादेन तत्त्वस्येत्थंभावो वक्तुं शक्यते । तस्मात्स जातो भूतानीत्यारभ्य परोक्षप्रिया इव हि देवा इत्यन्तेन ग्रन्थेनाध्यारोपस्यापवादः संगृहीतः । तत्राध्यारोपभागे तस्य त्रय आवसथा इति वाक्येन शरीरान्तरसंचारोऽपि संग्रहेण प्रतिपादितः । तदेतत्पितृशरीरं मातृशरीरं

१ ङ. तदेवात्र । २ ख. ग. च. देह° । ३ ख. घ. °ण दे° । ४ ग. बोध उप° । ५ ग. ङ. °भावोऽवगन्तुं श° ।

स्वशरीरमित्येतदावसथत्रयं पञ्चमाध्याये वि[1]वरिष्यते । तत्राऽऽदौ पितृशरीररूपमावसथं दर्शयति*—

ॐ पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः, इति ।

योऽयं शरीरं जिघृक्षुर्जीवात्मा सोऽयं पुरुषे पितृशरीरे प्रथमतो गर्भो भवति । न चात्र स्त्रीगर्भवदुदरवृद्ध्या सोऽभिव्यज्यते । किंतु यदेतत्पितृशरीरे सप्तमधातुरूपं रेतोऽस्ति तदेव गर्भ इत्युच्यते । तस्मिन्रेतसि जनिष्यमाणस्य जीवस्य प्रविष्टत्वात् । स्वर्गाद्वा नरकाद्वा वृष्टिद्वारा भूमौ समागतो जीवो व्रीहियवाद्यन्नद्वारा पितृशरीरे प्रविशति । एतच्च पञ्चाग्निविद्यायां प्रपञ्चेनाऽऽम्नातम् । तस्मिंश्च पुरुषशरीरेऽन्नरसशोणितमांसादिक्रमेण परिणते रेतस्यवस्थितो भवति । सोऽयं पुरु[2]षे गर्भ इत्युच्यते ।

तस्य गर्भस्य जन्मप्रकारं दर्शयति—

तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म, इति ।

पुरु[3]षे गर्भत्वेन व्यवस्थितं यदेतद्रेतोऽस्ति तदेतत्तस्मिन्पुरुषशरीर आपादमस्तकं सर्वे[4]भ्योऽवयवेभ्यः सारभूतं[5] सत्संभूतं निर्गतं भवति । तच्च सर्वावयवनिर्गतं[6] रेतोरू[7]पमन्नसारसात्मानं स्वस्यैव रूपान्तरभूतमात्मन्येव स्वशरीर एवासौ पुरुषो बिभर्ति पोषयति । तत्पोषितं रेतोऽग्निसंपर्केण घृतमिव कामाग्निना विलीनं सद्धृदये समागत्य व्यवस्थितं भवति । तादृशं रेतो यदर्तुकालीनगमनेन स्त्रीयोनौ गर्भाशये सिञ्चति, अथ तदानीमयं पुरुष एनज्जीवान्तराविष्टं रेतोरूपं शरीरं जनयति । तदेतद्रेतोनिःसरणरूपमस्यं रेतस्यवस्थितस्य संसारिणो जीवस्य प्रथमं जन्मेत्युच्यते । तस्य त्रय आवसथा इत्युक्तानां मध्ये प्रथमादावसथात्पितृशरीररूपात्संपन्नमिति कृत्वा प्रथमं जन्म भवति ।

ननु स्त्रीशरीरे प्रविष्टं परकीयं रेतः स्त्रिया उपद्रवकारि स्याच्छरीरलग्नबाणादिवदित्याशङ्क्याऽऽह—

तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति, इति ।

---

* एतदग्रे च. पुस्तके " अपक्रामन्तु गर्भिण्यः " इत्यधिकम् ।

---

१ क. ङ. विचारयिष्य° । २ क. ख. ग. °रुषग° । ३ ङ. °रुषग° । ४ क. ङ. °तं तस्सं° । ५ ख. घ. °तं यत्सं । च. °तं नि° । ६ ङ. °तोभूतं सा° । ७ च. °रूपं सा° ।

स्त्रीयोनौ प्रविष्टं तत्पुरुषरेतस्तस्याः स्त्रिया आत्मभूयं स्वशरीरभावं गच्छति, यथा स्वमङ्गं हस्तादिकं न शरीरात्पृथग्भूतं तद्वत् । तस्मात्स्वशरीरत्वेनैकीभावात्कारणादेनां स्त्रियं न हिनस्ति, उदरलग्नबाणवद्धिंसां न करोति ।

तद्गर्भद्वारेण स्त्रीपुरुषयोः परस्परमुपकार्योपकारकभावं दर्शयति—

सा॒ऽस्यै॒तमा॒त्मान॒मत्र॒ ग॒तं भा॑वयति॒ सा
भा॒व॒यि॒त्री भा॑वयि॒तव्या॑ भवति, इति ।

सा गर्भधारिणी स्त्र्यत्र गतं स्वशरीरे प्रविष्टमस्य पुरुषस्य रेतःसेक्तुरेतमात्मानं पुत्ररूपं भावयति परिपालयति । विरुद्धाशनादिपरित्यागोऽनुकूलान्नाद्युपयोगश्च परिपालनम् । यस्मात्सा स्त्री गर्भपरिपालनेन भावयित्री पुरुषस्यैव पालयित्री तस्मात्कारणात्तेन पुरुषेण सा स्त्री भावयितव्याऽभीष्टान्नपानवस्त्रादिप्रदानेन पालयितव्या भवति ।

स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारकत्वं दर्शयति—

तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति, इति ।

तं पुत्ररूपं गर्भं मातृरूपा स्त्र्यत्यन्तं प्रयासं सोढ्वा नव दश वा मासान्स्वोदरे धारयित्वा पोषयति । स च पिताऽग्र एव प्रसवात्प्रागेव निष्पन्नं कुमारं जन्मनोऽग्रे प्रसवादूर्ध्वमधिभावयति । अधिकत्वेन शास्त्रीयजातकर्मादिना संस्कारं करोति ।

कुमारसंस्कारेण पितुरुपयोगं दर्शयति—

स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति, इति ।

पुत्रसंस्कार इति यदस्ति तेन पिता स्वस्यैव संस्कारं करोति । पुत्रस्य स्वदेहरूपत्वात् ।

तथाचान्यत्र श्रूयते—

"पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते" इति ।
"आत्मा वै पुत्रनामाऽसि" इति च ।

ननु पुरुषस्योपनयनादिना स्वकीयसंस्कारः पूर्वमेव संपन्नः किमनेन पुत्रसंस्कारेण पुत्रोत्पादनेन चेत्यत आह—

एषां लोकानां संतत्या एवं संतता हीमे लोकाः, इति ।

---

१ न स्वश° । २ ङ. पुरुषरू° । ३ क. ख. ग. घ. °ण स्त्री । ४ ङ. पुरुषं । ५ ङ. पुरुषरू° ।

पुत्रपौत्रादय इमे जना लोकास्तेषां लोकानामविच्छेदार्थं संस्कृतपुत्रोत्पादनम्। अनेन पित्रा स्वोत्पादिते पुत्रे संस्कृते सति तथैव पुत्रोऽप्यन्यं पुत्रमुत्पाद्य संस्करोति सोऽप्यन्यं पुत्रमित्येवमिमे लोका अविच्छिन्ना भवन्ति। अन्यथा विच्छिद्येरन्।

मातृशरीरान्निर्गमनस्य पूर्वोक्तजन्मापेक्षया द्वितीयत्वं दर्शयति—

तदस्य द्वितीयं जन्म, इति।

जनकस्य पुत्रप्रयुक्तमुपयोगं दर्शयति—

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते, इति।

अस्य पितुर्द्वावात्मानौ देहौ तयोर्मध्येऽयमात्मा पुत्ररूपो देहः पुण्येभ्यः कर्मभ्यः शास्त्रोक्तकर्मनिष्पादनार्थं प्रतिधीयते स्वस्य प्रतिनिधित्वेन गृहेऽवस्थाप्यते।

ननु किमनेन प्रतिनिधिना स्वयमेव कुतो न करोतीत्यत आह—

अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति, इति।

अस्य पितुरितर आत्मा स्थविरो देहः कृतकृत्यः, कृतान्येतज्जन्मप्रयुक्तानि सर्वाणि कृत्यानि येनासौ कृतकृत्यः। लौकिकानां कुटुम्बपोषणादीनां शास्त्रीयाणामग्निहोत्रादीनां च निष्पादितत्वात्कृतकृत्यत्वम्। वयोगतो वयसा पूर्वकर्मसंपादितेनाऽऽयुषा हीनः प्रैति म्रियते। अतः पुत्रदेहेनैव पुण्यं कर्तव्यं न तु मृतेन पितुर्देहेन कर्तुं शक्यम्।

पूर्वोक्तजन्मद्वयमपेक्ष्य जन्मान्तरं दर्शयति—

स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म, इति।

स वृद्धः पितेतोऽस्माज्जरठदेहात्प्रयन्नेवं निर्गच्छन्नेव स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेण पुनर्जायते। न त्वस्माद्देहान्निष्क्रान्तस्य जन्मान्तराय कालव्यवधानमस्ति। अस्मिन्नेव शरीरे स्थित्वा मनसा देहान्तरं स्वीकृत्य पश्चादमुं देहं परित्यजति। यथा तृणजलूका मुखेन तृणान्तरमवष्टभ्य ततः पृष्ठभागमुपसंहरति तद्वत्। तथा च वाजसनेयिनः समामनन्ति—"तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्र-

१ °पौत्रप्रपौत्रा°। २ ङ. पुनः। ३ क. °व गच्छ°। ४ क. °र्गे लोके न°। ५ ग. °जलूका°। ६ ङ. °लायूका।

स्याऽऽत्मानमुपसंहरति " इति । तद्यथोक्तं पुनर्जन्मरूपमस्य संसारिण आत्मनस्तृतीयं जन्मेत्युच्यते । यद्यपि पूर्वोक्तं जन्मद्वयं पुत्रदेहस्येदं तु देहान्तरस्य तथाऽपि पितृपुत्रोपाध्योरेव भिन्नत्वादुपाध्युपलक्षितस्याऽऽत्मन एकत्वमभिप्रेत्यैकस्य जन्मत्रयमित्युपचर्यते यद्वा पितुः सकाशाद्रेतोरूपेण मातुः सकाशात्कुमाररूपेण च पुत्रे यज्जन्मद्वयमुदाहृतं तेनैव न्यायेन पितुरपि स्वकीयपितृमातृसकाशाज्जन्मद्वयमर्थादुक्तमित्यभिप्रेत्य तदपेक्षया पितुरिदं तृतीयं जन्म । पुत्रस्य तु जन्मद्वयं साक्षाद्दृष्टं पितृदृष्टान्तेन तु मरणादूर्ध्वं तृतीयं जन्म भविष्यति । एवं सर्वस्यापि जन्मत्रयं पुनः पुनरावर्तते । अनेन जन्मत्रयोपवर्णनेन संसाराद्विरक्तिरुपजायते न हि मातृपितृमलद्वयरूपदेहस्य निरन्तरं धारणादन्यदधिकं जुगुप्सितं वैराग्यकारणमुदाहर्तुं शक्यम् ।

अत एव विष्णुपुराणे पठ्यते–

"स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते " इति ।

तस्यैतस्य जुगुप्सितस्य संसारस्य ज्ञानमन्तरेण विनाशाभावं तत्त्वज्ञानेन निवृत्तिं च द्योतयितुं मन्त्रमुदाहरति—

तदुक्तमृषिणा, इति ।

पुरुषे ह वा इत्यारभ्य तृतीयं जन्मेत्यन्तेन ग्रन्थेन संसारस्य यत्कष्टत्वमुपवर्णितम् , यच्च संसारनिवर्तकं तत्त्वज्ञानमुत्तरत्र विवक्षितं तदुभयमेप्यर्थजातं केनचिन्मन्त्रेणाभिहितम् ।

तमेतं मन्त्रं पठति—

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति, इति ।

अहं वामदेवाख्यो मुनिर्गर्भे नु मातुर्गर्भ एवावस्थितः सन्नेषामग्निवाय्वादित्यादीनां देवानां विश्वा जनिमानि सर्वाण्यपि जन्मान्यन्ववेदमनुक्रमेण विदितवानस्मि । मुखाद्वाग्वाचोऽग्निरित्यादिश्रुतिप्रतिपादितं परमात्मना संपादितं देवानां जन्म ज्ञातवानस्मि । औपनिषदमात्मज्ञानं

१ ङ. °जेननरू° । २ ग. °स्य देहस्य सं° । ३ ग. °यमुक्त° । ४ ग. °ताच्छृतं पि° । ५ ग. घ. °मर्थे° । ६ ग. °मेव म° ।

मम संपन्नमित्यर्थः । अध एतस्माज्ज्ञानोदयादधस्तान्मां वामदेवमायसी-लौहनिर्मितशृङ्खलासमानाः शतं पुरः शतसंख्यानि शरीराण्यरक्षन्यथा कारागृहेऽवस्थापितं तस्करं प्रबलं बद्धशृङ्खलाः पलायनाद्रक्षन्त्येवं शतसंख्योपलक्षितान्यनन्तानि शरीराणि यथाऽहं मुक्तो न भवामि तथैवारक्षन् । इदानीं गुरुशास्त्रप्रसादाल्लब्धतत्त्वविद्यायुक्तोऽविद्यामयात्संसाराच्छ्येन इव जालं भित्त्वा जवसा निरदीयं त्वरया निर्गतोऽस्मि । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वान-स्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वा-न्कामानाप्त्वाऽमृतः समभवत्समभवत् , * इति ।

इत्यैतरेयोपनिषद्यात्मषट्के चतुर्थः खण्डः ॥ ४ ॥

उपनिषत्क्रमेण द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥

## इत्यैतरेयोपनिषदि द्वितीयोऽध्यायः ॥ २ ॥

इति ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥

इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके पञ्चमोऽध्यायः ॥ ५ ॥

अहमिति मन्त्रे योऽभिहितः स वामदेवो मातृगर्भ एव शयानः सन्नेतत्पूर्वोक्तं मन्त्रार्थजातमेवमुवाच । स वामदेव एवं मन्त्रार्थोक्तप्रकारेणाऽऽत्मतत्त्वं विद्वान्प्रारब्धकर्मणि क्षीणे सत्यस्माच्छरीरभेदाद्देहविनाशादूर्ध्वमुत्तरकालेऽवस्थितः सर्वस्मात्संसारबन्धादुत्क्रम्यामुष्मिन्निन्द्रियागोचरे स्वर्गे सुष्ठु तत्त्वज्ञानेनार्जिते लोके स्वप्रकाशत्वेनावलोक्यमाने स्वरूपे सर्वान्कामांस्तैत्तिरीयोक्तान्सार्वभौमादिहिरण्यगर्भपर्यन्तान्सर्वानानन्दानाप्त्वा परमानन्दस्वरूपब्रह्मात्मत्वेन प्राप्यामृतो मरणरहितः समभवत् । यद्यपि गर्भे गुरुशास्त्रोपदेशो नास्ति तथाऽपि जन्मान्तरोपदेशस्य केनचित्प्रतिबन्धककर्मणा तदानीं प्रतिबद्धस्य गर्भे प्रतिबन्धक्षयमपेक्ष्य ज्ञानोत्पादकत्वं संभवति । तथा च भगवता व्यासेन सूत्रितम्— " ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् " [ ब्र० सू० अ० ३ पा० ४ सू० ५१ ] इति । प्रस्तुतप्रतिबन्धाभावे सति यस्मिञ्जन्मन्युपदेशस्तास्मि-

* अत्र मूले—" यथास्थानं गर्भिण्यः । " इत्यधिकं वर्तते ।

१ ङ. च. °रीयप्रोक्ता° । २ ङ. च. °रप्रबलक° ।

न्नेव जन्मनि ज्ञानं भवति । अन्यथा जन्मान्तरे । कुतः । वामदेवे तद्दर्शनादिति सूत्रार्थः । यद्यपि मुक्तौ कामा विषयानन्दा न सन्ति तथाऽपि विषयानन्दानां ब्रह्मानन्दैकदेशत्वेन तस्मिन्नन्तर्भावाद्ब्रह्मानन्दप्राप्त्या सर्वकामप्राप्तिरुपचर्यते । तत्त्वज्ञानिनो वर्तमानदेहपातादूर्ध्वं देहान्तरसंबन्धस्याभावेन देहप्राणवियोगरूपस्य मरणस्याप्रसक्तत्वादमृतत्वं द्रष्टव्यम् । समभवदित्यभ्यासोऽध्यायसमाप्त्यर्थः ॥

इत्यैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके पञ्चमोऽध्यायः ॥ ५ ॥

---

अथाध्यारोपप्रकरणे तस्य त्रय आवसथा इतिवाक्येन पितृमातृस्वशरीररूपं संसरणार्थं स्थानत्रयं यदुक्तं तत्पुनः पञ्चमाध्याये वैराग्योत्पत्त्यर्थं पुरुषे ह वा इत्यादिना प्रपञ्चितम् । स जातो भूतान्यभिव्यैख्यदित्यादिनाऽपवादप्रकरणेन यत्तत्त्वज्ञानं संगृहीतं यच्च वामदेवोदाहरणेन ज्ञानफलं संक्षिप्तं दर्शितं तदुभयं विशदीकर्तुं षैष्ठाध्याय आरभ्यते । तत्राऽऽत्मा वा इदमित्यध्यायेन सामान्यतस्तत्त्वमवगत्य पुरुषे ह वा इत्यध्यायोक्तजन्मक्लेशविचारेण परं वैराग्यं प्राप्तानां जिज्ञासूनां विचारं दर्शयति—

ॐ कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा, इति ।

आत्मा वा इदमेक एवाग्र आसीदितिश्रुतौ कश्चिन्निरुपाधिक आत्मा श्रुतः । तथा "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति श्रुतौ कश्चित्सोपाधिक आत्मा श्रुतः । वयं तु प्रतिदिनं प्रतिक्षणमात्मेति यमुपास्महे स कः सोपाधिको निरुपाधिको वेत्यर्थः । उपासनं नाम नैरन्तर्येण तात्पर्यपुरःसरो व्यवहारः । अहं गच्छाम्यहमागच्छामि ममायं देहो ममेदं गृहमिति निरन्तरमादरेणाऽऽत्मव्यवहारो लोके दृश्यते । सोऽयमत्रोपासनत्वेनोपचर्यते । तथा स आत्मा श्रुतावात्मा वा इत्यादिना श्रुतः कतरः सोपाधिकनिरुपाधिकयोर्मध्ये कतरः कोऽसावित्यर्थः ।

ननु कतरः स आत्मेत्ययं विचारोऽस्तु श्रुत्यै(त्ये)कगम्यस्य तस्य विचारमन्तरेणानिश्चयात्, कोऽयमात्मेत्ययं तु विचारो न युक्तः,

---

१ ङ. च. °नन्दलेश° । २ ग. °कलेस° । ३ ङ. च. संक्षिप्य । ४ ङ. षष्ठोऽध्या° । ५ ग. °योक्तं ज° । ६ ङ. °तः । स ।

तस्याहंप्रत्ययगम्यत्वेन प्रसिद्धत्वादित्याशङ्क्य विचारहेतुमनेककोट्यात्मकं संशयं दर्शयति—

येन वा पश्यति येन वा शृणोति येन वा
गन्धानाजिघ्रति येन वा वाचं व्याकरोति
येन वा स्वादु चास्वादु च विजानाति
यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं
मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः
संकल्पः क्रतुरसुः कामो वश इति, इति।

यद्यप्यहंप्रत्ययगम्यश्चैतन्यरूप आत्मेति सामान्याकारेण प्रसिद्धिरस्ति तथाऽपि तद्विशेषे संशयो विद्यते। बाह्यान्तःकरणेषु सर्वेष्वपि चैतन्यं पृथक्पृथगभिव्यज्यते। यथा जलपात्रेषु प्रत्येकं सूर्यादिप्रतिबिम्बस्तद्वत्। तथासति चक्षुरिन्द्रियाभिव्यक्तचैतन्येन देहेन्द्रियादिसंघाताभिमानी लौकिकः पुरुषो नीलपीतादिरूपं पश्यति। अतो येन वा[1] चाक्षुषचैतन्येन पश्यति तच्चैतन्यं किमात्मेत्येका कोटिः। तथा येन श्रोत्राभिव्यक्तचैतन्येन[3] शब्दं शृणोति तत्किमात्मेति द्वितीया कोटिः। एवं घ्राणवाग्जिह्वादीन्द्रियाभिव्यक्तचैतन्यविशेषाणामात्मतत्त्वरूपसंदे[4]हकोटित्वं द्रष्टव्यम्। चैतन्यस्यैव रूपरसादिज्ञापकत्वं कठवल्लीष्वाम्नायते—"येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्। एतेनैव विजानाति" इति। श्रोत्रादीन्द्रियद्वारा विषयग्राहकत्वमभिप्रेत्य तलवकारैरप्याम्नायते—"श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः" इति। वाजसनेयिनोऽपि तत्तदिन्द्रियसाक्षिचैतन्येन तत्तदिन्द्रियद्वारकं विषयग्रहमभिप्रेत्य तत्तदिन्द्रियनाम्ना व्यवहारमामनन्ति—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं[5] मनसो ये मनो विदुः" इति। बाह्येन्द्रियाभिव्यक्तचैतन्येष्वात्मतत्त्वसंशयं[6] दर्शयित्वाऽन्तःकरणद्वयतद्वृत्तिविशेषाभिव्यक्तचैतन्येष्वात्मतत्त्वसंशयमभिप्रेत्य यदेतद्धृदयमित्यादिना तत्तदुपाधिकस्वरूपमुपन्यस्यते। तत्र हृदयं बुद्धिः सा चाऽऽत्मनि कर्तृत्वादिधर्मारोपसाधनत्वादन्तःकरणमित्युच्यते। तस्य च बुद्धिविशिष्टस्य कर्तुरात्मनो रूपा-

---

१ ग. ङ. °न चा°। २ क. वा चक्षुश्चैत°। ३ ख. घ. श्रोत्रेन्द्रियाभि°। ४ ग. °पत्वसं°। ५ ख. ग. ङ. श्रोत्रं मन°। ६ ख. ग. °त्मसं°। घ. °त्मतत्त्वसं°।

दिविषयसंकल्पविकल्पादिसाधनं मन इत्युच्यते । बुद्धिमनसोर्द्वयोरन्तः-करणविशेषयोः समुच्चयार्थश्चकारः । एतदेवान्तःकरणद्वैविध्यमभिप्रेत्य तैत्तिरीयके—"तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा[1] विज्ञान-मयः" इति कोशद्वयमुपन्यस्तम् । तस्य च मनसो वृत्तिविशेष[2] एतत्सं-ज्ञानमित्यादिना प्रपञ्च्यते । यन्मनोऽस्त्येतदेव वृत्तिरूपेण परिणतं[3] सत्सं-ज्ञानमित्युच्यते । सम्यगिदं वस्त्विति ज्ञप्तिः संज्ञानम् । आज्ञानमाज्ञप्ति-रीश्वरभावः । विज्ञानमिदमस्माद्विशिष्टमित्येवमादिविवेकः । प्रज्ञानं ग्रन्थार्थादावुन्मेषः । मेधा ग्रन्थतदर्थधारणा । दृष्टिश्चक्षुर्द्वारा रूपोपल-ब्धिहेतुर्मनोवृत्तिः । धृतिर्धैर्यं प्राप्तायामप्यापदि तद्विशेषगणनाराहि-त्यम् । मतिर्मननं[4] राजकार्याद्यालोचनम् । मनीषा तत्र स्वातन्त्र्यम् । जूतिर्जवः प्राप्तकार्येषु मनसो व्यग्रता । यद्वा जूतिर्मनसो रोगादिजनि-तदुःखित्वम् । स्मृतिरनुभूतार्थवस्तुस्मरणम् । संकल्पोऽसमीचीनेऽपि वस्तुनि सम्यक्त्वेन कल्पनम् । क्रतुरवश्यं करिष्यामीत्यध्यवसायः । असुः प्राणनादि[5]जीवनक्रियानिमित्ता वृत्तिः । कामोऽसंनिहितविषया-काङ्क्षा । वशः स्त्रीव्यतिकराद्यभिलाषः[6] । इतिशब्दः प्रदर्शनार्थः । इत्येवमाद्या अन्येऽपि[7] सात्त्विकराजसतामसवृत्तिभेदा[8] बहवो विचक्षणै-र्द्रष्टव्याः । अत्र सर्वत्र किमेतद्वृत्त्युपहितं चैतन्यमात्मेत्येवं संशयको-टयो योजनीयाः ।

इत्थं संशयमुपन्यस्य निर्णयं दर्शयति—

सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति, इति ।

येन वा पश्यतीत्यादिना क्रतुरसुः कामो वश इत्यन्तेन ग्रन्थेन यान्युपन्यस्तान्येतान्येव सर्वाण्यपि तत्तद्वृत्त्युपाधिद्वारोपलक्षितस्य प्रज्ञानस्य शुद्धचैतन्यस्य नामधेयानि संपद्यन्ते । प्रकृष्टं ज्ञानं प्रज्ञानं चैतन्यं, [ तस्य ] हि स्वतो निर्मलत्वात्प्रकृष्टस्यैवाधमोपाधिसंपर्कवशा-दपकर्षः प्रतीयते । यदा तूपाधिविशिष्टत्वं परित्यज्य तत्तदुपाधिभिरुप-लक्षितं शाखाचन्द्रन्यायेन विविच्यते तदानीमुपाधिकृतस्यापकर्षस्याभा-वात्प्रकर्ष एव परिशिष्यते । तच्च प्रकृष्टं चैतन्यं सर्वेष्वप्युक्तोपाधिष्वनु-गतमिति कृत्वा तस्यैव मुख्यमात्मत्वमिति निर्णयः । उपाधिविशिष्टस्य

---

१ च. °श्चेषा ए° । २ च. °भूच्यन्ते । य° । ३ क. ख. ग. घ. °तं तत्सं° । ४ क. ख. ग. घ. °ननरा° । ५ ङ. च. प्राणादि° । ६ घ. ङ. °व्यक्त्याकारा° । ७ ख. घ. अन्या अपि । ८ ख. घ. °सभेदा वृत्तयो वि° ।

न मुख्यमात्मत्वं शुद्धचैतन्यस्यैव मुख्यात्मत्वमित्ययमेव विवेको बृहदारण्यके—"स एष इह प्रविष्टः" इत्यादिना प्रविष्टं जीवात्मानं प्रकृत्यैवमाम्नायते—"तं न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव" इति। अयमर्थः—देहे नखाग्रपर्यन्तं प्रविष्टं ज्ञानक्रियाशक्त्युपाधिकं तमात्मानं विवेकिनः पुरुषाः स्वात्मतया न पश्यन्ति। हि यस्मात्स आत्मोपाधिविशिष्टः कृत्स्नो न भवति तस्मान्न मुख्यात्मत्वम्। अकृत्स्नत्वमेव कुत इति चेत्तदुच्यते। प्राणन्नेव श्वासं कुर्वन्नेव प्राणोपाधिविशिष्टतया प्राणनामको भवति। न चासौ वागाद्युपाधिविशिष्टेष्वनुगच्छति। एवं वागादिष्वप्येकैकोपाधिना विशिष्ट इतरत्र नानुगच्छति। अभिवदनकाल एव वागुपाधिकः। रूपदर्शनकाल एव चक्षुरुपाधिकः। एवमितरत्रापि। कथं तर्ह्यात्मनः कृत्स्नत्वमित्याकाङ्क्षायां प्राणवागाद्युपाधिवैशिष्ट्यपरित्यागे सति कृत्स्नत्वमित्ययमर्थो बृहदारण्यक एवाऽऽम्नातः—"आत्मेत्येवोपासीतात्र ह्येते सर्व एकी भवन्ति" इति। एवमाद्युपाधिषु चैतन्यविशेषास्ते सर्वेऽपि निरुपाधिक आत्मन्यन्तर्भवन्तीति। यथा जलपात्रगताः सूर्याः सर्वेऽपि तत्कल्पनाधिष्ठानभूते मुख्ये सूर्येऽन्तर्भवन्ति तद्वत्।

तदेवं कोऽयमात्मेत्येतस्मिंस्त्वंपदार्थविचारे निरुपाधिकं साक्षिचैतन्यं प्रज्ञानशब्दाभिधेयमात्मेति निर्णयोऽभिहितः। अथ कतरः स आत्मेत्येतस्मिंस्तत्पदार्थविचारे निर्णयं दर्शयति—

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रम्, इति।

ब्रह्मादिस्थावरान्तं यज्जगदस्ति तत्सर्वं प्रज्ञानेत्रम्। निरुपाधिकत्वेन प्रकृष्टा ज्ञप्तिः प्रज्ञा, नीयते सर्वं जगदनेनेति सृष्टिस्थितिप्रलयव्यवहाराणां मूलकारणं नेत्रं, प्रज्ञैव नेत्रं यस्य जगतस्तत्प्रज्ञानेत्रम्। अशेषजगतो मूलकारणभूतं यच्चैतन्यं तदेव कतरः स आत्मेत्यस्मिंस्तत्पदार्थविचारे मुख्यात्मत्वेन निर्णेतव्यमिति तात्पर्यार्थः। एष ब्रह्मेत्यनेन पुंलिङ्गब्रह्मश-

१ ख. घ. प्रत्यै°। २ ख. घ. एकं भ°।

ब्देन " हिरण्यगर्भः समवर्तताग्रे " इत्यादिशास्त्रप्रसिद्धः प्रथमशरीरी विवक्षितः। तस्य शास्त्रप्रसिद्धिं द्योतयितुमेतच्छब्दः। इन्द्रो देवराजः। प्रजापतिः पूर्वोक्तेन्द्रियतदभिमानिदेवतात्मको विराड्देहः। सर्वे देवा अग्निवाय्वादयः। पृथिव्यादीनि पञ्च महाभूतानि प्रसिद्धानि। इमानि पञ्च महाभूतानीत्येतस्य वाक्यस्य पृथिवीत्यारभ्येत्येतानीत्यन्तं विवरणम्। इमानि चान्यानि क्षुद्रैरल्पकैर्मशकपिपीलिकादिदेहैर्मिश्राणि। इवशब्दोऽनर्थकः। बीजानि कारणानि। मनुष्यादिपिपीलिकान्ताः सर्वे देहाः स्वयं पञ्चभूतकार्याः सन्तः सजातीयदेहान्तरहेतुत्वेन बीजशब्दाभिधेयाः। तेषां बीजानां नानाजातीयत्वमितराणि चेतराणि चेत्यनेन प्रतिज्ञायते। परस्परविलक्षणबहुभेदयुक्तानीत्यर्थः। अण्डजानीत्यादि प्रतिज्ञातमेव नानात्वं प्रपञ्च्यते। पक्षिसर्पादीन्यण्डजानि। जारुजानि जरायुजानि मनुष्यगवादीनि। कृमिदंशादीनि स्वेदजानि। तरुगुल्मादीन्युद्भिज्जानि। यथोक्तेष्वेव जरायुजानामश्वा गावः पुरुषा हस्तिन इत्युदाहृत्य प्रदर्शनम्। उक्तानामनुक्तानां च संक्षेपेणोपसंग्रहार्थं यत्किंचेदं प्राणीत्यादि वाक्यम्।

यदेतज्जगदुत्पत्तिस्थितिलयकारणत्वं चैतन्यस्य प्रज्ञानेत्रमितिपदेन संगृह्योक्तं तदेव विवृणोति—

प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा, इति।

प्रज्ञाने निरुपाधिकचैतन्ये पूर्वोक्तं सर्वं जगत्प्रतिष्ठितं रज्ज्वां सर्पादिवदारोपितम्। अनेनोत्पत्तिहेतुत्वमुक्तम्। लोकः सर्वप्राणिसमूहः प्रज्ञानेत्रः प्रज्ञा चैतन्यमेव नेत्रं व्यवहारकारणं यस्यासौ प्रज्ञानेत्रः। अनेन स्थितिहेतुत्वमुक्तम्। प्रज्ञा चैतन्यं प्रतिष्ठा लयस्थानं प्रतितिष्ठति विलीयतेऽत्रेति व्युत्पत्तेः। अनेन संहारहेतुत्वमुक्तम्। एतावता शाखान्तरप्रसिद्धं जगज्जन्मस्थितिलयकारणत्वाख्यं ब्रह्मणस्तटस्थलक्षणमुक्तं भवति। एतत्तु लक्षणं तैत्तिरीया विस्पष्टमामनन्ति—" यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म " इति।

---

१ क. ग. °वतोत्पादको। २ ख. घ. °स्य पृ°। ३ ख. घ. °रभ्यैता। ४ ग. घ. °कार्यभूताः स°। ५ क. ख. ग. घ. °ज्ञायेत। प°। ६ क. ङ. °दिना प्र°। ७ ख. घ. °णत्वेन चै°। ८ क. ख. ग. घ. °मुक्तं भवति। ए°। ९ क. ख. ग. घ. °द्धं च ज°। १० ङ. एतच्च ल°। घ. एवं तु ल°।

तदेवं विचारद्वयेन तत्त्वंपदार्थौ शोधितौ । अथ महावाक्येन तत्त्वंपदार्थयोरैक्यं दर्शयति—

प्रज्ञानं ब्रह्म, इति ।

सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्तीतिवाक्येन देहेन्द्रियादिसाक्षिरूपं यत्प्रज्ञानं त्वंपदार्थरूपं निर्णीतं तदेवैष ब्रह्मेत्यादिवाक्येन जगत्कारणतया निर्णीतं परं ब्रह्म नानयोरीषदपि भेदोऽस्ति । अहंप्रत्ययगम्यत्वाकारेण यदा विवक्ष्यते तदा जीव इत्युच्यते । यदा तु शास्त्रप्रतिपाद्यत्वाकारो विवक्षितस्तदानीं ब्रह्मेत्यभिधीयते । अतो व्यवहारभेदमात्रं न तु तत्त्वतो भेदोऽस्ति । न चैवं सति पुनरुक्तिप्रसङ्गः । अब्रह्मत्वपरोक्षत्वयोर्व्यावर्त्ययोर्भेदेन पदद्वयोपयोगात् ।

एतच्च वाक्यवृत्तौ विस्पष्टमभिहितम्—

" प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते[3] " इति ॥

इत्थं चतुर्थाध्याये स जातो भूतान्यभिव्यैख्यदित्यादिनाऽपवादप्रकरणेन संगृहीतमात्मतत्त्वमस्मिन्नध्याये तत्त्वंपदार्थविचारमुखेन(ण)[4] प्रपञ्चितम् । अथ तत्त्वज्ञानफलं दर्शयति—

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे
लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्, इति ।

इत्यैतरेयोपनिषद्यात्मषट्के पञ्चमः खण्डः ॥ ५ ॥
उपनिषत्क्रमेण तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥

इत्यैतरेयोपनिषदि तृतीयोऽध्यायः ॥ ३ ॥

इति ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यके षष्ठाध्याये प्रथमः खण्डः ॥ १ ॥
इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यकाण्डे षष्ठोऽध्यायः ॥ ६ ॥

यः पुमान्प्रज्ञानं ब्रह्मेत्येवं जानाति स पुमानेतेन प्रज्ञेनाऽऽत्मना चैत-

---

१ ख. ग. घ. ङ. च. °ह्म न चान° । २ घ. °रुक्तप्र° । ३ ख. घ. °वशिष्यते । ४ क. ख. ग, °मुख्येन ।

न्यस्वरूपेण स्वयमाविर्भवति । तत ऊर्ध्वं च विदेहमुक्तिं प्रतिपद्यते । तन्मुक्तिप्रतिपादकमस्माल्लोकादिति वाक्यं पूर्वस्मिन्पञ्चमाध्याये व्याख्यातम् । तस्यैव वाक्यस्य व्याख्यातस्य पुनरप्यत्रोक्तिस्तत्त्वविद्योपसंहारार्था । समभवदित्यभ्यासोऽध्यायसमाप्त्यर्थः ॥

इत्यैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके षष्ठाध्याये
प्रथमः खण्डः ॥ १ ॥

इति श्रीमद्विद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके षष्ठोऽध्यायः ॥ ६ ॥

---

षष्ठे तत्त्वविद्यां परिसमाप्य सप्तमे शान्तिकरं मन्त्रं पठति—

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणी स्थः श्रुतं मे मा प्रहासीरनेनाऽऽधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्, इति ।

ॐ शान्तिः शान्तिः शान्तिः ।

इत्यैतरेयोपनिषद्यात्मषट्के षष्ठः खण्डः ॥ ६ ॥
उपनिषत्क्रमेण चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥

इत्यैतरेयोपनिषदि चतुर्थोऽध्यायः ॥ ४ ॥

इति ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यके सप्तमाध्याये प्रथमः खण्डः ॥ १ ॥
इत्यैतरेयब्राह्मणारण्यकाण्डे द्वितीयारण्यके सप्तमोऽध्यायः ॥ ७ ॥

यथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्ता मदीया वाक्सर्वदा मनसि प्रतिष्ठिता, मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति । मनश्च मदीयं वाचि प्रतिष्ठितम्, यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते । एवमन्योन्यानुगृहीते वाङ्मनसे विद्यार्थग्रन्थं साकल्येनावधारयितुं शक्नुतः । मनसः सावधानत्वाभावे सुप्तोन्मत्तप्रलापादिवद्यत्किंचिदसंगतं ब्रूयात् । तथा च वाचः पाटवाभावे सति गद्गदरूपया वाचा विवक्षितं सर्वं यथावन्नोच्चार्यते । अतस्तयोरन्योन्यानुकूल्यमास्त्वित्येवं प्रार्थ्यते । आविःशब्देन स्वप्रकाशं ब्रह्मचैत-

---

१ ङ. च. तदूर्ध्वं वि॰ । २ ख. ग. घ. ॰दित्यादिरूपं वा॰ । ३ क. ॰द्यार्थं ग्र॰ । ४ ङ. ॰वे वागिन्द्रियं सु॰ ।

न्यमुच्यते । प्रज्ञानशब्देन व्यवहृतत्वात्तस्याऽऽविर्भूतरूपत्वम् । तथाविध हे आत्मन्मे मदर्थमाविरेधि । अविद्यावरणापनयेन प्रकटी भव । हे वाङ्मनसे मे मदर्थं वेदस्य यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्याऽऽणी स्थ आनयनसमर्थे भवतम् । मे श्रुतं मया श्रोत्रेणावगतं ग्रन्थतदर्थजातं मा प्रहासीर्मा परित्यजतु विस्मृतं मा भूदित्यर्थः । अनेनाऽऽधीतेन ग्रन्थेन विस्मरणरहितेनाहोरात्रान्संदधामि संयोजयामि । अहनि रात्रौ चाऽऽलस्यं परित्यज्य निरन्तरं पठामीत्यर्थः । अस्मिन्पठिते ग्रन्थ ऋतं परमार्थभूतं वस्तु वदिष्यामि, विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः । ऋतं मानसं सत्यं वाचिकं मनसा वस्तुतत्त्वं विचार्य वाचा वदिष्यामीत्यर्थः । तन्मया वक्ष्यमाणं ब्रह्मतत्त्वं मां शिष्यमवतु सम्यग्बोधेन पालयतु । तथा तद्ब्रह्मतत्त्वं वक्तारमाचार्यमवतु बोधकत्वसामर्थ्यप्रदानेन पालयतु । पुनरप्यवतु मामित्युक्तिः फलविषया । पूर्वं साधनकाले शिष्याचार्ययोः पालनं प्रार्थितम् । इदानीं फलकालेऽपि प्रार्थ्यते । तत्र शिष्यस्याविद्याकार्यनिवृत्तिः फलम् । आचार्यस्य तु तादृशशिष्यदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम् । अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिह्रियन्ते । विद्योत्पत्तेरूर्ध्वमसंभावनाविपरीतभावनोत्पादका विघ्नाः परिह्रियन्ते । अवतु वक्तारमित्यभ्यासोऽध्यायसमाप्त्यर्थो द्वितीयारण्यकसमाप्त्यर्थश्च ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्यमुनिविरचितायामैतरेयोपनिषद्दीपिकायां द्वितीयारण्यके सप्तमोऽध्यायः ॥ ७ ॥

इति द्वितीयारण्यकं समाप्तम् ॥ २ ॥

समाप्ता चेयमैतरेयोपनिषद्दीपिका ।



---

१ क. °र्थः । तस्मि° । २ ख. घ. °विक्रमधिकं म° । ३ ख. घ. °र्थः काले शिष्याचार्ययोः पठिष्यामीत्यर्थः । त° । ४ क. ख. ग. घ. च. °युक्तप° । ५ ख. घ. °वनारूपा° । वि° ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२

कृष्णयजुर्वेदीया

# तैत्तिरीयोपनिषत्

आनन्दगिरिकृतटीकासंवलितशांकरभाष्योपेता ।

"पण्डित वामनशास्त्री इसलामपुरकर" इत्येतैः

संशोधिता ।

तथा च

शंकरानन्दकृता तैत्तिरीयोपनिषद्दीपिका ।

एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८३१

खिस्ताब्दाः १९०९



मूल्यं पादोनरूपकद्वयम् ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

—:+*+:—

तैत्तिरीयोपनिषद आदर्शपुस्तकानि येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्चाधोदेशे प्रदर्श्यन्ते—

क. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यम् । वैराजक्षेत्रनिवासिनां वे. शा. सं "शिवराम वीरेश्वर शास्त्री भट्ट" इत्येतेषाम् ।

ख. इति संज्ञितम्—मूलं सटीकं काश्यां शिलामुद्रितम् । रा. रा. " महादेव चिमणाजी आपटे " इत्येतेषाम् । मुद्रणकालः संवत् १९४१

ग. इति संज्ञितम्—मूलं सटीकम् । इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्री. रा. रा. "भाउसाहेब बाळासाहेब" इत्येतेषाम् ।

घ. इति संज्ञितम्—मूलं सभाष्यम् । पुण्यपत्तननिवासिनां ' खाजगीवाले ' इत्युपाह्वानां श्री. रा. "तात्यासाहेब" इत्येतेषाम् ।

ङ. इति संज्ञितम्—मूलं सभाष्यम् । पुण्यपत्तननिवासिनां ' खाजगीवाले ' इत्युपाह्वानां श्री. रा. रा. "तात्यासाहेब" इत्येतेषाम् ।

च. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं शिक्षाभृगुवल्लीद्वयात्मकं समूलं सटीकम् । खेडकरोपाह्वानां श्री. रा. रा. "आन्दराव लक्ष्मण (भाउसाहेब)" इत्येतेषाम् ।

छ. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यम् । विंचूरपुरनिवासिनां श्री. रा. रा. "रावसाहेब अण्णासाहेब" इत्येतेषाम् ।

ज. इति संज्ञितम्—मूलं सटीकम् । विंचूरपुरनिवासिनां श्री. रा. रा. "राव-साहेब अण्णासाहेब" इत्येतेषाम् ।

झ. इति संज्ञितम्—मूलं सटीकम् । विंचूरपुरनिवानां श्री. रा.रा. " राव-साहेब अण्णासाहेब" इत्येतेषाम् । लेखनकालः शके १६३२

ञ. इति संज्ञितम्—मूलं सटीकभाष्योपेतम् । करवीरपुरनिवासिनां श्रीयुतानां वे.शा.सं. गुरुमहाराजानाम् । लेखनकालः संवत् १८६६

ट. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यम् । करवीरपुरनिवासिनां द्राविडो-पाह्वानां वे. शा. सं. रा. रा. नानाशास्त्रिणाम् ।

ठ. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यम् । समूलं सटीकम् । कलिकाता-
नगरे मुद्रितं पुण्यपत्तननिवासिनां कै. वे. शा. सं. देवो-
पाह्वबालशास्त्रिणाम् ।

ड. इति संज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं सटीकम् । नागपुरनिवासिनां श्री.
रा. रा. "आप्पासाहेब बुटी" इत्येतेषाम् ।

---

## अथ शंकरानन्दविरचितदीपिकायाः सूचीपत्रम् ।

क. इति संज्ञिता—तैत्तिरीयोपनिषद्दीपिका । पुण्यपत्तननिवासिनां श्री.
रा. रा. "भाऊसाहेब नगरकर" इत्येतेषाम् ।

ख. इति संज्ञिता—तैत्तिरीयोपनिषद्दीपिका । वटोदरनिवानां पटवर्धन इत्यु-
पाह्वानां रा. रा. "कृष्णराव भीमाशंकर" इत्येतेषाम् ।

ग. इति संज्ञिता—तैत्तिरीयोपनिषद्दीपिका शिक्षाध्यायमात्रा । प्रान्तिजस-
काशादागता* ।

घ. इति संज्ञिता—तैत्तिरीयोपनिषद्दीपिका । रा. रा. "महादेव चिमणाजी
आपटे" इत्येतैः प्रेषिता+ ।

समाप्तमिदं सूचीपत्रकम् ।

---

* एतत्स्वामिनो नाम न ज्ञायते । + एतत्पुस्तकस्यापि स्वामिनो नाम न ज्ञातम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकान्तर्गता

# तैत्तिरीयोपनिषत्

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

---

यत्प्रकाशसुखाभिन्नं यन्मन्त्रेण प्रकाशितम् ।
विवृतं ब्राह्मणे तत्स्यामदृश्यं ब्रह्म निर्भयम् ॥ १ ॥

यजुर्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन्प्रति सामान्येनोपलक्षितं, सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्कारच्छलेन संक्षेपतो दर्शयति—

**यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।**
**येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥**

**यस्माज्जातमिति** । निमित्तोपादानत्वयोः पञ्चम्याः साधारण्यादुभयविधमपि हेतुत्वमविवक्षितम् । कार्यविलयस्य प्रकृतावेव नियतत्वाद्विशेषतः प्रकृतित्वमाह—**यस्मिन्निति** । कार्यसाधारणस्य निमित्ते धर्मादावपि प्रसिद्धत्वात्साधारणकारणत्वमाह—**येनेति** । ज्ञानात्मन इति स्वरूपलक्षणसूचनम् ॥ १ ॥

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति—

**यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।**
**व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥**

**यैरिति** । पदानि च वाक्यानि च प्रमाणं चानुमानादि तद्विवेचनेन व्याख्याता इति ॥ २ ॥

चिकीर्षितं निर्दिशति—

**तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः ।**
**विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ॥ ३ ॥**

---

१ ख. ग. च. ज. झ. ट. यन्मात्रेण । २ ख. ग. च. °रवले° । ३ क. घ. च. छ. ज. झ. °व विधीय° । ञ. °व विली° । ४ क. ख. ग. ज. ट. °पि कारणत्व° । ५ क. ख. ग. च. ज. झ. ट. °त्वमिहावि° । ६ क. ख. ग. च. ज. ट. °त्तेऽपि ध° । ७ क. ख. ग. च. ज. ट. °र्मादौ प्र° । ८ ख. ग. ञ. °रणं का° । ९ ञ. °णमाम्यह° । १० क. ख. ग. च. ज. ट. °इत्यर्थः ॥ २ ॥ ११ ख. ग. च. दर्शयति ।

**तैत्तिरीयकेति** । व्युत्पन्नस्य पदेभ्य एव पदार्थ[1]स्मृतिसंभवात्पदस्मारितपदार्थानां संसर्गस्यैव वाक्यार्थत्वात्सूत्रकारे[4]णोपनिषत्तात्पर्यस्य निरूपितत्वाच्च व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याऽऽह—**विस्पष्टार्थेति** । मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासंभवादुपनिषद्गतनिःशेषपदार्थानां विशिष्य निःसंशयं ज्ञानं ये रोचयन्ते तेषामुपकारायेत्यर्थः ॥ ३ ॥

**नित्यान्यधिगतानि कर्माण्युपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिनां पूर्वस्मिन्ग्रन्थे ।**

कर्मविचारेणैवोपनिषदो गतार्थत्वादुपनिषत्प्रयोजनस्य निःश्रेयसस्य कर्मभ्य एव संभवात्पृथग्व्याख्यारम्भो न युक्त इत्याशङ्कामपनेतुं कर्मकाण्डार्थमाह—**नित्यानीति** । "अथातो धर्मजिज्ञासा" इति जैमिनिना धर्मग्रहणेन सिद्धवस्तुविचारस्य पर्युदस्तत्वान्नोपनिषदो गतार्थत्वमित्यर्थः । तानि च कर्माणि संचितदुरितक्षयार्थानि "धर्मेण पापमपनुदति" इति श्रुतेर्न निःश्रेयसार्थानि । न केवलं जीवतोऽवश्यकर्तव्यान्यधिगतानि फलार्थिनां काम्यानि च । न तान्यपि निःश्रेयसार्थानि । "स्वर्गकामः" "पशुकामः" इत्यादिवन्मोक्षकामोऽदः कुर्यादित्यश्रवणात् । अतः संसार एव कर्मणां फलमित्यर्थः ।

**इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतुः कामः स्यात् । प्रवर्तकत्वात् । आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्तिः । आत्मकामत्वे चाऽऽप्तकामता । आत्मा हि ब्रह्म । तद्विदो हि परप्राप्तिं वक्ष्यति । अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः । "अभयं प्रतिष्ठां विन्दते" "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यादिश्रुतेः ।**

कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थमाह—**इदानीमिति** । कर्मणा[10]मुपादानेऽनुष्ठाने यो हेतुस्तन्निवृत्त्यर्थं ब्रह्मविद्याऽस्मिन्ग्रन्थ [11]आरभ्यते । अतः सनिदानकर्मोन्मूलनार्थत्वादुपनिषदः कर्मकाण्डाविरुद्धत्वान्न गतार्थत्वमित्यर्थः । कर्मानुष्ठाने हेतुर्नियोगस्तस्य प्रमाणसिद्धत्वान्न विद्यया विरोध इत्याशङ्क्याऽऽह—**कर्महेतुरिति** । अस्येदं साधनमित्येतावच्छास्त्रेण बोध्यते । यस्य यत्राभिलाषः स तत्र प्रवर्तते कामत एव । अतो न नियोगस्य प्रवर्तक[त्व]संभावनाऽपीत्यभिप्रायः । सति कामे प्रवृत्तिरित्यन्वय उक्तः । कामाभावे न प्रवृत्तिरिति व्यतिरेकमाह—**आप्तेति** । अभिलषितविषयप्राप्तिः कामनिवृत्तौ

१ ज. °र्थसंस्मृ° । २ क. ट. त्पदैः संस्मा° । ख. ज. °त्पदैः स्मा° । ३ झ. °दार्थसं° । ४ झ. °रेणौप° । ५ ख. ग. च. ज. झ. ट. °नां निर्विशि° । ६ ट. °इतिव° । ७ घ. छ. ज. तु निवृत्त्यर्थं । ब्र° । ८ ग. च. °त्वेनाऽऽप्त° । ९ ङ. °तेः । ननु का° । १० कः ख. ग. च. ज. झ. ट. °र्मेण उपा° । ११ झ. प्रारभ्यते ।

हेतुः । न विद्या । अतः कथं कर्महेतुपरिहाराय विद्यारम्भ इत्याशङ्क्याऽऽह—आत्मकामत्वे चेति । कामितविषयप्राप्त्या कामस्य तात्कालिकोपशममात्रं नतूच्छेदः । पुनर्विषयाकाङ्क्षादिदर्शनात् । आत्मकामेनाऽपि निरङ्कुशाऽऽत्मैव वस्तु नान्यत्ततोऽस्तीत्येवंरूपाऽऽत्मकामत्वे सति भवति । कामितेच्छाभावात् । आत्मनो ह्यद्वयानन्दरूपमजानन्नेव व्यतिरिक्तं विषयं पश्यन्कामयते । ततः कामस्याऽऽत्माविद्यामूलत्वादात्मविद्यैव तन्निवृत्तिहेतुरित्यर्थः । भवत्वात्मविद्या कामविरोधिनी कर्महेतुपरिहाराय ब्रह्मविद्या प्रस्तूयत इति कथमुक्तं तत्राऽऽह—आत्मेति । आनन्दमयं परमात्मानमादाय श्रुतिरुदाहृता ।

काम्यप्रतिषिद्धयोरनारम्भादारब्धस्य चोपभोगेन क्षयान्नित्यानुष्ठानेन प्रत्यवायाभावादयत्नत एव स्वात्मन्यवस्थानं मोक्षः । अथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्कर्मभ्य एव मोक्ष इति चेन्न । कर्मानेकत्वात् । अनेकानि ह्यारब्धफलान्यनारब्धफलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि संभवन्ति । अतस्तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगक्षयासंभवाच्छेषकर्मनिमित्तशरीरारम्भोपपत्तिः कर्मशेषसद्भावसिद्धिश्च । "तद्य इह रमणीयचरणाः" "ततः शेषेण" इत्यादिश्रुतिस्मृतिशतेभ्यः । इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानीति चेन्न । अकरणे प्रत्यवायश्रवणात् । प्रत्यवायशब्दो ह्यनिष्टविषयः । नित्याकरणनिमित्तस्य प्रत्यवायस्य दुःखरूपस्याऽऽगामिनः परिहारार्थानि नित्यानीत्यभ्युपगमान्नानारब्धफलकर्मक्षयार्थानि । यदि नामानारब्धकर्मक्षयार्थानि नित्यानि कर्माणि तथाऽप्यशुद्धमेव क्षपयेयुर्न शुद्धम् । विरोधाभावात् । न हीष्टफलस्य कर्मणः शुद्धरूपत्वान्नित्यैर्विरोध उपपद्यते । शुद्धाशुद्धयोर्हि विरोधो युक्तः ।

एवं तावत्कर्मकाण्डेनागतार्थत्वात्कर्मभ्योऽसंभाव्यमाननिःश्रेयसप्रयोजनत्वाच्चोपनिषदो व्याख्यारम्भं संभाव्य पुनरनारम्भवादिनोऽभिप्रायमुद्भावयति—काम्यप्रतिषिद्धयोरिति । आत्यन्तिकागामिशरीरानुत्पादे स्वरूपावस्थानं निःश्रेयसं, शरीरानुत्पादश्च हेत्वभावादेव

---

१ ग. च. °त्वेनेति । २ ख. ग. चं. ज. °प्राप्तौ का° । ३ क. ख. ग. च. ज. ट. °ङ्क्षाद° । ४ क. ख. झ. ट. °मताऽपि । ५ क. ख. ज. ट. कामयितव्याभावादेवाऽऽत्मानं ह्य° । ६ ङ. °म्भात्प्रार° । ७ ङ. °ब्धयोश्चोप° । ८ ख. ग. घ. च. छ. ज. झ. °भोगक्ष° । ९ ङ. °न च प्र° । १० क. झ. स्वात्माव° । ११ ङ. च. °शयप्री° । १२ ञ. °ब्धकर्मफ° । १३ घ. °षसंभव° । १४ क. °यदिह । १५ क. ङ. ञ. °तः कर्मशे° । १६ ञ. °दिस्मृति° । १७ ङ. °यस्यासुखरू° । १८ ख. ग. च. °शुभमे° । १९ घ. °नं पुनः शु° । २० ख. ग. घ. ङ. च. छ. ञ. ट. शुद्धिरू° । २१ घ. ङ. छ. ट. शुद्धयशुद्धयोर्हि । २२ घ. छ. °नरार° ।

सेत्स्यति किं ज्ञानार्थोपनिषदारम्भेणेत्यर्थः । मतान्तरमाह—**अथवेति** । यदेव स्वर्गसाधनं ज्योतिष्टोमादि तदेव मोक्षसाधनं निरतिशयप्रीतेः । स्वर्गपदार्थस्य मोक्षादन्यत्रासंभवात्सति शरीरे क्लेशावश्यंभावादित्यर्थः । ऐकभविकपक्षमाद्यं मतं प्रत्याख्याति—**नेत्यादिना** । यद्यपि वर्तमाने देहे काम्यं प्रतिषिद्धं च नाऽऽरभेत मुमुक्षुस्तथाऽपि संचितस्यानेकस्य संभवाद्धेत्वभावोऽसिद्ध इत्यर्थः । प्रायेणानभिव्यक्तानि सर्वाण्येव कर्माणि संभूयैकं शरीरमारभन्ते, तत्र सर्वेषामुपभोगेन क्षयि(पि)तत्वात्संचितं कर्मैव नास्तीतिशङ्कानिराकरणायोक्तम्—**विरुद्धफलानीति** । स्वर्गनरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन्देहे भोगेन क्षयासंभवात्प्रायेणास्य सर्वाभिव्यञ्जकत्वे प्रमाणाभावाद्बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं संभवतीत्यर्थः । संभावनामात्रमेतन्नात्र प्रमाणमस्तीत्याशङ्क्याऽऽह—**कर्मशेषेति** । प्रेत्य स्वकं कर्मानुभूय ततः शेषेण जन्म प्रतिपद्यन्त इति स्वर्गादवरोहतां कर्मशेषं(ष)सद्भावं दर्शयतीत्यर्थः । संचितकर्मसद्भावमङ्गीकृत्य देहान्तरारम्भो न भविष्यतीत्याह—**इष्टेति** । एतद्द्र-(द्रा)ष्टानां सिद्धान्तविरुद्धमित्याह—**नेति** । मुमुक्षुणाऽनुष्ठितस्य नित्यादेः संचितकर्मक्षयार्थत्वाभ्युपगमेऽपि नाभिमतसिद्धिरित्याह—**यदि नामेति** ।

**न च कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्यसंभवादशेषकर्मक्षयोपपत्तिः । अनात्मविदो हि कामोऽनात्मफलविषयत्वात्स्वात्मनि च कामानुपपत्तिर्नित्यप्राप्तत्वात्स्वयं चाऽऽत्मा परं ब्रह्मेत्युक्तम् । नित्यानां चाकरणमभावस्ततः प्रत्यवायानुपपत्तिरिति । अतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति " अकुर्वन्विहितं कर्म " इति हि शतुर्नानुपपत्तिः ।**

यच्चोक्तं " मुमुक्षुः काम्यानि वर्जयेत् " इति तदप्यसति विवेकबले दुर्घटम् । सति मूलाज्ञाने कामोद्भवस्य दुर्निवारत्वादित्याह—**न च कर्महेतूनामिति** । ननु कामो नाज्ञानमूलः । आत्मविदामपि कामदर्शनादित्यत आह—**स्वात्मनि चेति** । सर्वं आत्मेति पश्यतां तत्त्वतो विषयाभावादेव कामानुपपत्तिः । अशनादिप्रवृत्तिनिमित्तं तु कामाभास एव । वास्तवाभिनिवेशाभावादित्यर्थः । तेषामप्यर्चिरादिमार्गेण ब्रह्मप्राप्तेः कामनाऽस्तीति नाऽऽशङ्कनीयमित्याह—**स्वयं चेति** । यच्चोक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानीति तत्राऽऽह—**नित्यानां चेति** । आगामि दुःखं प्रत्यवाय उच्यते । तस्य भावरूपस्य नाभावो निमित्तम् । " पापः पापेन " इति श्रुतेः । निषिद्धाचरणनिमित्तत्वाद्दुःखस्येत्यर्थः ।

---

१ ख. °र्थः । एक° । २ क. ख. ग. च. ज. झ. ट. स्वकर्मफलमनु° । ३ ज. झ. °यत इ° । ४ ज. झ. °हणं कुर्व° । ५ घ. ङ. छ. °तद्धात्रिनां ।

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति" ॥

इति शतृप्रत्ययादकरणस्यापि[1] प्रत्यवायनिमित्तत्वमवगतमित्याशङ्क्याऽऽह—**अतः पूर्वेति** । यदि यथावन्नित्यनैमित्तिकानुष्ठानमभविष्यत्तदा संचितदुरितक्षयोऽभविष्यत् । न चायं विहितमकार्षीदित्यतः[2] प्रत्यवायो[3] भविष्यतीति शिष्टैर्लक्ष्यते । यथा[4] विचिकित्सन्श्रोत्रिय इति । ततः शतृप्रत्ययस्यान्यथा[5] व्युत्पन्नत्वान्न तद्बलादकरणे हेतुत्वमवगन्तुं शक्यत इत्यर्थः ।

**अन्यथाऽभावाद्भावोत्पत्तिरिति सर्वप्रमाणव्याकोप इति । अतोऽयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम् ।**

ननु—लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यते तत्राऽऽह—**अन्यथेति** । भावरूपस्य कार्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवगतं, शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वप्रमाणविरोधः स्यादित्यर्थः । ननु त्वयाऽप्यकरणस्य प्रत्यवायलक्षणत्वमिष्टम् । भाट्टैश्चानुपलम्भस्याभावप्रमितिहेतुत्वमिष्यते । तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्यव्यवस्थापकत्वमिष्यते । तत्कथं भावस्यैव कारणत्वम् । तदुक्तम्—"भावो यथा तथाऽभावः कारणं कार्यवन्मतम्" इति । उच्यते । अस्माभिस्तावदभावस्य स्वरूपेण कारणत्वं नेष्टम् । किंतु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम् । तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते । नित्याकरणज्ञाने प्रत्यवायाभावप्रसङ्गात् । भाट्टानामपि च केषांचिज्ज्ञानस्य योग्यानुपलम्भस्याभावप्रमितिहेतुध्वंसतया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः । **तार्किकाणामपि** प्रतिबन्धकाभावस्य कारणत्वेऽन्योन्याश्रयत्वप्रसङ्गान्न प्रामाणिकत्वम् । प्रागभावस्यापि ज्ञातरूपेण जन्यज्ञापकत्वमेव । यस्मादिदं प्राङ्नाऽऽसीत्तस्मादिदानीं जातमिति । न तु जनकत्वं प्रागभावस्य नियतप्राग्भावित्वेन कारणत्वे प्राक्कालस्य स्ववृत्तितापातः । प्राग्भावित्वमपि चान्यथासिद्धमित्युक्तं **तत्त्वालोके** । यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म किंतु " कर्मणा पितृलोकः । सर्व एते पुण्यलोका भवन्ति " इति श्रुतेः पितृलोकप्राप्तिफलम्, तस्मान्न यथोक्तचरितस्य शरीरानुत्पाद इत्याह—**अयत्नत इति** ।

**यच्चोक्तं निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मा-**

---

१ क. ख. ग. च. ज. झ. ट. °पि न प्र° । २ क. ख. ग. च. ट. °र्षीदतः । ३ क. ख. ग. च झ. ट. °वायी भ° । ४ ख. ग. च. ज. °थाऽवि° । ५ क. ख. ग. ज. ट. °थाऽप्युपपन्न° । ६ ख. ग. घ. ङ. च. छ. ञ. °णको° । ७ क. ख. ग. च. ज. ट. °वधारितं । ८ क. °णत्वं कथमि° । ९ घ. ङ. छ. °रणं ने° । १० झ. °यासंभव° । ११ क. ख. ग. च. ज. झ. ट. °तुत्वसत्तया । १२ क. ख. ग. घ. च. ज. झ. ट. °जन्मज्ञा° । १३ झ. °पि नान्य° ।

र[1]ब्ध एव मोक्ष इति । तन्न । नित्यत्वान्मोक्षस्य । न हि नित्यं किंचिदारभ्यते । लोके यदारब्धं तदनित्यमिति । अतो न कर्मार[2]ब्धो मोक्षः । विद्यासहितानां कर्मणां नित्यारम्भसामर्थ्यमिति चेत् । न । विरोधात् । नित्यं चाऽऽरभ्यत इति[3] विरुद्धम् । य[4]द्धिनष्टं तदेव[5] नोत्पद्यत इति । प्रध्वंसाभाववन्नित्योऽपि मोक्ष आरभ्य ए[6]वेति चेन्न । मोक्षस्य भावरूपत्वात् । प्रध्वंसाभावोऽप्यारभ्यत इत्यभावस्य विशेषाभावाद्विकल्पमात्रमेतत् । भावप्रतियोगी ह्यभावः ।

द्वितीयमतमनूद्य दूषयति—यच्चोक्तमित्यादिना । विद्यासहितेनापि कर्मणाऽऽरभ्यश्चेन्मोक्षस्तर्ह्यनित्य एव । यत्कृतकं तदनित्यमिति व्याप्तिदर्शनादित्युक्तं तत्र व्याप्तिभङ्गं मन्वानः शङ्कते—य[7]द्धिनष्टमिति । भावरूपत्वादिति । यद्भावरूपं कार्यं तदनित्यमिति व्याप्तेस्तत्र च मोक्षस्य निरतिशयप्रीतेर्भावत्वादनित्यत्वं स्यादेवेत्यर्थः । प्रध्वंसाभावस्य कार्यत्वमभ्युपगम्य यत्प्रध्वंसातिरिक्तकार्यं तदनित्यमिति व्याप्तिर्व्याख्येयोतैवं[10] । वस्तुतस्तु प्रध्वंसस्य कार्यत्वमपि नास्तीत्याह—प्रध्वंसेति । जन्याश्रयत्वं तावत्प्रध्वंसस्य । न कार्यत्वम् । जनेर्नैरुक्तेर्भा( क्ते भा )वविकारत्वाभ्युपगमात् । नापि प्रागसतः सत्तासमवायादिलक्षणम् । तदनभ्युपगमात् । नाप्युत्तरकालयोगः । कालेन संबन्धाभावात् । अवच्छेदाव[11]च्छेदकभावस्य[12] समवायमूलत्वात्संबन्धान्तरमूलकत्वदर्शनादुत्तरकालस्य प्रध्वंसावच्छेदकत्वं स्वभावश्चेदन्यावच्छेदकत्वं स्वभावो न स्यात् । तस्मादभावस्य निर्विशेषकत्वात्कार्यत्वं कल्पनामात्रपरमिति भावः । किंच, अभावस्याभावविशेषमात्रस्वभावत्वाद्भावविरोधित्वाच्च न भावरूपो धर्मः संभवतीत्याह-भावेति ।

यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते । अभिन्न एव घटभावः पटभाव इत्येवं निर्विशेषो[13] भावाभावः क्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते । न ह्यभाव उत्पलादिव[14]द्विशेषणसहभावी । विशेषणव[15]त्त्वे भाव एव स्यात् । विद्याकर्मकर्तृनित्यत्वाद्विद्याकर्मसंतानजनितमोक्षनित्यत्वमिति चेन्न । गङ्गास्रोतोवत्कर्तृत्वस्य दुःखरूपत्वात् । कर्तृत्वोपरमे च मोक्षविच्छेदात् । तस्मादविद्याकामकर्मोपादानहेतुनिवृत्तौ स्वात्मन्यव-

---

१ ङ. छ. ञ. ट. °रभ्य ए° । २ क. ख. ग. घ. ङ. च. छ. ञ. ट. °रभ्यो मो° । ३ क. ख. ग. घ. ङ. च. ञ. °ति च वि° । ४ क. ख. ग. च. °यद्धि न° । ५ क. °व च नो° । ६ घ. ङ. ज. झ. एव मो° । ७ क. ख. च. ज. झ. °यद्धि न° । ८ ख. ग. च. ज. °स्तद्वन्मोक्ष° । ९ क. ख. ग. च. झ. ट. ख्याता । व° । १० क. ख. ग. च. ज. ट. °व । परमार्थतस्तु प्र° । ११ क. ख. ग. च. ज. झ. ट. °च्छेदाव° । १२ क. ख. ग. च. ज. झ. ट. °स्य संबन्धस° । १३ क. ख. ग. घ. च. ञ. ट. °षोऽपि भा । ङ. °षोऽप्यभा° । १४ क. °व सहभावी विशेषणेन वि° । १५ ङ. °णसहवर्तित्वे भा° ।

**स्थानं मोक्ष इति । स्वयं चाऽऽत्मा ब्रह्म तद्विज्ञानादविद्यानिवृत्तिर्मोक्ष इति ब्रह्मविद्यार्थोपनिषदारभ्यते ।**

ननु—अभावश्चतुर्विधः । तत्रानित्यः प्रागभावः । प्रध्वंसादयस्तु नित्याः । ततः कथं निर्विशेषत्वमित्याशङ्क्याऽऽह—**यथा हीति**[1] । भावप्रत्ययस्यैकाकारत्वादेक एवं भावाभाव(वोऽव)च्छेदकभेदाद्भिन्न इव प्रकाशते । तथा निषेधप्रत्ययस्यैकाकारत्वादेक एवाभावोऽवच्छेदकभेदाद्भिन्न इव प्रकाशते[3] । जायते नश्यति चेति क्रियायोगात्संख्यागुणयोगाद्द्रव्यवदभावो विकल्प्यते । न तु तत्त्वतः सविशेष इत्यर्थः । इतश्च न तत्त्वतः सविशेष इत्याह—**न हीति** । विशेषणं हि विशेष्यान्वयि प्रसिद्धम् । प्रतियोगिना च विशेषणेन नाभावस्य सहभावोऽस्ति । घटप्रध्वंसस्य नित्यत्वे घटस्यापि नित्यत्वप्रसङ्गात् । घटसहभावित्वे च तदभावत्वव्याघाताद्भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात् । ततः प्रतियोगिविशेषादभावः सविशेषः कार्यत्वादिधर्मवानिति विभ्रममात्रमित्यर्थः । एवं प्रध्वंसदृष्टान्तेन शङ्कितं नित्यत्वं परिहृत्य प्रकारान्तरेणाऽऽशङ्कां निषेधति—**विद्याकर्मेत्यादिना** । विद्याकर्मणोः कर्ता नित्य इति साधनसांतत्यात्साध्यसांतत्यं न वाच्यम् । कर्तृत्वस्यानुपरमेऽनिर्मोक्षप्रसङ्गादुपरमे च साधनसांतत्याभावान्मोक्षस्य विच्छित्तिः स्यादित्यर्थः । यस्मान्निःश्रेयसं ब्रह्मज्ञानं विना दुष्प्रापं तस्मादित्युपसंहारः ।

**उपनिषदिति विद्योच्यते । तच्छीलिनां गर्भजन्मजरादिनिशातनात्तदवसादनाद्वा ब्रह्मणो वोपनिगमयितृत्वादुपनिषण्णं वाऽस्यां परं श्रेय इति । तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ।**

ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याह—**उपनिषदिति** । निशातनाच्छिथिलीकरणादित्यर्थः । अस्यां विद्यायां निमित्तभूतायां परं श्रेयो ब्रह्म जीवस्योपनिषण्णमात्मतयोपस्थितं भवतीत्यर्थः ।

**हरिः ॐ ।**

**शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा ।**

**शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः ।**

**शं सुखं प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु ।**

---

१ क. ख. ग. च. ज. ट. °ति । विधिप्र° । २ क. ख. ग. ज. झ. ट. °व भावो यथा भा° । ३ ग. घ. झ. °भेदाभिन्न° । ४ ख. ग. च. ट. °द्भाव° । ५ क. ख. ग. च. झ. ट. °शङ्क्य नि° । ६ क. ख. ट. °न सातत्या° ।

तथैवापानवृत्ते रात्रेश्चाभिमानी[1] देवतात्मा वरुणः। चक्षुष्यादित्ये चाभिमान्यर्यमा। बल इन्द्रः। वाचि बुद्धौ च बृहस्पतिः। विष्णुरुरुक्रमो विस्तीर्णक्रमः पादयोरभिमानी। एवमध्यात्मदेवताः। शं नो भवत्विति सर्वत्रानुषङ्गः। तासु हि सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकर्तृत्वं प्रार्थ्यते—शं नो भवत्विति।

एवमुपनिषदां व्याख्यारम्भं संभाव्य प्रतिपदव्याख्यामारभते—शं सुखमित्यादिना। शं नो भवत्विति। सुखकृद्भवत्वित्यर्थः। अध्यात्मप्राणकरणाभिमानिनीनां देवतानां सुखकर्तृत्वं किमिति प्रार्थ्यते तत्राऽऽह—तासु हीति। श्रवणं गुरुपादोपसर्पणपूर्वकं वेदान्तानां तात्पर्यावधारणम्। धारणं श्रुतस्याप्यविस्मरणम्। उपयोगः शिष्येभ्यो निवेदनम्।

नमो ब्रह्मणे। नमस्ते वायो। त्वमेव
प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म
वदिष्यामि। ऋतं वदिष्यामि। सत्यं
वदिष्यामि। तन्मामवतु। तद्वक्तार-
मवतु। अवतु माम्। अवतु वक्तारम्।
ॐ शान्तिः शान्तिः शान्तिः॥
सत्यं वदिष्यामि पञ्च च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये
प्रथमोऽनुवाकः॥ १॥

ब्रह्म विविदिषुणा नमस्कारवन्दनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थं क्रियेते। सर्वक्रियाफलानां तदधीनत्वाद्ब्रह्म वायुस्तस्मै ब्रह्मणे नमः। प्रह्वीभावं करोमीति वाक्यशेषः। नमस्ते तुभ्यं हे वायो। नमस्करोमीति परोक्षप्रत्यक्षाभ्यां वायुरेवाभिधीयते। किंच त्वमेव चक्षुराद्यपेक्ष्य बाह्यं संनिकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्तस्मात्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थं

---

१ घ. °त्रेरभि°। २ ख. ग. घ. °वमाद्याध्या°। ३ ख. ग. च. झ. °षदो व्या°। ४ क. ख. ग. च. झ. °पदं व्या°। ५ क. ख. ग. च. ज. ट. °कृत्त्वं कि°। ६ क. ख. ज. झ. ह्मा, व्रावि-विदि°।

तदपि त्वदधीनत्वात्त्वामेव वदिष्यामि । सत्यमिति वाक्कायाभ्यां संपाद्यमानः सोऽपि त्वदधीन एव संपाद्य इति त्वामेव सत्यं वदिष्यामि । तत्सर्वात्मकं वाय्वाख्यं ब्रह्म मयैव स्तुतं सन्मां विद्यार्थिनमवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तारमाचार्यं वक्तृत्वसामर्थ्यसंयोजनेनावतु । मामवतु वक्तारमिति पुनर्वचनमादरार्थम् । ॐ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमार्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये प्रथमोऽनुवाकः ॥ १ ॥

अन्यद्ब्रह्म वायुश्चान्य इति नाऽऽशङ्कनीयमित्याह—परोक्षेति । ब्रह्मेति परोक्षेण स ब्रह्मेत्याचक्षत इति श्रुतेः । वायुशब्देन च प्रत्यक्षतया निर्देशः । प्राणस्य प्रत्यक्षत्वादित्यर्थः । यद्यपि सूत्रात्मरूपेण वायुः परोक्षस्तथाऽप्याध्यात्मिकप्राणवायुरूपेण ब्रह्मशब्दवाच्यत्वेऽप्यपरोक्षत्वमित्याह—किंचेति । बाह्यं चक्षुरादि रूपदर्शनाद्यनुमेयत्वाद्व्यवहितम् । प्राणस्त्वव्यवधानेन साक्षिवेद्यः संनिहितश्च भोक्तुरिति चक्षुराद्यपेक्षया प्रत्यक्ष इत्यर्थः । बृंहणाद्ब्रह्म । प्राणकृतेन श्वसनादिना शरीरादेर्बृंहणं प्रसिद्धमित्यर्थः । यथ राज्ञो दौवारिकं कश्चिद्राजदिदृक्षुराह त्वमेव राजेति तथा हार्दस्य ब्रह्मणो द्वारपं प्राणं हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुराह—त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति । ब्रह्मवदनक्रिया प्राणदेवतास्तुत्यर्था । स्तुत्यन्तरमाह—ऋतमित्यादिना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

अथ शीक्षाध्याये द्वितीयोऽनुवाकः ।

---

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः (१) ॥

शीक्षां पञ्च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

१ क. ख. ज. ट. ब्रह्मण इ° । २ क. ख. ग. च. ज. झ. ठ. °णरू° ।

अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो मा भूदिति शीक्षाध्याय आरभ्यते—शिक्षा शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम्। शिक्ष्यन्त इति वा शिक्षा वर्णादयः। शिक्षैव शीक्षा। दैर्घ्यं छान्दसम्। तां शीक्षां व्याख्यास्यामो विस्पष्टमा समन्तात्कथयिष्यामः। चक्षिङो वा ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तत्वोक्त(वाक्)र्मण एतद्रूपम्। तत्र वर्णोऽकारादिः। स्वर उदात्तादिः। मात्रा ह्रस्वाद्याः। बलं प्रयत्नविशेषः। साम वर्णानां मध्यमवृत्त्योच्चारणं समता। संतानः संततिः। संहितेत्यर्थः। एष हि शिक्षितव्योऽर्थः। शिक्षा यस्मिन्नध्याये सोऽयं शीक्षाध्याय इत्येवमुक्त उदित उक्त इत्युपसंहार उत्तरार्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये द्वितीयोऽनुवाकः॥ २॥

यत्नोपरम इति। स्वरोष्मव्यञ्जनप्रमादो मा भूदित्यर्थः। अन्यथा विवक्षितार्थासिद्धिरेव न स्यात्।

तदुक्तम्—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति॥

लक्षणमिति। लक्षणं शास्त्रम्। ऋटुरषाणां मूर्धा, इचुयशानां तालु इत्यादि। तस्यान्यत्रैव सिद्धत्वादिह कर्मव्युत्पत्तिरेव शिक्षाशब्दस्य ग्राह्या। [रूपमिति] "चक्षिङः ख्याञ्" "वा लिटि" इति सूत्रेण ख्याञादिष्टो यस्तस्येदं रूपं न "ख्या प्रकथने" इत्यस्य सोपसर्गस्य, प्रयोगानभिधानादित्यर्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये द्वितीयोऽनुवाकः॥ २॥

---

अथ शीक्षाध्याये तृतीयोऽनुवाकः।

---

सह नौ यशः। सह नौ ब्रह्मवर्चसम्।

अधुना संहितोपनिषदुच्यते। तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं

---

१ ङ. °न्तात्प्ररुत्यथि°। २ क. ख. ग. ङ. च. छ. ट. °त्वाद्वाक्कर्म°। ३ ख. ग. च. ज. °ञनादिष्ट°। ४ क. ग. च. ज. झ. ट. °भूत्। अ°। ५ ग. च. तदर्थं°। ६ क. ख. ग. च. ज. ट. °थन्न एतस्य सो।

यद्यशः प्रार्थ्यते तन्नावावयोः शिष्याचार्ययोः सहैवास्तु । तन्निमित्तं च यद्ब्रह्मवर्चसं तेजस्तच्च सहैवास्त्विति शिष्यवचनमाशीः । शिष्यस्य ह्यकृतार्थत्वात्प्रार्थनोपपद्यते नाऽऽचार्यस्य । कृतार्थत्वात् । कृतार्थो ह्याचार्यो नाम भवति ।

संहिता वर्णानां संनिकर्षस्तद्विषयमुपासनं प्रथमं कथ्यत इत्याह—अधुनेति । संनिधानाच्च स्वशाखासंहितैव ग्राह्या । शं नो मित्र इत्याशीर्वादः कृत्स्नोपनिषच्छेषः । संहितोपनिषच्छेषमाशीर्वादान्तरमाह—तत्रेति ।

अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः ( १ ) ।

अथानन्तरमध्ययनलक्षणविधानस्य यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानविषयेऽवतारयितुमित्यतः संहिताया उपनिषदं संहिताविषयं दर्शनमित्येतद्ग्रन्थसंनिकृष्टामेव व्याख्यास्यामः । पञ्चस्वधिकरणेष्वाश्रयेषु ज्ञानविषयेष्वित्यर्थः । कानि तानीत्याह—अधिलोकं लोकेष्वधि यद्दर्शनं तदधिलोकम् । तथाऽधिज्यौतिषमधिविद्यमधिप्रजमध्यात्ममिति । ता एताः पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात्संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिता इत्याचक्षते कथयन्ति वेदविदः । अथ तासां यथोपन्यस्तानामधिलोकं दर्शनमुच्यते । दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपं पूर्वो वर्णः पूर्वरूपम् । संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्येत्युक्तं भवति । तथा चोत्तररूपमाकाशोऽन्तरिक्षलोकः । संधिर्मध्यं पूर्वोत्तररूपयोः संधीयेते अस्मिन्पूर्वोत्तररूपे इति ॥

---

१ क. ख. ग. च. छ. ज. ट. ड. प्राप्यते । २ च. कल्प्यत । ३ ख. ग. च. ज. °खासंनिहितै° । ४ क. ख. ग. च. ज. ट. °त्याद्या आशीर्वादाः कृ° । ५ क. ख. ग. घ. ङ. च. छ. ज. ट. °श्च ता म° । ६ घ. °न्ति वेदब्रह्मवि° । छ. ट. न्ति ब्रह्मवि° । ७ ङ. °दः । दर्शनक्रमविषया अथशब्दः । अ° ।

वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह— **यतोऽत्यर्थमिति** । पञ्चस्विति सप्तमी तृतीयार्थे विपरिणेया । अधिकरणशब्दश्च विषयपर्याय: । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु वक्तव्यम् । यथा विष्णुदर्शन(नं!)प्रतिमायामित्यर्थः । **लोकेष्वधीति** । लोकानधिकृत्योपादाय ध्येयत्वमित्यर्थः । विद्याशब्देन विद्याप्रतिबद्ध आचार्यादिर्विवक्षितः । तथैव प्रजाशब्देन प्रजाप्रतिबद्धः पित्रादिर्विवक्षितः । **अध्यात्ममिति** । आत्मानं भोक्तारमधिकृत्य यद्वर्तते जिह्वादि तद्विवक्षितम् । सर्वत्र तत्तदभिमानिनी देवतैव ग्राह्या । अन्यस्योपास्यत्वासंभवादिति । विधिशेषमर्थवादमाह—**ता एता इति** । संहितोपनिषदः कर्तव्या इत्युत्पत्तिविधिरुक्तः । कथं कर्तव्या इत्याकाङ्क्षायां विनियोगविधिमाह—**अथ तासामित्यादिना** । कर्तुरेकत्वादनुष्ठेयानां बहुत्वादवश्यंभाविनि क्रमे विशेषनियमार्थोऽथशब्दः ।

वायुः संधानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् (२) । अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳ संधानम् । इत्यधिप्रजम् ( ३ ) अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्संधिः । जिह्वा संधानम् । इत्यध्यात्मम् ।

१ क. ख. ग. च. च ट. °षु कर्तव्यम् । २ क. ख. ग. च. ज. ट. °यत्वं नेल° । ३ घ. ङ. छ. ञ. °त्य यो वर्तते जिह्वादिः स विवक्षितः । स° । ४ ख. ग. च. ट. क्रमवि° । ५ क. ख. ग. च. ज. ट. °मार्था अथशब्दाः । ह्° ।

वायुः संधानम् । संधीयतेऽनेनेति संधानम् । इत्यधिलोकं दर्शनमुक्तम् । अथाधिज्यौतिषमित्यादि समानम् ।

इतीमा महास॒ꣳहिताः । य एवमेता महास꣫ꣳहिता व्याख्याता वे॒द । संधीयते प्रजंया प॒शुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोके॒न ( ४ ) ॥

संधिराचार्यः पूर्वरू॒पमित्यधि॒प्रजं लोके॒न ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

इतीमा इत्युक्ता उपप्रदर्श्यन्ते । यः कश्चिदेवमेता महासंहिता व्याख्याता वेदोपास्ते । वेदेत्युपासनं स्याद्विज्ञानाधिकारात् “ इति प्राचीनयोग्योपास्स्व ” इति च वचनात् । उपासनं च यथाशास्त्रं तुल्यप्रत्ययसंततिरसंकीर्णा[1] चातत्प्रत्ययैः[2] शास्त्रोक्तालम्बनविषया च । प्रसिद्धश्चोपासनशब्दार्थो[3] लोके[4] गुरुमुपासते(स्ते), राजानमुपास्त इति, यो हि गुर्वादीन्संततमुपचरति स उपास्त इत्युच्यते । स च फलमाप्नोत्युपासनस्य । अतोऽत्रापि च य एवं वेद संधीयते प्रजादिभिः स्वर्गान्तैः प्रजादिफलान्याप्नोतीत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

“ हृदयस्याग्रेऽवद्यत्यथ[5] जिह्वाया अथ वक्षसः ” इतिवदुपप्रदर्श्यन्ते परामृश्यन्ते । अधिकारविधिप्रदर्शनाय यथा दर्शादयः षड्यागाः समुच्चिताः फलसाधनमधिकारांशेनाभेदात्, तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्याह— यः कश्चिदित्यादिना । फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय भवति । फलानभिसंधिना त्वनुष्ठीयमानं ब्रह्मविद्यार्थं भवति । मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वान्मेधाकामस्य जपोऽपि ब्रह्मविद्यार्थो भवति । श्रीविहीनेन सत्त्वशुद्ध्यर्थं यागाद्यनु-

---

१ ज. झ. °र्णा च । अतस्तत्प्र° । २ क. ख. ग. °लया शा° । ३ ङ. °सिद्धो ह्युपा° । ४ घ. झ. ट. लोके । ५ घ. ङ. छ. ञ. वलथ ।

ष्ठातुं न शक्यत इति श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीति महत्तात्पर्यं विद्यासंनिधिसमाम्नातानां सर्वत्र द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये तृतीयोऽनुवाकः । ३ ॥

---

अथ शीक्षाध्याये चतुर्थोऽनुवाकः ।

---

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् ।

यश्छन्दसामिति । मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनं जपहोमावुच्येते । "स मेन्द्रो मेधया स्पृणोतु" "ततो मे श्रियमावह" इति च लिङ्गदर्शनात् । यश्छन्दसां वेदानामृषभ इवर्षभः प्राधान्यात् । विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेः, "तद्यथा शङ्कुना" इत्यादिश्रुत्यन्तरात् । अत एवर्षभत्वमोंकारस्य । ओंकारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैवोंकारस्य । छन्दोभ्यो वेदेभ्यो वेदा ह्यमृतं तस्मादमृतादधिसंबभूव । लोकदेववेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओंकारः सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्योंकारस्याञ्जसैवोत्पत्तिरेव कल्प्यते । स एवंभूत ओंकार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । प्रज्ञाबलं हि प्रा[३]र्थ्यते । अमृतस्यामृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य तदधिकारात्, हे देव धारणो धारयिता भूयासं भवेयम् । किंच शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतत् । भूयादिति प्रथमपुरुषविपरिणामः ।

अवान्तरतात्पर्यमभिप्रेत्याऽऽह—यश्छन्दसामित्यादिना । संबभूवेति जन्मवाचके पदे श्रूयमाणे किमिति "प्रजापतिर्लोकानभ्यतपत्" इत्यादिश्रुत्यन्तरानुसारे[४]णाऽऽत्मज्ञा-

---

१ क. ख. ग. च. ज. ठ. °ष्ठातुमशक्यत्वादिति । २ छ. ज झ. ञ. °त्तिरिव । ३ ज. झ. प्रार्थयते । ४ क. ख. ग. च. °रेण कार्यश्रेष्ठत्वेनाऽऽत्म° ।

नयोग्यकार्यश्रेष्ठत्वेन प्रतिभानं व्याख्यायते तत्राऽऽह—न हीति । पुरुषविपरिणाम इति । भूयासमित्युत्तमपुरुषस्य प्रकृतस्य प्रथमपुरुषत्वेन विपरिणामः कर्तव्य इत्यर्थः ।

जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि
विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया
पिहितः । श्रुतं मे गोपाय । आवहन्ती
वितन्वाना (१) । कुर्वाणाऽचीरमात्मनः ।

जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणीत्यर्थः । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं(?) श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्यकारणसंघातोऽस्त्विति वाक्यार्थः । मेधा च तदर्थमेव हि प्रार्थ्यते । ब्रह्मणः परमात्मनः कोशोऽसि । असेरिवोपलब्ध्यधिष्ठानत्वात् । त्वं हि ब्रह्मणः प्रतीकं त्वयि ब्रह्मोपलभ्यते । मेधया लौकिकप्रज्ञया पिहित आच्छादितः स त्वं सामान्यप्रज्ञैरविदिततत्त्व इत्यर्थः । श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं मे गोपाय रक्ष । तत्प्राप्त्यविस्मरणादि कुर्वित्यर्थः । जपार्था एते मन्त्रा मेधाकामस्य । होमार्थास्त्वधुना श्रीकामस्य मन्त्रा उच्यन्ते । आवहन्त्यानयन्ती । वितन्वाना विस्तारयन्ती । तनोतेस्तत्कर्मत्वात् । कुर्वाणा निर्वर्तयन्ती । अचीरमचिरं क्षिप्रमेव । छान्दसो दीर्घः । चिरं वा कुर्वाणा ।

अचेतनशब्दं प्रति प्रार्थना कथं? कथं चेन्द्रशब्देनाभिधानमित्याशङ्क्य ब्रह्माभेदविवक्षयेत्यभिप्रेत्याऽऽह—ब्रह्मण इति । ब्रह्माभेदेन प्रार्थितदाने समर्थश्चेदोंकारः किमिति सर्वैर्नोपास्यत इत्याशङ्क्याऽऽह—मेधयेति । लौकिकप्रज्ञयेति । शालग्रामादिष्वपि देवताबुद्धिरित्यर्थः । नैतेष्वार्षेयादि मृग्यम् । ब्राह्मणोत्पन्नत्वात् ।

वासांसि मम गावश्च । अन्नपाने च सर्वदा ।
ततो मे श्रियमावह । लोमशां पशुभिः सह

१ ख. ग. च. छ. ट. °वं व्यश्रवमित्यत्राडभावश्छान्दसः । झटिति श्रो° । २ ख. ग. घ. ङ. °तसत्त्व । ३ ङ. °त्मविज्ञानं मे । ४ ङ. °दिना कु° । ५ क. ख. ग. घ. च. छ. ञ. ट. °स्य । होमार्थास्त्वधुनोच्यन्ते मन्त्राः । आ° । ६ ङ. °ना म° । ७ छ. °यन्त्यात्मनः । अ° । ८ क. ग. घ. च. छ. ञ. ट. व° । चि° । ९ क. ग. घ. ङ. °दिष्विव । १० क. ख. ग. °बुद्धेरित्य° । ११ ग. च. ट. ठ. °म् । ब्रह्म ।

स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि माऽऽयन्तु ब्रह्मचारिणः स्वाहा । प्र माऽऽयन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ( २ )

आत्मनो मम, किमित्याह—वासांसि वस्त्राणि मम गावश्च गाश्चेति यावत् । अन्नपाने च सर्वदैवमादीनि कुर्वाणा श्रीर्या तां ततो मेधानिर्वर्तनात्परमावहाऽऽनय । अमेधसो हि श्रीरनर्थायैवेति । किंविशिष्टाम्[1]। लोमशामजाव्यादियुक्तामन्यैश्च पशुभिः संयुक्तामावहेत्यधिकारादोंकार एवाभिसंबध्यते । स्वाहा, स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थः[2]। आयन्तु[3] मामिति व्यवहितेन संबन्धः । ब्रह्मचारिणो विमाऽऽयन्तु प्र माऽऽयन्तु दमायन्तु शमायन्त्वित्यादि ।

यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवताऽऽयन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ( ३ ) ॥

वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु सर्वतः स्वाहैकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ क. छ. ट. °शिष्टां च श्रियं लो° । ख. च. °शिष्टां च लोमशां श्रियम° । २ क. ख. घ. च. छ. ट. °नार्थ इत्यर्थः । ङ. °नार्थः स्वाहाकार आ° । ३ ङ. आमायन्त्विति ।

यशो यशस्वी जने जनसमूहेऽसानि भवानि। श्रेयान्प्रशस्यतरो वस्यसो वसीयसो वसुतराद्वसुमत्तराद्वाऽसानीत्यन्वयः। किंच तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन्पूजावन्प्रविशानि प्रविश्य चानन्यस्त्वदात्मैव भवानीत्यर्थः। स त्वमपि मा मां भग भगवन्पूजावन्प्रविशाऽऽवयोरेकत्वमेवास्तु। तस्मिंस्त्वयि सहस्रशाखे बहुभेदे निमृजे शोधयाम्यहं पापकृत्याम्। यथा लोक आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति। यथा च मासा अहर्जरं संवत्सरोऽहर्जरः। अहोभिः परिवर्तमानो लोकाञ्जरयतीत्यहानि वाऽस्मिञ्जीर्यन्त्यन्तर्भवन्तीत्यहर्जरः। तं च यथा मासा यन्त्येवं मां ब्रह्मचारिणो हे धातः सर्वस्य विधातः, मामायन्त्वागच्छन्तु सर्वतः सर्वदिग्भ्यः। प्रतिवेशः श्रमापनयनस्थानमासन्नगृहमित्यर्थः। एवं त्वं प्रतिवेश इव प्रतिवेशस्त्वच्छीलिनां सर्वपापदुःखापनयनस्थानमसि, अतो मा मां प्रति प्रभाहि प्रकाशयाऽऽत्मानं प्रपद्यस्व च। मां रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः। श्रीकामोऽस्मिन्विद्याप्रकरणेऽभिधीयमानो धनार्थः। धनं च कर्मार्थम्। कर्म चोपात्तदुरितक्षयाय। तत्क्षये हि विद्या प्रकाशते।

तथा च स्मृतिः—

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि" इति॥

इति श्रीमत्परमहंसपरिव्राजकार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये
चतुर्थोऽनुवाकः॥ ४॥

'वस निवासे,' 'वस आच्छादने' इति धातुद्वयादुप्रत्ययः शीलेऽर्थे। वसुर्वसनशीलः। पराच्छादनशीलो वा वसुः। अतिशयेन वसुर्वसीयांस्तस्माद्वसीयसः। ईलोपश्छान्दसः। वसुमान्वसुशब्देन लक्ष्यत इत्यभिप्रेत्याऽऽह—वसुमत्तराद्वेति। पूर्वोक्तस्य प्रयोजनमाह—किंचेति। यदुक्तं 'ब्रह्मचारिणो मामायन्तु' इति तत्र दृष्टान्तमाह—यथेति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये चतुर्थोऽनुवाकः॥ ४॥

———

१ ञ. °द्वा। अनेकार्थत्वाद्धातूनां तुल्यजातीयानां विशेषवान्धनवत्स्वजातीयपुरुषाद्विशेषवानसा°। २ क. ख. घ. च. छ. ट. °नीत्यर्थः। किं। ३ क. मासाः संवत्सरमह°। ४ क. °रो ह्यहर्जं°। ५ क. °यार्थम्। त°। ६ घ. °दर्शे तनुप्र°। ७ छ. प्रस्थे। ८ ख. ग. च. °र्थे। स्ववेश्मसु वस°। ९ ट. ळः। वसुः प°।

अथ शीक्षाध्याये पञ्चमोऽनुवाकः ।

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः (१)। मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतींषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूंषि ( २ ) ।

संहिताविषयमुपासनमुक्तं तदनु मेधाकामस्य श्रीकामस्य मन्त्रा अनुक्रान्तास्ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं प्रस्तूयते । भूर्भुवः सुवरित्युक्तोपप्रदर्शनार्थः । एतातिस्र इति प्रदर्शितानां परामर्शार्थः । परामृष्टाः स्मार्यन्ते वेत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः[1] स्मार्यन्ते तावत् । तासामियं चतुर्थी व्याहृतिर्मह इति । तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते । उ ह स्म, इत्येतेषां वृत्तानुकथनार्थत्वाद्विदितवान्ददर्शेत्यर्थः । माहाचमस्यग्रहणं[2]मार्षानुस्मरणार्थम् । [3]ऋषिस्मरणमप्युपासनाङ्गमिति गम्यत इहोपदेशात् । येयं माहाचमस्येन दृष्टा व्याहृतिर्मह इति तद्ब्रह्म महद्धि ब्रह्म । महश्च व्याहृतिः । किं पुनस्तत् । स

१ घ. ङ. °ष्टाः स्मर्य° । २ ख. ग. च. ज. °णमार्षेयानु° । ३ क. ख. ग. घ. ङ. च. छ. ल. ट. ऋष्यनुस्म° ।

आत्मा। आप्नोतेर्व्याप्तिकर्मणः। आत्मेतराश्च व्याहृतयो लोका देवा वेदाः प्राणाश्च मह इत्यनेन व्याहृत्यात्मनाऽऽदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यतः। अतोऽङ्गान्यवयवा अन्या देवताः। देवताग्रहणमुपलक्षणार्थं लोकादीनाम्। मह इत्येतस्य व्याहृत्यात्मनो देवलोकादयः सर्वेऽवयवभूताः। यत आहाऽऽदित्यादिभिर्लोकादयो महीयन्त इति। आत्मनो ह्यङ्गानि महीयन्ते महनं वृद्धिरुपचयो महीयन्ते वर्धन्त इत्यर्थः। * अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूरिति। एवमुत्तरोत्तरैकैका चतुर्धा भवति।

वृत्तानुवादपूर्वकमुत्तरानुवाकस्य संबन्धमाह—**संहिताविषयमित्यादिना**। व्याहृतीनां श्रद्धागृहीतत्वात्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहेदिति ततो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्मान्तर्हृदये[2] ध्येयत्वेनोपदिश्यत इत्यर्थः। मह इति व्याहृताङ्गिब्रह्मदृष्टिः कर्तव्या। तत्र किं साम्यमित्यत आह—**महद्धीति**। यथा देवदत्तस्य पादादीन्यङ्गानि मध्यभागश्चाङ्गीतरेषामङ्गानामात्मा कथ्यते व्यापकत्वात्। तथा महोव्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते। इतराश्च व्याहृतयः पादाद्यवयवत्वेन कल्प्यन्ते। प्रथमव्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इत्यर्थः। व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरुक्तः। इदानीमङ्गविशेषविधिः कथ्यते—**भूरिति वा अयं लोक इत्यादिना**। तत्रैकैका व्याहृतिश्चतुष्प्रकाराऽवगन्तव्येति तात्पर्यमाह—**अयं लोक इत्यादिना**।

**मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स**

---

*अत्र—'व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरुक्तः। इदानीमङ्गविशेषविधिः कथ्यते' इति ध. पुस्तकेऽधिकं दृश्यते।

---

१ ङ. °णाश्चेत्य°। २ ग. घ. छ. °ये ज्ञेय°।

वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति (३) ॥

असौ लोको यजूꣳषि वेद द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

मह इति ब्रह्म । ब्रह्मेत्योंकारः । शब्दाधिकारेऽन्यस्यासंभवात् । उक्तार्थमन्यत् । ता वा एताश्चतस्रश्चतुर्धेति । ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुष्प्रकाराः । धाशब्दः प्रकारवचनः । चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः । तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः । ता यथोक्तव्याहृतीर्यो वेद स वेद विजानाति । किं ब्रह्म । ननु—तद्ब्रह्म स आत्मेति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत्स वेद ब्रह्मेति । न । तद्विशेषविवक्षुत्वाददोषः । सत्यं विज्ञातं चतुर्थव्याहृत्यात्मा ब्रह्मेति न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च । 'शान्तिसमृद्धम्' इत्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगो विज्ञायत इति तद्विवक्षुर्हि(क्षु हि?) शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह । अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन (ण) विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्योभयोर्ह्यनुवाकयोरेकमुपासनं लिङ्गाच्च । भूरित्यग्नौ प्रतितिष्ठतीत्यादिकं लिङ्गमुपासनैकत्वे विधायकाभावाच्च । न हि वेद उपासितव्य इति विधायकः कश्चिच्छब्दोऽस्ति । व्याहृत्यनुवाके 'ता यो वेद' इति च वक्ष्यमाणार्थत्वान्नोपासनभेदकः । वक्ष्यमाणार्थत्वं च तद्विशेषविवक्षुत्वादित्यादिनोक्तम् । सर्वे देवा अस्मा एवं विदुषेऽङ्गभूता आवहन्त्यानयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

एकैका व्याहृतयो यदा चतुष्प्रकाराश्चिन्त्यन्ते तदा षोडशकलः पुरुष उपासितो भवतीत्यभिप्रेत्य संक्षेपमाह—ता वा एता इति । स वेद ब्रह्मेति ब्रह्मवेदनं फलत्वेन न संकीर्त्यतेऽधिकारविधिवाक्ये । किंतु वक्ष्यमाणानुवाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह—न तद्विशेषविवक्षुत्वादित्यादिना । यदि

---

१ घ. ङ. च. छ. इत्यन्तो ।

व्याहृत्यवयवमेव ब्रह्मोत्तरत्रोपास्यते तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटेत । तस्माद्व्याहृत्यात्मकदेवताप्राप्त्यभिधानम् । उपासनैकत्वे लिङ्गमाह—**लिङ्गाच्चेति**। किंचैकत्र प्रधानविद्याविधिरपरत्र गुणविधिरित्येवमनुवाकभेदे चरितार्थे नानन्यथासिद्धं भेदकं प्रमाणमुपलभ्यत इत्याह—**विधायकाभावाच्चेति** । किं विधायकात्मक इति भिन्नविद्याबोधक इत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ शीक्षाध्याये षष्ठोऽनुवाकः ।

---

भूर्भुवःसुवःस्वरूपा मह इत्येतस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम् । यस्य ता अङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते शालग्राम इव विष्णोः । तस्मिन्हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते । पाणाविवाऽऽमलकम् । मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते—

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं
पुरुषो मनोमयः । अमृतो हिरण्मयः ।
अन्तरेण तालुके । य एष स्तन इवावलम्बते ।
सेन्द्रयोनिः । यत्रासौ केशान्तो विव-
र्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ
प्रतितिष्ठति । भुव इति वायौ ( १ ) ।

स इति व्युत्क्रम्य 'अयं पुरुषः' इत्यनेन संबध्यते । य एषोऽन्तर्हृदये

---

१ ख. °र्थेऽनुवाकभेदप्रमाणं तु नोपासनाभेदात्सिद्ध्यतीति वाच्यम् । तस्य गुणपरत्वेनान्यथासिद्धत्वात् । तस्मादन्यथासिद्धमुपासनाभेदेनैव सिद्धं प्रमाणं नोपल° । २ क. ख. ग. च. ज. झ. ट. °यक इ° । ३ ङ. °लब्ध्यर्थमुपा° । ४ ङ. °शः स स्था° । ५ ङ. °पासनं ।

हृदयस्यान्तर्हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते। तस्यान्तर्य एष आकाशः प्रसिद्ध एव कारकाकाशवत्। तस्मिन्सोऽयं पुरुषः। पुरि शयनात्पूर्णा वा भूरादयो लोका येनेति पुरुषो मनोमयः। मनो विज्ञानम्। मनुतेर्ज्ञानकर्मणस्तन्मयस्तदुपलभ्यत्वात्। मनुतेऽनेनेति वा मनोऽन्तःकरणं तदभिमानी तन्मयस्तल्लिङ्गो वा। अमृतोऽमरणधर्मा हिरण्मयो ज्योतिर्मयः। तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्येश्वरस्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा। सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता। यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत्। यत्र च केशान्तः केशानामन्तोऽवसानं मूलं केशान्तो विवर्तते विभागेन वर्तते मूर्धप्रदेश इत्यर्थः। तं देशं प्राप्य तत्र विनिःसृता। व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता या सेन्द्रयोनिरिन्द्रस्य ब्रह्मणो योनिर्मार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः। तयैवं विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्यास्य लोकस्याधिष्ठाता भूरितिव्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतस्तस्मिन्नग्नौ प्रतितिष्ठत्यग्न्यात्मनेमं लोकं व्याप्नोतीत्यर्थः। तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ। प्रतितिष्ठतीत्यनुवर्तते॥

तदुपलभ्यत्वादिति। ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यत्वाद्व्याप्तेरित्यर्थः। तस्य मनसः प्रवृत्तिं दृष्ट्वा तदधिष्ठातृतया हिरण्यनाडी योगशास्त्रे बोध्यते। तस्य शास्त्रे सकलकरणाधिष्ठातृत्वेन प्रसिद्धत्वादिति तल्लिङ्गत्वमुक्तमित्यर्थः।

सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धम-

१ ङ. ञ. 'स्तत्प्रायत्वा'। २ क. °पस्य ब्रह्मणः स्वरूपप्र°। ३ ङ. मूर्ध्न. प्र°। ४ ख. ङ. छ. ट. °व्यमाणा तेनान्तरेण त°। ५ ख. ग. ङ. च. छ. तथैवं। ६ क. ख. ग च. ट. °भ्यमानत्वा°। ७ क. ख. ङ. °स्य जडस्य म°। ८ च. छ. ञ °ल्ले हिरण्यगर्भोऽनुमीयते। त°।

मृतम्। इति प्राचीनयोग्योपास्स्व (२)॥

वायावमृतमेकं च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये षष्ठोऽनुवाकः॥ ६॥

सुवरिति तृतीयव्याहृत्यात्मन्यादित्ये। मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति। तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजाऽधिपतिर्भवति। अङ्गभूतानां देवानां यथा ब्रह्म। देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे। आप्नोति मनसस्पतिम्। सर्वेषां हि मनसां पतिः सर्वात्मकत्वाद्ब्रह्मणः। सर्वैर्हि मनोभिस्तन्मनुते। तदाप्नोत्येवं विद्वान्। किंच वाक्पतिः सर्वासां वाचां पतिर्भवति। तथैव चक्षुष्पतिश्चक्षुषां पतिः श्रोत्रपतिः श्रोत्राणां पतिः। विज्ञानपतिर्विज्ञानानां च पतिः। सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः। किंच ततोऽप्यधिकतरमेतद्भवति। किं तत्। उच्यते। आकाशशरीरमाकाशः शरीरमस्याऽऽकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम्। किं तत्। प्रकृतं ब्रह्म। सत्यात्म सत्यं मूर्तामूर्तमवितथं स्वरूपं चाऽऽत्मा स्वभावोऽस्य तदिदं सत्यात्म। प्राणारामं प्राणेष्वा[राम आ]रमणमाक्रीडा यस्य तत्प्राणारामम्। प्राणानां वाऽऽरामो यस्मिंस्तत्प्राणारामम्[1]। मनआनन्दम्। आनन्दभूतं सुखकृदेव यस्य मनस्तन्मनआनन्दम्। शान्तिसमृद्धं शान्तिरुपशमः शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्। शान्त्या वा समृद्धं तदुपलभ्यत इति शान्तिसमृद्धम्। अमृतममरणधर्मि। एतच्चाधिकतरं विशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यमिति। एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्वेत्याचार्यवचनोक्तिरादरार्था॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये षष्ठोऽनुवाकः॥ ६॥

---

१ घ. °राममनन्दामृतप्राणे°। २ क. ख. च. छ. ञ. ट. प्राणेष्टा र°।

स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्स्रष्टृत्वादिलक्षणं न भवतीत्याह—अङ्गभूतानां देवानामिति । सावधिकमैश्वर्यमेवाऽऽह—प्राप्नोतीत्यादिना ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शिक्षाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ शिक्षाध्याये सप्तमोऽनुवाकः ।

---

यदेतद्व्याहृत्यात्मकं ब्रह्मोपास्यमुक्तं तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते । पञ्चसंख्यायोगात्पङ्क्तिच्छन्दःसंपत्तिः । ततः पाङ्क्तत्वं सर्वस्य । पाङ्क्तश्च यज्ञः । "पञ्चपदा पङ्क्तिः । पाङ्क्तो यज्ञः" इति श्रुतेः । तेन यत्सर्वं लोकाद्यात्मान्तं च पाङ्क्तं परिकल्पयन्ति(ति) यज्ञमेव तत्परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसंपद्यते । तत्कथं पाङ्क्तमिदं सर्वमित्यत आह—

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्नि-
र्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो
वनस्पतय आकाश आत्मा । इत्यधिभूतम् ।

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशा इति लोकपाङ्क्तम् । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तम् । आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तम् । आत्मेति विराड्भूताधिकारात् । इत्यधिभूतमित्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम् । लोकदेवतापाङ्क्तयोश्चाभिहितत्वात् ।

उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह—यदेतदित्यादिना । पृथिव्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्य च्छन्दसः संपादनादित्याह—पञ्चसंख्येति । न केवलं पञ्चसंख्यायोगात्पङ्क्तिच्छन्दःसंपादनं यज्ञत्वसंपादनमपि कर्तुं शक्यत इत्याह—पाङ्क्तश्च यज्ञ इति । पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिः संपाद्यत इति यज्ञः पाङ्क्त इत्यर्थः ।

अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः

---

१ ग. घ. च. °न्तं न पा° ।

समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म माꣳसꣳ स्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳ सर्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति(१)

सर्वमेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

अथानन्तरमध्यात्मं पाङ्क्तत्रयमुच्यते—प्राणादि वायुपाङ्क्तम्। चक्षुरादीन्द्रियपाङ्क्तम्। चर्मादि धातुपाङ्क्तम्। एतावद्धीदं सर्वमध्यात्मम्। बाह्यं च पाङ्क्तमेवेत्येतदेवमधिविधाय परिकल्प्यर्षिर्वेद एतद्दर्शनसंपन्नो वा कश्चिदृषिरवोचदुक्तवान्। किमित्याह—पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैवाऽऽध्यात्मिकेन संख्यासामान्यात्पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति। एकात्मतयोपलभ्यत इत्येतदेव। पाङ्क्तमिदं सर्वमिति यो वेद स प्राजापत्यात्मैव भवतीत्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

"उत्कृष्टदृष्टिर्निकृष्टे फलवती" इति न्यायाद्बाह्यपाङ्क्तरूपेणाऽऽध्यात्मिकपाङ्क्तत्रयमवगन्तव्यमित्यभिप्रेत्याऽऽह—एकात्मतयेति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ शीक्षाध्यायेऽष्टमोऽनुवाकः।

---

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम्। अनन्तरं च पाङ्क्तस्वरूपेण तस्यैवोपासनमुक्तम्। इदानीं सर्वोपासनाङ्गभूतस्योंकारस्योपासनं विधित्स्यते। परापरब्रह्मदृष्ट्या ह्युपास्यमान ओंकारः शब्दमात्रोऽपि पराप-

रब्रह्मप्राप्तिसाधनं भवति। स ह्यालम्बनं ब्रह्मणः परस्यापरस्य च। प्रतिमेव विष्णोः। "एतेनैवाऽऽयतनेनैकतरमन्वेति" इति श्रुतेः।

ओमिति ब्रह्म। ओमितीद्ँ सर्वम्।

ओमिति। इतिशब्दः स्वरूपपरिच्छेदार्थः। ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेदुपासीत। यत ओमितीदं सर्वं हि शब्दरूपमोंकारेण व्याप्तम्। "तद्यथा शङ्कुना" इति श्रुत्यन्तरात्। अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्वमोंकार इत्युच्यते।

वृत्तानुवादपूर्वकमुत्तरानुवाकमवतारयति—व्याहृत्यात्मन इत्यादिना। वेदविदां हि सर्वाः क्रिया ओंकारमुच्चार्य प्रवर्तन्ते ततस्तस्य श्रद्धागृहीतत्वात्तत्परिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादायैवोपासनं विधीयत इत्यर्थः। नन्वोंकारस्य शब्दमात्रस्याचेतनत्वादहमनेनोपासित इतिज्ञानाभावात्कथं फलदातृत्वं स्यादित्याशङ्क्याऽऽह—परापरेति। प्रतिमाद्यर्चनमिव सर्वत्रेश्वर एव फलदातेति भावः। ओंकारे ब्रह्मत्वाध्यासे किं सादृश्यमित्यत आह—ओमितीदमिति। सर्वास्पदत्वमोंकारस्य ब्रह्मणा सादृश्यमित्यर्थः।

ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओँ शोमिति शस्त्राणि शँसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति (१) ॥

ओं दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

ओंकारस्तुत्यर्थमुत्तरो ग्रन्थः। उपास्यत्वात्तस्य। ओमित्येतदनुकृतिरनुकरणम्। करोमि यास्यामि चेति कृतमुक्तमोमित्यनुकरोत्यन्यः। अत ओंकारोऽनुकृतिः। ह स्म वा इति प्रसिद्धावद्योतकाः। प्रसिद्धं

ह्योंकारस्यानुकृतित्वम् । अपि च "ओं श्रावय" इति प्रैषपूर्वकमाश्रावयन्ति प्रतिश्रावयन्ति । तथोमिति सामानि गायन्ति सामगाः । ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि । तथोमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौत्यनुजानाति प्रैषपूर्वकमाश्रावयति । ओमित्यग्निहोत्रमनुजानाति । जुहोमीत्युक्त ओमित्येवानुज्ञां प्रयच्छति । ओमित्येव ब्राह्मणः प्रवक्ष्यन्प्रवचनं करिष्यन्नध्येष्यमाण ओमित्येवाऽऽह । ओमिति प्रतिपद्यतेऽध्येतुमित्यर्थः । ब्रह्म वेदमुपाप्नवानीति प्राप्नुयां ग्रहीष्यामीति । उपाप्नोत्येव ब्रह्म । अथवा ब्रह्म परमात्मा तमुपाप्नवानीत्यात्मानं प्रवक्ष्यन्प्रापयिष्यन्नोमित्येवाऽऽह । स च तेनोंकारेण ब्रह्म प्राप्नोत्येव । ओंकारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्तस्मादोंकारं ब्रह्मेत्युपासीतेति वाक्यार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

शस्त्राणि गीतिरहिता ऋच उच्यन्ते । प्रतिगरमिति । ओं थामो दैवेतिशब्दमध्वर्युः प्रतिगृणाति होतुः शंसनं प्रति । प्रतिशंसनमुच्चारयतीत्यर्थः । प्रवक्ष्यन्निति । "वच परिभाषणे" इत्यस्य रूपं प्रथमव्याख्याने । द्वितीये "वह प्रापणे" इत्यस्य द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ शीक्षाध्याये नवमोऽनुवाकः ।

---

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च

स्वाध्यायप्रव॑चने॒ च । प्रजा च स्वाध्यायप्रव॑-
चने॒ च । प्रजनश्च स्वाध्यायप्रव॑चने॒ च ।

विज्ञानादेवाऽऽप्नोति स्वाराज्यमित्युक्तत्वाच्छ्रौतस्मार्तानां कर्मणा-मानर्थक्यं प्राप्तमित्यतस्तन्मा प्रापदिति कर्मणां पुरुषार्थं प्रति साधनत्व-प्रदर्शनार्थमिहोपन्यासः । ऋतमिति व्याख्यातम् । स्वाध्यायोऽध्यय-नम् । प्रवचनमध्यापनं ब्रह्मयज्ञो वा । एतान्यृतादीन्यनुष्ठेयानीति वाक्यशेषः । सत्यं च सत्यवचनं यथाव्याख्यातार्थं वा । तपः कृच्छ्रादि । दमो बाह्यकरणोपशमः । शमोऽन्तःकरणोपशमः । अग्नय आधातव्याः । अग्निहोत्रं च होतव्यम् । अतिथयश्च पूज्याः । मानुषमिति लौकिकः संव्यवहारः । तच्च यथाप्राप्तमनुष्ठेयम् । प्रजा चोत्पाद्या । प्रजनश्च प्रजननमृतौ भार्यागमनमित्यर्थः ।

व्यवहितानुवाकेन संबन्धमाह—विज्ञानादेवेत्यादिना । अपरविद्यासहकारितया तत्फलेनैव फलवत्त्वासिद्ध्यर्थमुत्तरानुवाकारम्भ इत्यर्थः । लौकिकसंव्यवहारो विवाहादिः ।

प्रजातिश्च स्वाध्यायप्रव॑चने॒ च ।
सत्यमिति सत्यवचा राथी॒तरः ।

प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयितव्य इत्येतत् । सर्वैरेतैः कर्म-भिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम् । स्वाध्यायाधीनं ह्यर्थज्ञानम् । अर्थज्ञानायत्तं च परं श्रेयः । प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थं च । अतः स्वाध्या-यप्रवचनयोरादरः कार्यः । सत्यमिति सत्यमेवानुष्ठातव्यमिति सत्य-वचाः सत्यमेव वचो यस्य सोऽयं सत्यवचा नाम वा तस्य । राथीतरो रथीतरस्य गोत्रो राथीतराचार्यो मन्यते ।

पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्यमाह—सर्वैरेतैरिति । किमिति यत्नतोऽ-नुष्ठेये तत्राऽऽह—स्वाध्यायाधीनमिति । त्रयाणामृषीणां मतभेदोपन्यासेन स्वाध्याय-प्रवचनयोरेवाऽऽदरं विवृणोति—सत्यमित्यादिना ।

१ ग. च. एतदादीन्यृ° । २ क. ख. ग. ङ. च. ञ. °वदनं । ३ क. ङ. ञ. °जाश्चोत्पाद्याः । प्र° । ४ क. ठ. °किको वि° । ५ ङ. राधीतरो । ६ ङ. राथ्रीतरा° ।

तप इति तपोनित्यः पौरुशिष्टिः ।
स्वाध्यायप्रवचने एवेति नाको
मौद्गल्यः । तद्धि तपस्तद्धि तपः (१)॥

प्रजा च स्वाध्यायप्रवचने च षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये
नवमोऽनुवाकः ॥ ९ ॥

तप इति तप एव कर्तव्यमिति तपोनित्यस्तपसि नित्यस्तपःपरस्तपोनित्य इति वा नाम । पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तपः । हि यस्मात्स्वाध्यायप्रवचने एव तपस्तस्मात्ते एवानुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये
नवमोऽनुवाकः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अथ शीक्षाध्याये दशमोऽनुवाकः ।

---

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ।

अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नायः । स्वाध्यायश्च विद्योत्पत्तये । प्रकरणात् । विद्यार्थं हीदं प्रकरणम् । न चान्यार्थत्वमवगम्यते। स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्प्यते । अहं वृक्षस्योच्छेदात्मकस्य संसारवृक्षस्य रेरिवा प्रेरयिताऽन्तर्याम्यात्मना । कीर्तिः ख्यातिर्गिरेः पृष्ठमिवोच्छ्रिता मम । ऊर्ध्वपवित्र ऊर्ध्वकारणं पवित्रं पावनं

ज्ञानप्रकाश्यं पवित्रं परमं ब्रह्म यस्य सर्वात्मनो मम सोऽहमूर्ध्वपवित्रः । वाजिनीव वाजवतीव । वाजमन्नं तद्वति सवितरीत्यर्थः । यथा सवितर्यमृतमात्मतत्त्वं विशुद्धं प्रसिद्धं श्रुतिस्मृतिशतेभ्य एवं स्वमृतं शोभनं विशुद्धमात्मतत्त्वमस्मि भवामि ।

स्वाध्यायार्थ इति जपार्थः । "इषे त्वेति शाखां छिनत्ति" इतिवत् । अन्यत्र विनियोजकं श्रुत्यादिप्रमाणमपि नोपलभ्यत इत्याह—न चान्यार्थत्वमिति । अक्षितमसीत्यादिवदुपासनाविधिविशेषत्वं वा वक्तुं न शक्यते । ज्ञानसाधनक्रियाविधेः प्रक्रान्तत्वादित्यर्थः ।

द्रविण॑ सर्वर्चसम् । सुमेधा अमृतोक्षितः ।

इति त्रिशङ्कोर्वेदानुवचनम् (१) ॥

अह॑ षट् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये

दशमोऽनुवाकः ॥ १० ॥

द्रविणं धनं सवर्चसं दीप्तिमत्तदेवाऽऽत्मतत्त्वमस्मीत्यनुवर्तते । ब्रह्मज्ञानं वाऽऽत्मतत्त्वप्रकाशकत्वात्सवर्चसम् । द्रविणमिव द्रविणं मोक्षसुखहेतुत्वात् । अस्मिन्पक्षे प्राप्तं मयेत्यध्याहारः कर्तव्यः । सुमेधाः शोभना मेधा सर्वज्ञलक्षणा यस्य मम सोऽहं सुमेधाः । संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वम् । अत एवामृतोऽमरणधर्माऽक्षितोऽक्षीणोऽव्ययः । उक्षितो वाऽमृतेन वोक्षितः सिक्तः । "अमृतोक्षितोऽहम्" इत्यादि ब्राह्मणम् । इत्येवं त्रिशङ्कोर्ऋषेर्ब्रह्मभूतस्य ब्रह्मविदो वेदानुवचनं वेदो वेदनमात्मैकत्वविज्ञानं तस्य प्राप्तिमनु वचनं वेदानुवचनम् । आत्मनः कृतकृत्यताख्यापनार्थं वामदेववत्त्रिशङ्कुनाऽऽर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थः । अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते । ऋतं चेत्यादिकर्मोपन्यासादनन्तरं च वेदानुवचनपाठादेतदवगम्यते । एवं श्रौतस्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य परं ब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति[3] ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये

दशमोऽनुवाकः ॥ १० ॥

---

१ ङ. परं । २ ङ. °ताप्रख्या° । ३ ग. °ति गम्यते । इ° ।

अहं वृक्षस्येतिमन्त्रस्यर्षिस्त्रिशङ्कुः, पङ्क्तिश्छन्दः, परमात्मा देवता, ब्रह्मविद्यार्थे जपे विनियोगः । न केवलमस्य जपो विद्यार्थः पूर्वोक्तानि कर्माण्यपीत्याह—ऋतं चेत्यादिना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये दशमोऽनुवाकः ॥ १० ॥

---

अथ शीक्षाध्याय एकादशोऽनुवाकः ।

---

## वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति ।

वेदमनूच्येत्येवमादिकर्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मा[1]र्तकर्माणीत्येवमर्थः । अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात् । संस्कृतस्य हि विशुद्धसत्त्वस्याऽऽत्मज्ञानमञ्जसैवोत्पद्यते । "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते" इति[2] स्मृतिः । वक्ष्यति च—'तपसा ब्रह्म विजिज्ञासस्व' इति । अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्मा[3]णि । अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः । प्रागुपन्यासाच्च कर्मणां केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि । उदितायां च विद्यायाम् "अभयं प्रतिष्ठां विन्दते" "न बिभेति कुतश्चन" "किमहं साधु नाकरवम्" इत्येवमादिना कर्मनैष्किंचन्यं दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति । मन्त्रवर्णाच्च—"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । ऋतादीनां पूर्वत्रोपदे[4]शानर्थक्यपरिहारार्थः । इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यनियमार्थः । वेदमनूच्याध्याप्याऽऽचार्योऽन्तेवासिनं शिष्यमनुशास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः । अतोऽवगम्यतेऽधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति । "बुद्ध्वा कर्माणि चाऽऽरभेत्" इति स्मृतेश्च ।

उत्तरानुवाकस्य तात्पर्यमाह—वेदमनूच्येत्यादिना । विद्योत्पत्त्यर्थं नित्यनैमित्तिकान्यवश्यान्यनुष्ठेयानीत्येको नियम उक्तः । प्रागेव चानुष्ठेयानीति नियमान्तरमाह—प्रागुपन्यासाच्च कर्मणामिति । संग्रहवाक्यं विवृणोति—केवलेत्यादिना । अविद्यया कर्मणा मृत्युमधर्मं तीर्त्वेति मन्त्रोऽपि विद्योत्पत्तेः प्रागेव कर्मानुष्ठानं सूचय-

---

१ क. घ. ङ. ट. °स्मार्तानि क° । २ ख °ति श्रुतिः । अ° । ३ ङ. °र्माणीति अ° । ४ ख. ग. घ. ङ. च. ञ. ट °देश आन° ।

तीत्यर्थः । "ऋतं च स्वाध्यायप्रवचने च" इत्यादिना पूर्वत्र कर्मानुष्ठानमुक्तमेवातः पौनरुक्त्यमित्याशङ्क्याऽऽह—ऋतादीनामिति । विचारमकृत्वा गुरुकुलान्न निवर्तितव्यम् । किंत्वध्ययनविधेरर्थाववोधक(न)द्वारेण पुरुषार्थपर्यवसायितासिद्ध्यर्थमक्षरग्रहणानन्तरमर्थाववोधे प्रयतितव्यमित्याह—ग्रन्थग्रहणादन्विति । वेदमधीत्य स्नायादिति स्मृतिरप्येतच्छ्रुतिविरुद्धेत्याह—अतोऽवगम्यत इति ।

सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।

कथमनुशास्तीत्याह—सत्यं वद यथाप्रमाणावगतं वक्तव्यं तद्वद । तद्वद्धर्मं चर । धर्म इत्यनुष्ठेयानां सामान्यवचनं सत्यादिविशेषनिर्देशात् । स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं मा कार्षीः । आचार्यायाऽऽचार्यार्थं प्रियमिष्टं धनमाहृत्याऽऽनीय दत्त्वा विद्यानिष्क्रयार्थम् । आचार्येण चानुज्ञातोऽनुरूपान्दारानाहृत्य प्रजातन्तुं प्रजासंतानं मा व्यवच्छेत्सीः प्रजासंततेर्विच्छित्तिर्न कर्तव्या । अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः । प्रजाप्रजननप्रजाति[2]त्रयनिर्देशसामर्थ्यात् । अन्यथा प्रजननश्चे[3]त्येत[4]देकमेवावक्ष्यत् ।

वक्तव्यमिति । वचनार्हं परस्य हितामित्यर्थः ।

सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । ( १ ) ।

सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः । सत्याच्च प्रमदनमनृतप्रसङ्गः । प्रमादशब्दसामर्थ्यात् । विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः । * अन्य-

---

* अत्र ख. पुस्तके 'अनृतवदनविषये दोषश्रुतेश्च', "योऽनृतं वदति समूलो वा एष परिशुष्यति" इति । "न सत्यात्परमो धर्मो नानृतात्पातकं परम्" इति स्मृतेः' । इत्यधिकं दृश्यते ।

---

१ ख. ग. च. °बोधाय । प्र° । २ छ. 'तित्रितय° । ३ घ. त्येतात्रदे° । ४ ख. °देवमे° ।

थाऽसत्यवदनप्रतिषेध एव स्यात्[1] । धर्मान्न प्रमदितव्यम् । धर्मशब्दस्यानुष्ठेयविषयत्वादननुष्ठानं प्रमादः स न कर्तव्यः । अनुष्ठातव्य एव धर्म इति यावत् । एवं कुशलादात्मरक्षार्थात्कर्मणो न प्रमदितव्यम् । भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । स्वाध्यायोऽध्ययनं प्रवचनमध्यापनं ताभ्यां न प्रमदितव्यम् । ते हि नियमेन कर्तव्ये इत्यर्थः ।

देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ( २ ) । नो इतराणि ।

तथा देवपितृकार्याभ्यां न प्रमदितव्यम् । दैवपित्र्ये कर्मणी कर्तव्ये । मातृदेवो माता देवो यस्य स त्वं मातृदेवो भव स्याः । एवं पितृदेव आचार्यदेवोऽतिथिदेवो भव । देवतावदुपास्या एत इत्यर्थः । यान्यपि चान्यान्यनवद्यान्यनिन्दितानि शिष्टाचारलक्षणानि कर्माणि तानि सेवितव्यानि कर्तव्यानि त्वया । नो अकर्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि । यान्यस्माकमाचार्याणां सुचरितानि शोभनचरितान्याम्नायाद्यविरुद्धानि तान्येव[2] त्वयोपास्यान्यदृष्टार्थान्यनुष्ठेयानि, नियमेन कर्तव्यानीति यावत् । नो इतराणि विपरीतान्याचार्यकृतान्यपि ।

ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः ।
तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्[3] ।

---

१ ख. च. °त् । तथा ध° । २ ख. ग. च. °स्या एवैत° । ३ छ. °भनानि च° ।

ये के च विशेषिता आचार्यत्वादिधर्मैरस्मदस्मत्तः श्रेयांसः प्रशस्यतरास्ते च ब्राह्मणा न क्षत्रियादयस्तेषामासनेनाऽऽसनदानादिना त्वया प्रश्वसितव्यम् । प्रश्वसनं प्रश्वासः श्रमापनयः, तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः । तेषां चाऽऽसने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः । केवलं तदुक्तसारग्राहिणा भवितव्यम् ।

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ( ३ ) । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः ।

किंच यत्किंचिद्देयं तच्छ्रद्धयैव दातव्यम् । अश्रद्धयाऽदे*यं न दातव्यम् । श्रिया विभूत्या देयं दातव्यम् । ह्रिया लज्जया च देयम् । भिया च भयेन देयम् । संविदा च । संविन्मित्रादिकार्यम् । अथैवं वर्तमानस्य यदि कदाचित्ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वाऽऽचार[१]लक्षणे विचिकित्सा संशयः [२]स्यात् । ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन संबन्धः कर्तव्यः । संमर्शिनो विचारक्षमाः । युक्ता अभियुक्ताः कर्मणि वृत्ते वा । आयुक्ता अपरप्रयुक्ताः । अलूक्षा अरूक्षा अक्रूरमतयः । धर्म[३]कामा अदृष्टार्थिनोऽ-

* ख. पुस्तके टिप्पण्यां " देयमित्यपि विद्यारण्यैरुक्तम् " इति वर्तते ।

१ ख. ग. च. °रविल° । २ ख. ग. च. °स्याच्चेत् । ३ ख. °कामाः स्युरद° ।

काम हता इत्येतत्स्युर्भवेयुः । ते यथा येन प्रकारेण ब्राह्मणास्तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरंस्तथा त्वमपि वर्तेथाः । अथाभ्याख्यातेष्वभ्युक्ता दोषेण संदिह्यमानेन संयोजिताः केनचित्तेषु च यथोक्तं सर्वमुपनयेद्ये तत्रेत्यादि ।

एवं कर्तव्यमर्थमुपदिश्यानुष्ठानकाले समुत्पन्नसंशयनिवृत्त्यर्थं शिष्टाचारः प्रमाणयितव्य इत्याह—अथैवमित्यादिना । अपरप्रयुक्ता इति । स्वतन्त्रा इत्यर्थः । अभ्युक्ता अभिशस्ता इत्यर्थः ॥

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् (४) ॥

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि स्यात्तेषु वर्तेरन्त्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याय एकादशोऽनुवाकः ॥ ११ ॥

एष आदेशो विधिः । एष उपदेशः पुत्रादिभ्यः पित्रादीनाम् । एषा वेदोपनिषद्वेदरहस्यं वेदार्थ इत्येतत् । एतदेवानुशासनमीश्वरवचनम् । आदेशवाक्यस्य विधेरुक्तत्वात्सर्वेषां वा प्रमाणभूतानामनुशासनमेतत् । यस्मादेवं तस्मादेवं यथोक्तं सर्वमुपासितव्यं कर्तव्यम् । एवमु चैतदुपास्यमुपास्यमेव चैतन्नानुपास्यमित्यादरार्थं पुनर्वचनम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्य एकादशोऽनुवाकः ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवच्छिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याय एकादशोऽनुवाकः ॥ ११ ॥

---

१ ट. °देव चानु° । २ म. नुशंमन° ।

अथ शीक्षाध्याये द्वादशोऽनुवाकः ।

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः ।
नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं
ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् ।
ऋतमवादिषम् । सत्यमवादिषम् । तन्मामा-
वीत् । तद्वक्तारमावीत् । आवीन्माम् । आवी-
द्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः (१) ।

सत्यमवादिषं पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शीक्षाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

*अतीतविद्याप्राप्त्युपसर्गशमनार्थं शान्तिं पठति—शं नो मित्र इति । व्याख्यातमेतत्पूर्वम् ।

शं नो मित्र इति । तदपरं ब्रह्म मामपरविद्यार्थिनमावीदरक्षादित्यर्थः ॥

अत्रैतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थं किं कर्मभ्य एव केवलेभ्यः परं श्रेय उत विद्यासव्यपेक्षेभ्य आहोस्विद्विद्याकर्मभ्यां संहताभ्यां विद्याया वा कर्मापेक्षाया उत केवलाया एव विद्याया इति । तत्र केवलेभ्य एव कर्मभ्यः स्यात् । समस्तवेदार्थज्ञानवतः कर्माधिकारात् । “वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना” इति स्मरणात् । अधिगमश्च सहोपनिषदर्थेनाऽऽत्मज्ञानादिना । “विद्वान्यजते” “विद्वान्याजयति” इति च विदुष एव कर्मण्यधिकारः प्रदर्श्यते सर्वत्र । “ज्ञात्वा चानुष्ठानम्” इति च । कृत्स्नश्च वेदः कर्मार्थ इति हि मन्यन्ते केचित् । कर्मभ्यश्चेत्परं श्रेयो नावाप्यते वेदोऽनर्थकः स्यात् ।

* ‘अतीत’ इत्यारभ्य ‘पूर्वम्’ इत्यन्तं क. ख. ग. घ. ङ. च. छ. ञ. ठ. पुस्तकेषु न विद्यते ।

१ ग. च. °वाप्येत वे° ।

आद्यानुवाके केवलाया विद्याया निःश्रेयससाधनत्वमुक्तमपि स्फुटीकर्तुं कर्मविधिमुपलभ्य प्रसङ्गात्पुनर्विचारयितुमुपक्रमते—**अत्रैतच्चिन्त्यत इत्यादिना** । विवेकार्थमिति पृथक्फलत्वज्ञापनार्थमित्यर्थः । 'भूतं भव्यायोपदिश्यते' इति न्यायेनाऽऽत्मज्ञानस्यापि कर्मकर्तृसंस्कारतया कर्मविधिशेषत्वाच्छ्रुतस्यापि फलस्यार्थवादमात्रत्वात्कर्मभ्य एव परं श्रेय इति पूर्वः पक्षः ।

**न नित्यत्वान्मोक्षस्य । नित्यो हि मोक्ष इष्यते । कर्मकार्यस्यानित्यत्वं प्रसिद्धं लोके, कर्मभ्यश्चेच्छ्रेयोऽनित्यं स्यात्तच्चानिष्टम् । "तद्यथेह कर्मचितो लोकः क्षीयते" इतिन्यायानुगृहीतश्रुतिविरोधात् । काम्यप्रतिषिद्धयोरनारम्भादारब्धस्य च कर्मण उपभोगेन क्षयान्नित्यानुष्ठानाच्च ज्ञाननिरपेक्ष एव मोक्ष इति चेत् । तच्च न । शेषकर्मसंभवात्तन्निमित्तशरीरान्तरोत्पत्तिः प्राप्नोतीति प्रत्युक्तम् । कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति च । यदुक्तं समस्तवेदार्थज्ञानवतः कर्माधिकारादित्यादि । तच्च न । श्रुतज्ञानव्यतिरेकादुपासनस्य । श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते नोपासनामपेक्षते । उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते । मोक्षफलमर्थान्तरप्रसिद्धं च स्यात् । "श्रोतव्यः" इत्युक्त्वा तद्व्यतिरेकेण "मन्तव्यो निदिध्यासितव्यः" इति यत्नान्तरविधानान्मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम् ।**

सिद्धान्तमाह—**न नित्यत्वादित्यादिना** । यद्यप्यध्ययनविधिप्रयुक्त्या कृत्स्नो वेदार्थ एकेन विचारितव्यस्तथाऽप्यध्ययनविधौ प्रतिवाक्याध्ययनं प्रतिवाक्यार्थविचारं च व्यापारभेदात्तत्प्रयुक्त्याऽभ्युदयकामस्य कर्मोपयोगिवाक्यार्थज्ञानवत्त्वमात्रेण कर्मण्यधिकारसंभवाद्ब्रह्मसाक्षात्कारस्य तत्रानुपयोगित्वान्न समस्तवेदार्थज्ञानवतः कर्माधिकारे प्रमाणमस्तीत्याह—**तच्च नेति** । यद्यपि चाध्ययनविधिप्रयुक्त्या वेदान्तविचारोऽपि कृतो गुरुकुल एव तथाऽपि न समस्तवेदार्थज्ञानवतोऽधिकारः । उपासनासाध्यस्य ब्रह्मसाक्षात्कारस्य पृथग्भावादित्याह—**श्रुतज्ञानेति** । श्रुताद्गुरुकुले विचारिताद्वाक्यात्कर्मानुष्ठानोपयोगि यज्ज्ञानं तावन्मात्रेण कर्मण्यधिक्रियते न ब्रह्मसाक्षात्कारफलमुपासनमपेक्षते व्यति-

---

१ क. ग. च. अथ ग्रन्थादावाद्या° । ख. अथाऽऽद्य आ° । ज. अथाऽऽदावाद्यवाद आ° । झ. अथाऽऽदावाद्या° । २ ङ. °स्कारार्थत° । ३ ख. ग. च. ट. °र्यस्य चानि° । ४ ख. ग. च. °च्च तत्प्रत्ययायानुत्पत्तेर्ज्ञान° । ५ क. ख. ग. च. ट. °सनम° । ६ ट. °ते मानाभावात् । उ° । ७ ख. ज. झ. °युक्तः कृ° । ८ क. ग. च. °वाक्यमध्य° । ९ ख. ज. झ. युक्ताभ्यु° । १० ख. °नत्वमा° । ११ ग. °त्वादन्न स° । १२ ख. ञ. °युक्तो वे° । १३ ख. ग. ज. झ. ञ. °सनसा° ।

छेऽन्तरिक्षदृष्टिः करणीयेत्यर्थः । **वायु**र्जगत्प्राणस्त्रिलोक्युदरवर्ती **संधानं** संधीयेते पूर्वोत्तरे रूपे अनेनेति संधानं संबन्ध इत्यर्थः । पूर्वोत्तरवर्णयोः संबन्धे वायुदृष्टिः करणीयेत्यर्थः । यथा—इषे त्वेत्यत्र षकारस्योपरि योऽयमेकारः सोऽयं पृथिवीरूपो यश्चोपरितनस्तकारोऽसौ द्युलोकात्मकस्तयोर्वर्णयोर्मध्यदेश आकाशात्मकस्तस्मिन्देशे संहितानिमित्तो द्विर्भावेनाऽऽपादितो योऽन्यस्तकारः स वाय्वात्मक इति ध्यायेत् । एवमुत्तरेष्वप्युपास्यावयवेषु चतुर्षु योज्यम् । **इतिः** समाप्त्यर्थः प्रकृतोपनिषदः । प्रकृतामुपनिषदमाह—**अधिलोकं** व्याख्यातम् ।

**अथ**चतुष्टयमपि स्वापेक्षया पूर्वोपासनानन्तर्यमाह । **अग्नि**र्भौमः । **आदित्य**श्चन्द्र-( त्यः सूर्य ? ) मण्डलम् । **आपो** नीराणि । विद्युत एव **वैद्युतो**ऽचिरप्रभवः । **आचार्यो** गुरुः । **अन्तेवासी** शिष्यः । **विद्या**ऽऽचार्येणोच्यमाना । **प्रवचनं** गुरुशिष्ययोः प्रकर्षेणोच्चारणं विद्यायाः । **माता** जननी । **पिता** जनकः । **प्रजा** पुत्रादिः । **प्रजनन**मुत्पात्तिः प्रजायाः । **अधरा हनु**रधरोष्ठमारभ्य चिबुकफलकाक्रान्ता । **उत्तरा हनु**रुत्तरोष्ठमारभ्याऽऽनासामूलम् । **वाग्**वर्णोच्चारणशक्तं ताल्वादिस्थमिन्द्रियम् । **जिह्वा** प्रसिद्धा । अन्यत्पर्यायचतुष्टयेऽप्यन्त्यं पदं मुक्त्वा समानपाठं पूर्ववद्व्याख्येयम् । **इति**र्महासंहितापरिसमाप्त्यर्थः । **इमा** अधिलोकाद्या **महासंहिता** व्याख्याताः ।

इदानीं पञ्चानामपि फलमाह—**यो**ऽधिकारी । **एवं** पूर्वोत्तररूपे**णैता** अधिलोकाद्या **महासंहिता व्याख्याता** विविधमा समन्ताद्व्यक्तं कथिता **वेद** जानात्युपासीतेत्यर्थः । **संधीयते** संबध्यते । **प्रजया** पुत्रादिलक्षणया । **पशुभि**र्गवादिभिः । **ब्रह्मवर्चसेन** ब्राह्मणजात्युचितेन तेजसा । **अन्नाद्येन,** अन्नं च तदाद्यं चान्नाद्यं तेन व्रीहियवादिनेत्यर्थः । **सुवर्गेण** स्वर्गेण **लोकेन** कर्मफलेन । प्रजादिभिः संपन्नो भवतीत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्याये द्वितीयोऽनुवाकः ॥ २ ।

---

अथ तृतीयोऽनुवाकः ।

---

अथ यः कश्चन दुर्मेधा नासौ मेधोत्पादनमन्तरेण ब्रह्म बोद्धुं शक्त इति मेधाकामस्य मेधाकराञ्जपमन्त्रानाह—**यः** प्रसिद्ध ओंकारश्**छन्दसां** गायत्र्यादिच्छन्दस्विनामृगादिभेदानामृ**षभः** श्रेष्ठः । **विश्वरूपः** सर्वरूपः पर्णेष्विव शङ्कुः सर्वास्विन्नगति व्यवस्थित इत्यर्थः । **छन्दोभ्य** उक्तेभ्य ऋगादिभ्यः । **अधि,** अधिकः सर्वव्यापकत्वात् । **अमृतात्**स्वयं [ प्र ] काशमानादात्मनः । **संबभूवो**त्पत्तिमकरोत् । छन्दोभ्योऽमृता-

---

१ ख. ग. °लक्का° ।

दिभिः सामानाधिकरण्याङ्गीकारेणाधिकः सम्यग्वर्तत इति व्याख्येयम् । **सोऽमृतज**श्छन्दः सारभूतः । **मा** माम् । **इन्द्र** इन्द्रस्य परमात्मनो वाचकत्वादिन्द्रः । **मेधया** श्रुतधारणशक्त्या । **स्पृणोतु** प्रीणयतु मेधासंपन्नं करोत्वित्यर्थः ।

मेधासंपत्तेः फलभूतामाशिषमाह—**अमृतस्य** तज्जनकस्य ब्रह्मणोऽहं तदस्मीति तादात्म्येन । **देव** हे देव । स्वयंप्रकाशस्याऽऽत्मनः प्रकाशकत्वेन **धारणो** धारयिता **भूयासं** भवानि । मेधाप्राप्तेरपि शरीरारोग्यादिकमन्तरेणाभावादत ( तोऽत ) स्तदपि प्रार्थ्यते—**शरीरं** स्थूलो विनाशी देहः । **मे** ममाधिकारिणः । **विचर्षणं** विचक्षणं नीरोगमित्यर्थः । भूयादितिपुरुष[ वि ]परिणामेनात्र वक्ष्यमाणे चानुषङ्गः । **जिह्वा** वागिन्द्रियाधारभूता **मे** ममाधिकारिणः । **मधुमत्तमा** जिह्वाया मधुत्वं प्रियहितसत्यभाषित्वं वेदायतनं तद्यस्या अस्ति सा मधुमती । अतिशयेन मधुमती मधुमत्तमा । **कर्णाभ्यां** श्रोत्राभ्याम् । **भूरि** बहु । **विश्रुवं** व्यशृणवमात्मसाक्षात्कारार्थं न श्रवणमस्तीत्यर्थः ।

इदानीमोंकारस्यात्यन्तं ब्रह्मसामीप्यमाह—**ब्रह्मणः** सत्यज्ञानादिलक्षणस्य **कोशः** खड्गस्येव व्याप्य व्यवस्थित आवरणविशेषः । यथा कोशः खड्गेन संभृत एवं ब्रह्मणा संभृतः प्रणवः । **असि** भवसि । एवंभूतोऽप्यविद्यादृष्टिभिर्नावगन्तुं शक्यत इत्याह—**मेधया** लौकिकश्रुतधारणया बुद्ध्या । **पिहित** आवृतः । यस्मादेवंगुणकस्ततस्त्वं **श्रुतम्** " इदं सर्वं यदयमात्मा " " अहं ब्रह्मास्मि " इत्यादिश्रवणपथमागतम् । **मे** ममाधिकारिणः । **गोपाय** रक्षां कुरु । आत्मसाक्षात्कारफलावसानं कुर्वित्यर्थः ।

मेधाविषयेऽर्थानुसंधानपुरःसरं मन्त्रजपमुक्त्वा मेधावतोऽपि बहिर्मुखस्य निःश्रीकस्य न प्रत्यक्प्रवणता । ततः श्रीकामस्य श्रीकरान्मन्त्रान्प्रणवप्रतिपादकान्सहोमलिङ्गानाह—**आवहन्ती** समन्तात्प्रापयन्ती । **वितन्वाना** विविधं विस्तारयन्ती । **कुर्वाणा** कुर्वती । चीरमनेककालम् । **अचीरमितिपदच्छेदे** क्षिप्रमिति व्याख्येयम् । **आत्मनः** स्वस्याः श्रियोऽवस्थानमिति शेषः । **वासांसि** वस्त्राणि । **ममास्यार्थिनः** । **गावश्च** प्रसिद्धाः । चकारोऽश्वादीनामनुक्तानां समुच्चयार्थः । **अन्नपाने च,** अद्यत इत्यन्नं पीयत इति पानमन्नं च पानं चान्नपाने । चकार उक्तवासोगवान्नपानसमुच्चयार्थः । **सर्वदा**ऽऽरभ्याऽऽत्मसाक्षात्कारम् । आत्मनश्चिरं कुर्वाणा वासआदिकं सर्वदा वहन्ती वितन्वाना च मम गृहेऽवस्थानं करोत्विति शेषं पूरयित्वा व्याख्येयम् ।

नन्वहं मेधाया दाता कथं श्रियो दातेत्यत आह—**तत इति** । यतो मेधाया दाता तस्मात् । अयं भावः—श्रीः प्राकृतैरपि राजादिभिर्दातुं शक्या मेधा तु भगवन्तमन्तरेण ब्रह्मणः कोशं न केनचिद्दातुं शक्या । ततोऽतिदुर्लभस्य मेधादेर्दातुर्ब्रह्मणः कोशस्योंकारस्य कियाञ्श्रीदानार्थमुद्यमः । **मे** मम श्रीकामस्य । **श्रियं** मद्गृहे यामात्मनश्चिरमवस्थानं कुर्वाणामन्नपानवस्त्रादीन्प्रापयन्तीं तामेव विस्तारयन्ती**मावह** प्रापय ।

**लोमशा**मजादिलोमभिर्लोमवतीं चेतनमण्डलबहुलामित्यर्थः । **पशुभिर्**गवाश्वादिभिः **सह** समम् । **स्वाहा** मदीया वाक्स्वशब्दवाच्यां श्रियमावहेति यामाह तां स्वाहैव स्वाहा । स्वाहेतिदर्शनाद्धोमार्थताऽस्य मन्त्रस्य वक्ष्यमाणानां चावगम्यते । होमद्रव्याणि च स्वस्वगृह्येष्ववगन्तव्यानि । मन्त्रेण स्वस्थानि [ ? ] क्षीराज्यविल्वादीनि वा । प्रणवात्मा च देवताऽग्न्यादिकं तु यथायोगमवगन्तव्यम् ।

**आ मा** मां श्रीकामं **यन्त्वा**यन्त्वत्राऽऽगच्छन्तु । **ब्रह्मचारिणो**ऽध्ययनार्थिनो माणवकाः सर्वासु दिक्ष्ववस्थिताः । **स्वाहा** व्याख्यातम् । ब्रह्मचारिणामागमने प्रयोजनमाह—**यशः** । अत्र धर्मशब्देन धर्मी लक्षितो भवति । यशस्वी । **जने** लोके । **असानि** भवानि । **स्वाहा** व्याख्यातम् । अत्रापि प्रयोजनमाह—**श्रेयान**तिशयेन प्रशस्यः । **वस्यसो** वस्युमन्त(सुमत्त)रात्सकाशात् । वसु चात्र दैवं मानुषं वित्तम् । **असानि** भवानि । **स्वाहा** व्याख्यातम् । तत्रापि प्रयोजनमाह—**तं** ब्रह्मणः कोशभूतम् । **त्वा** त्वामोंकारम् । **भग** समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीणां निवासभूत ओंकारो ब्रह्मकोशो भगस्तत्संबोधनं हे भग **प्रविशानि** प्रवेशं करवाणि । **स्वाहा** व्याख्यातम् ।

ननु यदि मत्प्रविष्टस्त्वं तर्हि मत्तो भिन्नः समुद्रं प्रविष्टः समुद्रादिव भिन्नो मत्स्यस्तथा च तद्वदेव भवतो न कोऽपि पुरुषार्थ इत्यत आह—**स** मया प्रवेष्टव्यो ब्रह्मणः कोशभूतो भवानोंकारः । **मा** मां तादात्म्येन त्वदुपासकम् । **भग प्रविश स्वाहा** प्रवेशं कुरु । आवयोरनुपचरितं तादात्म्यमस्त्वित्यर्थः । व्याख्यातमन्यत् ।

ननु—त्वं कर्ता भोक्तेत्यादिसंसारधर्मवान्मयेश्वरेण कथमभिन्नः स्या इत्यत आह—**तस्मि**न्मदभिन्न ओंकार ईश्वरे । **सहस्रशाखे** सहस्रमनन्ताः शब्दार्थात्मनो वृक्षस्य भवतः शब्दार्थविवर्तरूपाः शाखा यस्य स सहस्रशाखस्तस्मिन् । **निभग** हे भग । नेर्मृजिना संबन्धः । **अहं** वस्तुतस्त्वदभिन्न इदानीमविद्यापटलपिनद्धाक्ष उपासकः । त्वयि शब्दार्थरहित ओंकारे ब्रह्मणि " अहं ब्रह्मास्मि " इति बोधेन **मृजे** निमार्ज्मि कर्तृत्वादिकमविद्याकृतं न वस्तुत इति ज्ञानेनाऽऽत्मानं परिशोधयामीत्यर्थः । **स्वाहा** व्याख्यातम् ।

तथा च ब्रह्मचारिणामागमनं परम्परया मोक्षहेतुरित्युक्त्वेदानीं तदेव दृष्टान्ताभ्यां मन्त्रान्तरेण विशिनष्टि—**यथा** येन प्रकारेण । **आपो** नीरधाराः । **प्रवता,** उच्चादेशात्पतन्त्यो निम्नदेशगामिन्य इत्यर्थः । प्रवतेतितृतीयापक्षे प्रवणवता मार्गेणेति व्याख्येयम् । **यन्ति** निम्नदेशं गच्छन्ति । अपां सेत्वादिना प्रतिबन्धो

१ ग. °योग्यम°।

दृष्टस्ततो दृष्टान्तान्तरमाह—**यथा** दृष्टान्ते। **मासाः** पक्षद्वयात्मकाश्चैत्रादयः। **अहर्जरम्**हानि जरयति स्वकुक्षिनिक्षेपेण यः संवत्सरस्तम्। **यन्ती**त्यनुवर्तते। **एवं** दार्ष्टान्तिके **मां** श्रीकामम्। **ब्रह्मचारिण**श्छात्राः। **धातः**, हे धातः सर्वस्त्रष्टृत्वात्प्रणवस्य धातृत्वम्। **आयन्त्वागच्छन्तु**। **सर्वतः** सर्वाभ्यो दिग्भ्यः। **स्वाहा** व्याख्यातम्।

नन्विदं सर्वं मत्तादात्म्यार्थं मम तव कः संबन्ध इत्यत आह—**प्रतिवेशः** स्वगृहसमीपस्थं गृहं प्रतिवेशः। तद्वच्चैतन्यरूपेण जीवोपाधेरतिसंनिहितत्वात्प्रणवश्चैतन्यात्मा प्रतिवेशः। **असि** भवासि। यतस्ततः **प्र मा** मां त्वदुपासकम्। **भाहि** प्रभाहि प्रकाशयाऽऽत्मानम्। **प्र मा पद्यस्व** प्रपद्यस्व। अहं ब्रह्मास्मीति साक्षात्कारबोधेन मद्रूपमागच्छेत्यर्थः। अत्र स्वाहान्ता अष्टौ मन्त्राः। एतैः सर्वैर्मन्त्रैरेकादशसंख्याकैरष्टभिः पाठ एव। स्वाहान्तैस्त्रिभिश्च होमार्थं स्वाहान्तत्वेन पठित्वा होमः करणीयः। जपस्तु यथापाठपठितैरित्यवगन्तव्यम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां कृष्णयजुर्वेदीयतैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्याये तृतीयोऽनुवाकः॥ ३॥

---

अथ चतुर्थोऽनुवाकः।

---

पूर्वमोंकारस्य सहस्रशाखत्वमुक्तं तदेतत्प्रधानशाखासु सिद्धासु प्राधान्यं च भूरादिव्याहृतीनामस्मिन्प्रपञ्चे। ततो व्याहृतयो हृदिस्थाः। तासूपासनं स्वाराज्यफलमाह—**भूर्भू**र्लोकः, तत्स्थः प्रपञ्चो भूरितिशब्दाभिधेयः। **भुवो**ऽन्तरिक्षलोकः। तत्स्थः प्रपञ्चो भुव इत्युच्यते। **सुवः** स्वर्गः, तत्स्थः प्रपञ्चः सुवरित्युच्यते। इत्यनेन प्रकारेण। **वै** स्मर्यमाणाः। **एता** इदानीमुक्ताः। **तिस्र**स्त्रिसंख्याका वेदत्रयात्मिकाः। **व्याहृतयः**, अधिकारीष्टं विविधमा समन्ताद्धरन्ति प्रयच्छन्त्यधिकार्यनिष्टं वा विविधमा समन्ताद्धरन्ति विनाशयन्तीति व्याहृतयः। **तासां** भूर्भुवः सुवरितितिसृणाम्। **उ** अपि **ह** किल। **स्म** प्रवेदयत इत्यनेन संबध्यते। **एतां** वक्ष्यमाणां **चतुर्थीं** चतुःसंख्यापूरणीम्। **माहाचमस्यो** महांश्चासौ चमसोपलक्षितानेकयागसंपन्नश्च महाचमसस्तस्यापत्यं माहाचमस्यः। **प्रवेदयते** प्रकर्षेण निवेदितवाञ्ज्ञात्वोक्तवानित्यर्थः। ऋषेरनुस्मरणमुपासनार्थमिति संप्रदायविदः। तामाह—**महस्तेजः** स्वयंप्रकाशम्। **इत्यनेन** प्रकारेण। आवेदने कः प्रकर्ष इत्यत आह—**तन्महः**। **ब्रह्म** देशकालवस्तुपरिच्छेदशून्यं तस्मिन्नियं दृष्टिः करणीयेत्यर्थः। यद्ब्रह्मेत्युक्तं **स** प्रसिद्धो वक्ष्यमाण **आत्मा**ऽस्मत्प्रत्ययालम्बनः प्रधानभूत

---

१ ग. सर्वमेतत्ता°। २ ग. ऋषेः स्म°।

इत्यर्थः । **अङ्गान्युपसर्जनभूतानि । अन्या भूराद्या देवता** व्याहृत्यधिष्ठात्र्यः । **अहं** महो ब्रह्मरूपमस्मि मम भूराद्या व्याहृतिदेवता अङ्गानीत्युपासनं करणीयमित्यर्थः ।

ननु भूरादिषु शब्देषु का देवता इत्याशङ्क्य व्याहृतीनामर्थमाह—**भूः** प्रथमा व्याहृतिः । **इति**रनुकरणार्थः । **वै** स्मरणार्थम् । **अयं** प्रत्यक्षो **लोको** भूर्लोकः । **भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः** । अन्तरिक्षं द्यावाभूम्योरन्तरालस्थो लोकः । असौ परोक्षो लोकः स्वर्गलोकः । भुवः स्व(सुव)रितिव्याहृतिपर्यायद्वयेऽपीतिशब्दावनुकरणार्थौ । **महश्चतुर्थी** व्याहृतिः । **इति**रनुकरणार्थः । **आदित्यश्चन्द्र**(त्यःसूर्यः?)मण्डलाभिमानी जगत्प्राणः, आदित्यस्य महाव्याहृत्यात्मनोपास्यमानस्य महत्त्वमुपपादयति । **आदित्येन वावाऽऽदित्येनैव । सर्वे** निखिलाः । **लोका** भूरादयः । **महीयन्ते** पूज्यन्ते सर्वव्यवहारक्षमा भवन्तीत्यर्थः ।

इदानीं व्याहृतीनां ज्योतिर्वायुरूपतामाह—**भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते** । अग्निवाय्वादित्यचन्द्रमसः प्रसिद्धाः । एतेभ्यो व्यतिरिक्तानि सर्वाणि ज्योतींषि नक्षत्रादीनि । अग्न्यादीनां सर्वशब्दान्तःपातित्वेनैषां देवरूपत्वेन चन्द्रमस उपभोगेन तेन महीयमानत्वमविरुद्धम् । वायोश्च तेजःसाक्षात्कारणत्वाज्ज्योतिस्त्रयसाहित्येन पाठो न विरुद्धः । अन्यत्पर्यायचतुष्टयेऽपि पूर्ववद्व्याख्येयम् ।

इदानीं व्याहृतीनां शब्दप्रपञ्चात्मकत्वमाह—**भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते** । अर्थानुसारेण पादबद्धाक्षरा ऋचः । सामानि ऋच एव गीतिमत्यः । यजूंष्यविवक्षितच्छन्दोरूपाणि गद्यानि । अत्र साम्नो द्वितीयत्वे यजुषस्तृतीयत्वे च वाचनिकं कारणमास्थेयम् । अथवाऽन्तरिक्षे गन्धर्वाणां निवासत्वेन गीतिप्राधान्यात्तत्साम्येन साम्नो द्वितीयत्वं यजुःस्थितकर्मसाध्यत्वात्स्वर्गस्य तत्कर्मसंबन्धाद्यजुषस्तृतीयत्वं चेति । **ब्रह्मों**कारो ब्रह्मकोशत्वात्तेनैव सर्व ऋगादयः पूज्यमाना दृष्टाः । शेषं पर्यायचतुष्टयेऽपि पूर्ववद्व्याख्येयम् ।

इदानीं व्याहृतीनां क्रियात्मकत्वमाह—**भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते** । प्राण उच्छ्वासकर्मा । अपानो निःश्वासकर्मा । व्यानः प्राणापानसंधिस्थो वीर्यवत्कर्महेतुः । अन्नमदनीयम् । अन्नेन प्राणा उक्ताश्चक्षुरादयश्च । शेषं पर्यायचतुष्टयेऽपि पूर्ववद्व्याख्येयम् । अयं लोक इत्यादिकमुक्तं व्याहृतिचतुष्टयपर्यायचतुष्टयेऽपि पाठस्य वैषम्याभावात् । तत्राऽऽद्येन पर्यायेण रूपनामकर्मात्मकं जगत्त्रेधा विभज्य रूपनामकर्मणाम-

१ ख. शब्दात्म° । २ ग. °तेन च स° ।

विभक्तानामादित्यः कारणमित्युक्तम्। नामक्रियारहितस्य रूपस्य त्रेधा विभक्तस्य चन्द्रः कारणमिति द्वितीयेनोक्तम्। रूपक्रियारहितस्य नाम्नस्त्रेधा विभक्तस्य प्रणवः कारणमिति तृतीयेनोक्तम्। रूपनामरहितस्य कर्मणस्त्रेधा विभक्तस्यान्नं कारणमिति चतुर्थेनोक्तम्। तेन व्याहृतीनां सर्वात्मकत्वं सिद्धम्।

तदिदानीं संक्षेपेणाऽऽह—**ताः** प्रसिद्धाः। **वै** स्मर्यमाणाः। **एताः** पूर्वोक्ता व्याहृतयः। **चतस्रो** भूर्भुवः सुवर्मह इति चतुःसंख्याकाः। **चतुर्धा**ऽयं लोकोऽग्निर्ऋचः प्राण इति चतुष्प्रकारा भूर्व्याहृतिः। अन्तरिक्षं वायुः सामान्यपान इति चतुष्प्रकारा भुवोव्याहृतिः। असौ लोक आदित्यो यजूंषि व्यान इति चतुष्प्रकारा सुवर्व्याहृतिः। आदित्यश्चन्द्रमा ब्रह्मान्नमिति चतुष्प्रकारा महोव्याहृतिरिति चतस्रश्चतुष्प्रकाराः। तदेतदाह—**चतस्रश्चतस्रो** भूराद्याश्चतस्रश्चतुःसंख्याकाः। पुनरप्ययं लोक इत्यादिनैकैकाऽप्यवान्तरभेदाच्चतुःसंख्याका। **व्याहृतयो** व्याख्याताः। **ता** एकैकाश्चतुष्प्रकारा इत्युक्ता भूराद्या नियतप्रकारा **य** उपासको **वेद** जानात्युपासीतेत्यर्थः। **स** प्रत्येकं नियमेन चातुर्विध्येन चतसृणामात्माङ्गभावेनोपासको **वेद** जानात्युपास्त इत्यर्थः। **ब्रह्म** देशकालवस्तुपरिच्छेदशून्यं महाव्याहृत्यात्मत्वेनोक्तम्। ब्रह्मणि ज्ञाते को लाभ इत्यत आह—**सर्वे** निखिला **अस्मै महो ब्रह्मा**हमादित्यश्चन्द्रमा ब्रह्मान्नमङ्गीभूतो महीयान्यङ्गानि भूराद्यास्तिस्रो व्याहृतय इत्युपासकाय **देवा**स्तदङ्गभूता अग्न्यादयो वागादयश्च विश इव राज्ञे प्रधानाय **बलिं** तदभीष्टरूपरसादिकम्। **आवहन्त्या**नीय प्रापयन्ति।

ननु महो ब्रह्मात्मा कुत्र कथमुपास्यत उपासनातः केन द्वारेण निर्गच्छति निर्गतो वा केन रूपेण कुत्र स्थित्वा देवदत्तं बलिं गृह्णातीत्याशङ्क्य तदेतत्सर्वं दर्शयति—**स** परोक्षः। **यः** प्रसिद्धः। **एष** प्रत्यक्षः। **अन्तर्हृदये** हृदयस्य पद्माकारस्य मांसखण्डस्याधोमुखस्योर्ध्वनालस्य पद्मच्छिद्रस्य कदम्बकुसुमकेसरैरिव सर्वतो नाडीभिः परिवृतस्य मध्य **आकाशो**ऽवकाशः। **तस्मिन्न**ाकाशेऽयं प्रत्यक्षः स्वयं प्रकाशमानो महाव्याहृत्यात्मकः। **पुरुषः** पुरिशयोऽपि। परिपूर्णब्रह्मरूपो **मनोमयो** मनःप्रधानः। **अमृतो** मरणशून्यः। **हिरण्मयो** भास्करः सर्वज्ञ इत्यर्थः।

कुत्र कथमुपास्य इत्यनयोरुत्तरं जातम्। अथ केन द्वारेण निर्गच्छतीत्यस्योत्तरमाह—**अन्तरेण तालुके** तालुकयोर्मध्ये। मुखबिलस्यान्तर्जिह्वामूलस्योपरि स्थितौ वामदक्षिणभागौ तालुके इत्युच्येते। **यः** प्रसिद्धो योगशास्त्रे। **एष** प्रलम्बिकाकरणप्रवीणजिह्वाग्रस्पर्शनप्रत्यक्षः परमुखे चक्षुष्प्रत्यक्षो वा। **स्तन इव** वत्सतरीपयोधरो यथा। **अवलम्बते**ऽ-

---

१ ग. °स्यमानः क°।

वलम्बनं कुरुते लम्बमानस्तिष्ठतीत्यर्थः । **सा** तालुकयोरन्तरस्थस्तनमध्यवर्तिनीः **इन्द्रयोनिरिन्द्रस्या**ऽऽनन्दात्मनो योनिरुपलब्धिस्थानम् । कार्यब्रह्मप्राप्तौ निर्गमनकारणं चेन्द्रयोनिः । **यत्र** यस्मिन्प्रदेशे । **असौ** प्रसिद्धः । **केशान्तो** मूर्धानमारभ्योपरिष्टाद्दशाङ्गुलपरिमितो देशः । केशान्तः, कश्चाश्चेशश्च केशा ब्रह्मविष्णुमहेश्वरास्तेषामन्तो विनाशकारणमित्यर्थः । केशान्तः पौरुषो बोध इत्यर्थः । **विवर्तते** । बोधरूपापरित्यागेनासत्यस्य नानाकारस्य शरीरत्रयस्य साधिदैवादेस्तदभिमानादेश्चाऽऽकारेण परिणमते । अथवा केशानां प्रसिद्धानामन्तो न भावो(?) मूलमित्यर्थः । यस्मिन्देशे विशेषेण वर्तते **व्यपोह्य** भित्त्वा । **शीर्षकपाले** शीर्ष्णो मूर्ध्नः कपाले शकले । विनिर्गता या नाडीति शेषः । य एष स्तन इवावलम्बते तन्मध्यवर्तिनी यत्रासौ केशान्तो विवर्तते तत्र प्रतिष्ठिताग्रेति शेषः । तत्रोपपत्तिर्व्यपोह्य शीर्षकपाले विनिर्गता या सेन्द्रयोनिरित्यन्वयः । अनया कार्यं ब्रह्म गच्छन्गच्छतीत्यर्थः । अनेन गमने मार्ग उक्तः ।

इदानीं तत्तद्व्याहृत्यात्मकस्तेषु तेषु व्यायतिप्रकारेषु स्थित्वा देवदत्तं गृह्णन्नध्यात्मपरिच्छेदशून्यः स्वाराज्यं करोतीत्याह—**भूरिति**, उक्तोऽर्थो व्याहृतेः । **इतिशब्दश्च** व्यायत्यनुकरणार्थः । **अग्नौ** प्रथमव्यायत्यात्मके । **प्रतितिष्ठति** प्रतिष्ठां प्राप्नोति । इदं पदं वक्ष्यमाणेष्वपि त्रिषु पर्यायेषु योजनीयम् । **भुव इति** व्याख्यातम् । **वायौ** द्वितीयव्यायातिरूपे । **सुवरिति** व्याख्यातम् । **आदित्ये** तृतीयव्यायतिरूपे । **मह इति** व्याख्यातम् । **ब्रह्मणि** कार्ये ब्रह्मण्यन्तःकरणशुद्धौ ब्रह्मज्ञानोत्पादात्पर ब्रह्मणि वा । अत्र यद्यपि मह इति चन्द्रमसीति वक्तव्यं प्रायःपाठात्तथाऽप्युपास्याङ्गाङ्गिजातं सर्वं व्याप्नोतीत्येतद्दर्शयितुमनास्थावादेन चन्द्रमसं परित्यज्य मह इति ब्रह्म तद्ब्रह्मेति चोरीकृत्य मह इति ब्रह्मणीत्याह ।

व्याहृत्युपासनामात्रान्निर्गुणब्रह्मप्राप्तिरितिशङ्कानिवारणार्थमाह—**आप्नोति** प्राप्नोति । **स्वाराज्यं** स्वयमेव राजते दीप्यत इति स्वराट्तस्य भावः स्वाराज्यम । ननु केवलब्रह्मप्राप्तिरप्येतादृश्येवेत्यत आह—**आप्नोति** प्राप्नोति । **मनसस्पतिं** मनःशब्दोपलक्षितस्य ज्ञानक्रियाशक्तेरन्तःकरणस्य पतिं पालयितारम् । स्वोपाधिकत्वाभिमानेन हिरण्यगर्भमित्यर्थः । तं प्राप्य क्रियाज्ञानकरणानां तद्वत्प्रभुर्भवतीत्याह—**वाक्पतिर्वागिति** कर्मेन्द्रियमात्रस्योपलक्षणम् । वाचः पतिर्वाक्पतिः । **चक्षुष्पतिः श्रोत्रपतिः** स्पष्टम् । चक्षःश्रोत्रयोर्ग्रहणं त्वग्घ्राणरसनानामुपलक्षणार्थम् । **विज्ञानपति**र्विज्ञानं बुद्धिस्तस्य पतिर्विज्ञानपतिः । विज्ञानशब्दोऽव्याकृतन्यतिरिक्तस्य सर्वस्योपलक्षणार्थः ।

---

१ ख. °र्थः । केशान्तं वि° । २ ग. °ण प्रव° । ३ ग. °षः । यः स्त° । ४ ख. °दगादनास्य° । ५ ग. °ति चोर° ।

अपेक्षितं सर्वमप्युक्त्वेदानीं 'महो ब्रह्म तस्मिन्नयं पुरुषः' इत्यादिनोपास्यत्वेनोक्तं यदुत्पन्नब्रह्मज्ञानैः प्राप्यमङ्गीभूतं वक्तुमारभते संक्षेपेण प्राचीनयोग्यस्य पितृरूपा श्रुतिः स्वपुत्रस्योपासनार्थम्। **एतद्** एतस्मिन्व्याहृत्युपासने प्रधानभूतम्। **ततो भवति** तस्मात्कारणाद्भवति। उक्तमिति शेषः। **आकाशशरीरम्** आकाशोऽव्याकृतं शरीरमिव स्वं यस्य तदाकाशशरीरम्। **ब्रह्म** तद्ब्रह्मेति, महाव्याहृत्यभिन्नं यदुक्तं देशकालवस्तुपरिच्छेदशून्यम्। **सत्यात्म** सत्यो बाधरहित आत्मा चिदानन्दस्वभावो यस्य तत्सत्यात्म। **प्राणारामं** प्राणेष्वारमत इति प्राणारामं सर्वप्राणिस्थितमित्यर्थः। तटस्थत्वशङ्कां वारयति— **मनआनन्दं** मनस आनन्दो यस्य तन्मनआनन्दम्। तर्हि दुःखीत्याशङ्क्याऽऽह— **शान्तिसमृद्धं** शान्तिर्दुःखोपरतिस्तया समृद्धं संपन्नं सर्वदुःखशून्यमित्यर्थः।

नन्वस्तु सर्वत्रोत्कृष्टं तथाऽपि सर्वाभेदान्मरणमप्यस्यैवेत्यत आह— **अमृतं** मरणशून्यम्। यदभेदादन्यस्यापि मरणमपगच्छति कुतोऽस्य कालकालस्य मरणमित्यर्थः। इत्यनेन प्रकारेण तदहमस्मीत्यवगन्तुमशक्तश्चेत्**प्राचीनयोग्य** प्राचीनेषु पुरातनेषु काश्यपादिषु योग्योऽधिकः प्राचीनयोग्यः सर्वेभ्य उत्कृष्ट इत्यर्थः। तस्य संबोधनं प्राचीनयोग्य। **उपास्स्व** "महोव्याहृतिरूपमिदमहमस्मि ममाङ्गानीतरा यथोक्ता व्याहृतयः" इति **शाखान्तरप्रसिद्धं** वा "मनोमयः प्राणशरीरः" इत्यादिरूपं व्याहृत्युपासनाव्यतिरिक्तमुपास्स्व विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण यथोक्तधर्मं साक्षात्कुर्वित्यर्थः। अथवा को हिरण्यगर्भप्राप्तौ पुरुषार्थ इत्याशङ्क्य व्याख्येयम्। ततो हिरण्यगर्भप्राप्तेरनन्तरमुत्पन्नब्रह्मज्ञान एतद्वक्ष्यमाणं ब्रह्म भवति। अस्मिन्पक्ष इत्यारभ्य प्राचीनयोग्यपितुर्वाक्यं द्रष्टव्यम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्याये पञ्चमोऽनुवाकः॥ ५॥

---

अथ शीक्षाध्याये षष्ठोऽनुवाकः।

---

चतसृणां व्याहृतीनामुपासन उक्ते तदनन्तरभाविनीं पञ्चसंख्यामुररीकृत्य पञ्चभूतात्मकविराट्प्राप्तिफलं पाङ्क्तमुपासनमाह— **पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः,** स्पष्टाः पृथिव्यादयः पञ्च पदार्थाः। त्रिलोकी प्राच्यादयश्चतस्र आग्नेय्यादयश्चेति पञ्चकं लोकपाङ्क्तम्। **अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि,** स्पष्टा अग्न्यादयः पञ्च पदार्थाः। इदं देवतापाङ्क्तम्। **आपो** नीराणि। **ओषधयो** व्रीह्याद्याः। **वनस्पत-**

---

१ ग. °त य°। २ ख. बाधार°। ३ क. °लस्य। ४ ग. °तिपदमि°।

योऽपुष्पाः फलवन्तोऽश्वत्थादयः । **आकाशो** भूताकाशः । **आत्मा** भौतिको देहोऽधिदेवादिः । **इतिः** समाप्तौ । **अधिभूतं** भूतानि पृथिव्यादीन्यधिकृत्योच्यमानमधिभूतम् । लोके देवानामपि भूतविकारत्वेन भूततत्त्वमङ्गीकृत्याधिभूतमित्युपसंहारः ।

**अथा**धिभूतपाङ्क्तकथनानन्तरम् । **अध्यात्म**मात्मानमिमं स्थूलदेहमधिकृत्य । पाङ्क्तमुच्यत इति शेषः **प्राण** उच्छ्वासकर्मा क्षुत्तृडधिकारी । **व्यानः** प्राणापानयोः संधिस्थो वीर्यवत्कर्महेतुः । **अपानो** निःश्वासकर्मा मलमूत्रादिविसर्गहेतुः । **उदानः** सर्वसंधिषु कीलवदवस्थितः । यच्चलने हिक्कादिः प्राणापानादीनामप्यनवस्थितिः सर्वप्राणबन्धनमूर्ध्वगामी मरणहेतुः । **समानो**ऽशितस्य पीतस्य चाऽऽपादमस्तकं समं यथायोगं नयनं करोतीति समानः । इदं प्राणादिपञ्चकं वायुपाङ्क्तम् । **चक्षू** रूपग्राहकमिन्द्रियम् । **श्रोत्रं** शब्दग्राहकमिन्द्रियम् । **मनः** साधारणज्ञानकारणम् । **वाग्**वागिन्द्रियमभिवदनकारणम्[1] । **त्वक्**स्पर्शोपलब्धिकारणमिन्द्रियम् । इदं चक्षुरादिपञ्चकमिन्द्रियपाङ्क्तम् । **चर्म** त्वगिन्द्रियाधिष्ठानमापादमस्तकं व्याप्य[2] व्यवस्थितम् । **मांस**मन्नस्य मध्यमः परिणामो मृदुलो घनीभूतः । **स्नावा** धमनिः, जातावेकवचनत्वान्नाड्य इत्यर्थः । **अस्थि** प्रसिद्धं श्वेतं शरीरशालावंशस्तम्भादिरूपम् । **मज्जा** रुधिरमांसयोरन्तरावस्थोष्णकालीनशीतलप्रदेशस्थघृताकाराऽस्थ्नोऽन्तर्गता । इदं चर्मादिपञ्चकं धातुपाङ्क्तम् । **एतदु**क्तं पृथिव्यादिकं मज्जान्तम् । **अधिविधाया**धिकृत्य पञ्चकमुपलभ्येत्यर्थः । **ऋषिर्वेदो** वेदार्थद्रष्टा वा । **अवोचदु**क्तवान् । **पाङ्क्तं** पञ्चाक्षरं ( र ) पङ्क्तिच्छन्दोरूपम् । **वै** प्रसिद्धं पञ्चसंख्यात्वेन । **इदं** पृथिव्यादिकम् । **सर्वं** निखिलम् । **पाङ्क्तेनैव** पञ्चसंख्याक्रान्तेनैव पाङ्क्तं पञ्चसंख्याक्रान्तम् । **स्पृणोति** प्रीणयति । पोष्यपोषकादिकं सर्वं पाङ्क्तमित्यर्थः। पाङ्क्तं वा इदं सर्वं यतस्ततः पाङ्क्तेनैव पाङ्क्तं स्पृणोतीति योजनीयम् । इत्यनेन प्रकारेण । स्वयं पञ्चात्मको विश्वं चेदं पञ्चात्मकं सर्वेणाभिन्नं पञ्चात्मकं स्वात्मानं जानतस्तादृग्विराट्प्राप्तिफलमर्थसिद्धमिति श्रुतिर्नोक्तवती ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां शीक्षाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ शीक्षाध्याये सप्तमोऽनुवाकः ।

---

पञ्चसंख्यासामान्यात्पाङ्क्तमिदं सर्वमित्युक्तं तेन सर्वात्मकं ब्रह्म हृदिस्थं ब्रह्मणश्च कोशभूत ओंकारः पूर्वमुक्तः । इदानीं तत्कोशत्वोपपादनार्थं[3] पुनरोंकारस्योपासन-

१ क. ग. °रणं का° । २ क. ग. व्याप्याव° । ३ ग. °त्वोपासना° ।

माह—ॐ ब्रह्मवाचकः। इतिरोंकारानुकरणार्थः। ब्रह्म वाच्यम्। अभिधानाभिधेययोस्तादात्म्याद्वाचके वाच्यस्य दृष्टिः करणीया। शालग्राम इव विष्णोरित्यर्थः। ननु सति साम्य ओंकारब्रह्मणोरोंकारे तद्दृष्टिः क्रियमाणोचिता स्यादन्यथाऽन्धगोला*ङ्गूलन्यायमात्रमित्यत आह—**ओमिति**, व्याख्यातम्। **इदꣳ सर्वं** विविधप्रत्ययगम्यं कार्यकारणादि निखिलम्। अयमर्थः—शब्दप्रपञ्चः सर्वोऽप्योंकारेण व्याप्त इति नात्रोपपादनीयं किंचिदस्ति। शब्दार्थयोस्तादात्म्ये विप्रतिपत्तावपि वाचकत्वलक्षणेऽविनाभावे न विवादः। यद्येनाविनाभूतं तत्तस्य कार्यम्। यथा धूमाग्न्योः कार्यकारणयोः साम्यं यथा मृद्घटयोः। तत ओंकारस्याऽऽत्मनश्च सर्वाभिन्नत्वादस्ति साम्यमित्योंकारोपासनार्थमोंकारो लौकिकवैदिकव्यवहारकारणत्वेन स्तूयते।

**ओमिति** व्याख्यातम्। **एतदोंकाराभिधानम्। अनुकृति** गच्छ पिब पठेत्यादिवचनमनु भृत्यादेरङ्गीकारवचनमोमिति करणमनुकृतिराह। **ह** किल। **स्म** प्रसिद्धम्। **वै** स्मर्यमाणम्। **अपि** समुच्चये। न केवलं लौकिकव्यवहारकारणमोंकारः, किंतु वैदिकस्यापि **'ओ'** ओमित्यर्थः। **श्रावय** हविषः परित्यागार्थं मन्त्रं देवाञ्श्रावय। **इति**, अनेन प्रकारेण। उक्ते वैदिके कर्मण्यृत्विज **आश्रावयन्ति** समन्ताद्देवान्मन्त्रश्रवणं कारयन्ति। **ओमिति** व्याख्यातम्। **सामानि** गीतिसहिता ऋचः। **गायन्ति** यज्ञकर्मण्यन्यत्र च पठन्ति। **ओं** व्याख्यातम्। **शों** शं सुखं तदेवोꣳ शोमित्यनुकरणार्थः। **शस्त्राणि** शस्त्रशब्दाभिधेयानृग्विशेषान्। **शꣳसन्ति** पठन्ति यज्ञकर्मण्यन्यत्र च[3]। **ओमिति** व्याख्यातम्। **अध्वर्युर्या**जुष ऋत्विक्। **प्रतिगरं** गरणम्। वाङ्मनःकायानां विहितं व्यापारमात्रं गरः, तेन संबद्धं प्रतिगरः कर्म, तं **प्रति** कर्माणि कर्मणीत्यर्थः। **गृणाति** शब्दं करोति। **प्रतिगरं** यजुर्विशेषं वा **प्रतिगृणाति** पठति। अस्मिन्पक्ष ओमित्युच्चार्येति शेषः। **ओमिति** व्याख्यातम्। **ब्रह्मा,** ऋत्विग्विशेषः। **प्रसौ**त्यनुजानाति। **ओमिति** व्याख्यातम्। **अग्निहोत्रं** जुहोतीत्युक्ते होत्रादिना समीपस्थोऽग्निहोत्रं नित्यं काम्यं वा कर्मा**नुजानाति** जुहुधीत्यनुज्ञां प्रयच्छति। **ओमिति** व्याख्यातम्[4]। **ब्राह्मणोऽ**ध्येष्यमाणः। **प्रवक्ष्य**न्पाठार्थं प्रकर्षेण वचनं करिष्यन्। **आह** ब्रूते।[5]

ओंकारवदने कारणमाह—**ब्रह्म** वेदम्। **उपाप्नवानि** स्वाधीनत्वलक्षणेन सामी-

---

* यथा कस्यचिदन्धस्य स्वेप्सितस्थलं गन्तुमशक्नुवानस्य हस्ते केनचिद्दुष्टेन बलीवर्दस्य लाङ्गूलं दत्त्वैष त्वामीप्सितस्थलं प्रापयिष्यतीत्युक्त्वा प्रस्थापितोऽन्धो मोक्षभयाद्गोपुच्छं दृढं गृह्णन्, लाङ्गूलग्रहणमसहमानेन शर्कराकण्टकोपलादिषु जवात्प्रधावमानेन गवा व्यापाद्यते स एष गोलाङ्गूलन्यायः।

---

१ क. ग. 'स्याप्योमोभि°। २ ग. वा। ३ ग. वा। ४ ख. °म्। ब्रह्मणः। प्र°। ५ ग. °णे सामान्येम सा°।

प्येन प्राप्नवानि । इति, अनेनाभिप्रायेण । ननु किमभिप्रायमात्रमित्याशङ्क्य नेत्याह— **ब्रह्म** वेदमेव । **उपाप्नोति** स्वाधीनत्वसामीप्येन प्राप्नोत्येव न त्वभिप्रायमात्रम् । अत्र फलं च ब्रह्मज्ञानोत्पादद्वारेण सर्वात्मत्वप्राप्तिरनुक्ताऽपि द्रष्टव्या । अथवा **'ओमिति ब्राह्मणः'** इत्यादिकं फलवचनम् । अस्मिन्पक्षे ब्राह्मणः साधनचतुष्टयसंपन्नः संन्यासी प्रवक्ष्यन्प्रकर्षेण 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवचनजातं वक्ष्यन्ब्रह्म सत्यज्ञानादिलक्षणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ शीक्षाध्यायेऽष्टमोऽनुवाकः ।

---

ननु—एवमप्युपासनैर्यस्यान्तर्मुखता न स्यादस्ति च मुमुक्षा किं तेन करणीयमित्याशङ्क्य कर्मैव तेन करणीयमित्याह—**ऋतं च** यथाशास्त्रकर्मविषयं ज्ञानम् । चकारः स्वाध्यायप्रवचनाभ्यां समुच्चयार्थः । **स्वाध्यायप्रवचने च** स्वाध्यायोऽध्ययनं प्रवचनं ब्रह्मयज्ञोऽध्यापनं वा । चकारोऽनयोरुक्तेन समुच्चयार्थः । **सत्यं** मनःकायाभ्यामनुष्ठीयमानं कर्म सत्यवचनं वा । **तपः** कृच्छ्रचान्द्रायणादिरूपं स्वधर्मवृत्तित्वं वा । **दमो** बाह्येन्द्रियनिग्रहः । **शमो**ऽन्तःकरणोपशमः । **अग्नयस्त्रयः** पञ्च वा । **अग्निहोत्रं** नित्यं श्रौतं कर्म सायंप्रातर्होमोपलक्षितम् । **अतिथयो**ऽज्ञातकुलगोत्रा ब्राह्मणादयोऽशनाद्यर्थं दर्शादितिथिमन्तरेणापि गृहान्समागताः । अतिथिशब्दितसोमोपलक्षितयागा वा । **मानुषं** पुत्रादिविवाहादौ बन्ध्वादीनां यथोचितं पूजनम् । **प्रजा** पुत्रादिका । **प्रजनः** प्रजननमृतौ भार्यागमनमित्यर्थः । **प्रजातिः** पौत्राद्युत्पत्तिः पुत्रायानुरूपा प्रिया च भार्या तादृशश्च वरः कन्यायै । एवं पौत्रपौत्र्यादेरपि संपादनीयमित्यर्थः । अत्रोमित्यादौ संपादनीयमिति द्वादशस्वपि पर्यायेष्वेकवचनद्विवचनबहुवचनानुसारेणाध्याहरणीयम् । सर्वत्र च स्वाध्यायप्रवचनयोः पाठस्तत्रात्यन्तमादरदर्शनार्थः । शेषमेकादशस्वपि पर्यायेषु समानपाठभूतमिति पर्यायवद्व्याख्येयम् ।

इदानीमृषीणां मतान्यत्रोपन्यस्यति—**सत्यमुक्तम्** । **इति,** एव । **सत्यवचाः** सत्यवादी, नामधेयं वा **राथीतरो** रथीतरगोत्रः । अनुष्ठेयं मनुत इति, अत्र वक्ष्यमाणेऽपि यथायोगमध्याहरणीयम् । **तप इति** तप एव । **तपोनित्यस्**तपसि नित्यं वर्तत इति तपोनित्यो नामधेयं वा **पौरुशिष्टिः** पुरु बहुवेलं मातृपित्राचार्यैः शिष्टः पुरुशिष्टस्तस्यापत्यं पौरुशिष्टिः ।

---

१ ग. घ. । २ ग. घ. । ३ ग. °योगो वा । ४ ग. °योरथम° ।

पूर्वपक्षमुक्त्वा सिद्धान्तमाह—**स्वाध्यायप्रवचने** व्याख्यातम् । **एव न** त्वन्यस्सत्यं तपो वा । **इतीत्थम्** । **नाको** नामतः । **मौद्गल्यो** मुदं शास्त्रार्थनिर्णयरूपां गलति स्रवतीति मुद्गलः, तस्यापत्यं मौद्गल्यः । अस्य पक्षस्य सिद्धान्तत्वमुपपादयति—तत्स्वाध्यायप्रवचनानुष्ठानम् । **हि** यस्मात् । **तप** उक्तमुपलक्षणमिदं सत्यस्यापि । तस्मादिदमेवाधिकमिति शेषः । अस्य पक्षस्याऽऽदरार्थे द्विर्वचनम् । **तद्धि तपो** व्याख्यातम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां कृष्णयजुर्वेदीयतैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ शीक्षाध्याये नवमोऽनुवाकः ।

---

ननु—अध्ययनस्य ब्राह्मण्यजातिप्रयुक्तत्वेन कर्तव्यतया सिद्धत्वादन्तस्य करणीयताऽध्यापनस्य वा (?) । नित्यत्वान्न तस्यापि नित्यः स्वाध्यायः स्वाध्यायप्रवचनशब्दाभ्यां प्रतिपाद्योऽतः शिष्यते । न चासावपि कर्तुं शक्योऽनेककार्यव्यग्रत्वात् । न चाशक्यं विदधाति विधिः । ततः स्वाध्यायप्रवचने एवेति यत्किंचिदेतदित्याशङ्क्यैतन्मन्त्रमात्रं नित्यं जपनीयम् । अन्यत्तु यथाशक्ति । तावताऽशक्यत्वाभावादित्यभिप्रायवानाह—**अहं** नित्यस्वाध्यायस्य कर्ता । **वृक्षस्यो**र्ध्वमूलस्यावाक्शाखस्य वनस्पतेरधिदैवादिभिन्नस्य स्थूलसूक्ष्मशरीरस्येत्यर्थः । **रेरिवा** प्रेरयिता । **कीर्तिः** स्ववर्णाश्रमोचितानुष्ठानकारित्वेन विद्यया चेहामुत्र पुण्यं यशः । **पृष्ठम**त्युच्छ्रितं शृङ्गं लोकद्वयदर्शनस्य विषयः । **गिरेरिव** पर्वतस्य मेरोर्यथा तथा । मम स्यादिति शेषः । **ऊर्ध्वपवित्र** ऊर्ध्वं कारणं पवित्रं ब्रह्म यस्य मम देहादिसंघातस्य सोऽहमूर्ध्वपवित्रो वृक्षोऽप्यहमेवेत्यर्थः । **वाजिनीव** वाजोऽन्नं देवानां रोहितादिरूपं प्रसिद्धमस्मदादीनां चास्यास्तीति वाजी सविता तस्मिन्यथा । **स्वमृतं** सुष्ठमृतं रोहितादिरूपमानन्दात्मस्वरूपं वाऽस्मि । **द्रविणं** धनं हिरण्यादिरि(कं) वाऽऽनन्दात्मस्वरूपम् । **सवर्चसं** वर्चस्तेजो ब्रह्मसाक्षात्कारस्तेन सह वर्तत इति सवर्चः, सवर्च एव सवर्चसम् । **सुमेधाः** सुष्ठु मेधा 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतधारणरूपा यस्य स सुमेधाः । **अमृतोक्षितः,** अमृतेन गुरुकटाक्षेणोक्षितः सेचितः, अमृतो मरणशून्योऽक्षितो विकारान्तरहीनो वा । तथा मम स्यादिति । अध्याहाराभावे सात्म्यज्ञानं कीर्तिरप्यहमसीति व्याख्येयम् । श्रुतिराह—**इति,** अनेन प्रकारेण । स्वधर्मनिष्ठस्याऽऽर्षदर्शनसंपन्नस्य **त्रिशङ्को**राध्यात्मिकाधिभौतिकाधिदैविका दुःखस्वरूपाः शङ्कवो यस्य स त्रिशङ्कुः । तस्य भृशं संसारतापैः संतप्तस्य परम-

---

१ ग. 'वे सर्वान्मज्ञा' ।

वैराग्यं प्राप्तस्येत्यर्थः । त्रिशङ्कुनाम्नो वा । **वेदानुवचनमहं** संसारस्य प्रेरयिता[प्रा]-यशः संसारोऽविद्यया, वस्तुतस्त्वानन्दात्मस्वरूपो ब्रह्मसाक्षात्कारवान्गुरुकटाक्षपातेनेति वेदनं वेदः । **तमनु** पश्चाद्वचनम् '**अहं वृक्षस्य**' इत्यारभ्य '**अमृतोक्षितः**' इत्यन्तं वेदानुवचनम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दभिरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां शीक्षाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

अथ शीक्षाध्याये दशमोऽनुवाकः ।

---

सत्यादीन्यनुष्ठेयान्यन्तर्मुखेन(ण) मुमुक्षुणा । तानि किं सति मुमुक्षुत्व एवानुष्ठेयानि नेतरथेत्याशङ्क्य मुमुक्षुत्वेऽमुमुक्षुत्वे वोपनयनमारभ्याऽऽब्रह्मसाक्षात्कारमाश्मशानं वा स्ववर्णाश्रमोचितानि कर्माणि करणीयानीत्येतदर्थं गुरुकुलात्प्रवसतो ब्रह्मचारिण इदमुपदेश्यमाचार्येणेत्यभिप्रायेणाऽऽह—**वेदम्** ऋगाद्यन्यतमं, स्वशाखामात्रं वा । आदरो नैकवचने द्वौ त्रींश्चतुरो वा साङ्गविद्योपविद्या(वेदोपवेदा)न् । **अनूच्य** तदुपनयनेनमनूक्त्वा । **आचार्यः** शिष्यमुपनीय कल्परहस्यादिसहितस्य वेदस्य वक्ता । **अन्तेवासिनं** छायावदपरित्यागिनमाह्वानेनाध्ययनस्य कर्तारमित्यादिशिष्यलक्षणसंपन्नं शिष्यम**नुशास्ति** वेदवचनमनुशासनं करोति अनुशासनं कुर्यादित्यर्थः । **सत्यं** यथाप्रमाणदृष्टं हितं प्रियं च वचनम् , **वद** उच्चारय । **धर्मं** स्ववर्णाश्रमविहितं कर्म **चर** आचर । **स्वाध्याया**[२]-न्नित्यस्वाध्यायात् , **मा प्रमदः** प्रमादं मा कार्षीः । **आचार्याय** मह्यं, **प्रियमिष्टं, धनं** गोधनादि, **आहृत्य** समस्तविद्यानिष्क्रयार्थं, सदृशान्दारान्स्वीकृत्य **प्रजातन्तुं** पुत्रपौत्रादिसंततिं, **मा व्यवच्छेत्सीः** व्यवच्छेदं मा कार्षीः । पुत्रपौत्राद्यर्थं दृष्टार्थोऽदृष्टार्थश्चोद्यमः करणीय इत्यर्थः ।

सत्यादीनां कर्तव्यतोक्ता, तेषामन्येषां च करणीयता, तेषामेव कदाचिद्वारणीयतेति बुद्धिं वारयितुमाह—**सत्यादुक्तान्न प्रमदितव्यं** प्रमादो न करणीयः । निरन्तरं तदेवानुष्ठेयमित्यर्थः । **धर्मा**दुक्ता**न्न प्रमदितव्यं** व्याख्यातम् । **कुशलात्**क्षेमकरात्कर्मणोऽदृष्टार्था**न्न प्रमदितव्यं** व्याख्यातम् । **भूत्यै** भूतेरैश्वर्यात् । **न प्रमदितव्यं** व्याख्यातम् । **स्वाध्यायप्रवचनाभ्यां** नित्यस्वाध्यायाधीताविस्मृतौ दृष्टार्थाध्यापनाभ्याम् । **न प्रमदितव्यं** व्याख्यातम् । यद्यपि 'स्वाध्यायान्मा प्रमदः' इत्यनेनैव स्वाध्याये प्रमादराहित्यं प्राप्तं तथाऽपि सर्वेभ्यः कर्तव्येभ्यः स्वाध्याये महान्यत्नः करणीय इत्येतदर्थं पुनः स्वाध्यायेत्याह । **देवपितृकार्याभ्यां** देवकार्यं दर्शपौर्णमासादि पितृकार्यं पिण्डपितृयज्ञादि, अथवा देवकार्यं वृद्धिश्राद्धादि पितृकार्यं

---

१ ग. 'नमुक्त्वा । २ खं. ग. °यात् । मा । ३ ग. °णो दर्शयान्न । ४ ख. 'स्मृतिद° ।

मृतश्राद्धादि ताभ्याम्। **न प्रमदितव्यं** व्याख्यातम्। **मातृदेवो** माता देवो यस्य स मातृदेवो **भव** भूयाः। **पितृदेवः** पिता देवो यस्य स पितृदेवो **भव** भूयाः। **आचार्यदेव** आचार्यो देवो यस्य स आचार्यदेवो **भव** भूयाः। **अतिथिदेवो**ऽतिथिर्देवो यस्य सोऽतिथिदेवो **भव** भूयाः। जननीजनकाचार्यातिथीनामभीष्टदेवतावत्परिचर्यां कुर्वंस्तदुक्तकारी कर्मणा मनसा वाचा तदिष्टामेव चेष्टां कुरु, मा प्रमादेनापि तदनिष्टचेष्टामित्यर्थः।

ननु यद्यत्पूर्वैः कृतं तत्करणीयम्। तथा च जामदग्न्यः स्वजननीं जघान, शुनःशेपः स्वजनकं तत्याज, याज्ञवल्क्यस्त्वाचार्यं, गौतम इन्द्रमतिथिं, ब्रह्मा स्वसुतां जगाम, इन्द्रस्त्रिशीर्षं ब्राह्मणं जघान, क्षत्रियो बलदेवः सुरां पपौ, सोमो गुरोर्भार्यां जहार, इत्यादि महतामाचारानुसारादहमप्यनुष्ठास्यामीत्यत आह—**यानि** प्रसिद्धानि। **अनवद्यानि,** अदुष्टानि महतामप्याचरितानि शास्त्रे लोके वा निन्दारहितानीत्यर्थः। **कर्माणि** लौकिकानि वैदिकानि वा कर्तव्यानि **तान्युक्तान्यनिन्दितानि** महतामपि। यथा जामदग्न्यः पितृवचनं चकार, शुनःशेपो विश्वामित्रस्योपकारं न विसस्मार, याज्ञवल्क्यस्तपसाऽऽदित्यमवाप्य शुक्लानि यजूंषि प्रतिपेदे, गौतमः स्वभार्याजारायापीन्द्राय प्राणपर्यन्तं कोपं न चकार, ब्रह्मा पुत्रोत्पत्त्यर्थं महान्तमुद्यमं चकार, इन्द्रश्च त्रिलोकीस्वास्थ्यार्थं निन्दितां हत्यामपि स्वी चकार, बलदेवश्च शेषोऽपि देवब्राह्मणकार्यार्थं शुक्रशोणितशरीरमपि स्वीचकार, सोमो गुरोर्गरीयसीं कीर्तिं चकार, इत्यादीनि त्वया **सेवितव्यानि,** अनुष्ठेयानि।

ननु—पितुर्व ( तृव ) चनकरणादीन्यनुष्ठास्यामि महद्भिः कृतत्वान्मातुर्व(तृव)धादीनि चेत्यत आह—**नो** निषेधार्थः, **इतराणि** मातुर्व(तृव)धादीनि सेवितव्यानीत्यनुषङ्गः। ननु तर्ह्यन्यैः कृतान्यवद्यानि कर्माणि नानुष्ठास्यामि किंतु मद्गुरुभिर्भवद्भिः सेवितानि सर्वाण्यपि वेदैर्वोक्तानि "अग्निहोत्रं जुहोति" "न कांचन परिहरेत्" इत्यादीन्यनुष्ठास्यामीत्यत आह—**यानि** प्रसिद्धानि, **अस्माक**माचार्याणां वेदानां वा **सुचरितानि** विहितानि कर्माण्यस्माभिरनुष्ठीयमानानि "अग्निहोत्रं जुहुयात्" इत्यादीनि वेदैरुक्तानि वा शोभनानि लोकद्वयश्रेयस्करत्वेन। **तानि,** उक्तानि सुचरितानि। **त्वया** शिष्येणो**पास्यानि** निरन्तरमनुष्ठेयानि।

निन्दितानामाचार्यैः कृतानां वेदैरुक्तानां वाऽननुष्ठेयत्वमाह—**नो इतराणि। न** परदारगमनादीन्युपास्यानीत्यनुषङ्गः। **ये के च** संबन्धिनोऽसंबन्धिनो वा तव। ये के चास्मदस्मत्तस्त्वदाचार्येभ्यः। **श्रेयाꣳसो**ऽतिशयेन प्रशस्याः केचनै। तर्हि किं क्षत्रियादय इत्यत आह—**ब्राह्मणा** ब्राह्मणत्वजात्याऽऽक्रान्ताः। **तेषामुक्तानां** ब्राह्मणानाम्।

---

१ ग. महद्गु॰। २ क. ख. ॰न क्ष॰।

त्वयाऽस्मच्छिष्येण । **आसनेनाऽऽ**सनोपलक्षितसत्कारकरणेन **प्रश्वसितव्य**मासनदानादिना स्वगृहमागतानां प्रश्वासः श्रमापनयः करणीयः । अथवा तेषामासन उपवेशने सभायामित्यर्थः । **न प्रश्वसितव्यं** प्रश्वासोऽपि न करणीयः, किमुत वार्तादिकम् । केवलं तदुक्तग्राहितया स्थेयमित्यर्थः । **श्रद्धयाऽऽ**स्तिक्यबुद्ध्या । देशकालपात्रसंपत्तौ सत्यां विभवानुसारेण गोभूहिरण्याशनपानादिकं यथोचितं **देयं** दातव्यम् । न विपर्यय इत्याह— **अश्रद्धया** नास्तिक्यबुद्ध्या । **अदेयं** न देयम् । **श्रिया** विभूत्या । **देयं** दातव्यम् । **ह्रिया** लज्जया । **देयं** दातव्यम् । **भिया** भीत्या । **देयं** दातव्यम् । **संविदा** मैत्र्यादिकरणेन । **देयं** दातव्यम् । श्रियादिनिमित्तेषु दानेष्वास्तिक्यबुद्धिपुरःसरमेव देयं, न तु नास्तिक्यबुद्ध्येति तात्पर्यार्थः ।

**अथ** महदुपदेशानन्तरम् । **यदि** पक्षान्तरे । कथंचित्ते तव शिष्यस्य मदुक्तं कर्मजातमनुतिष्ठतः । **कर्मविचिकित्सा**[1] **वा** कर्मस्वग्निहोत्रादिषु संध्यावन्दनादिषु वा श्रौतेषु स्मार्तेषु "उदिते जुहोति" "अनुदिते जहोति" सावित्रीं स्त्रीदेवतां पुरुषदेवतां वा" इत्यादिवाक्येभ्यो विचिकित्सा संशयः । वाशब्दो विपर्ययार्थो विपर्यया वा । **वृत्तविचिकित्सा वा** वृत्तमाचारः कुलपरम्परागतस्तस्मिन्विचिकित्सा संशयः । यथा केषांचिन्मातुलसुताविवाहमांसभक्षणादिकं किंचिदपरेषां नेत्यादिदर्शनेन । वाशब्दो विपर्ययार्थः । वैदिके लौकिके च कर्मणि संशयोत्पादे[2] विपरीतप्रवृत्तिर्वा पण्डितंमन्यत्वेनेत्यर्थः । **स्याद्भवेत्** । तदा ये प्रसिद्धा नीरागद्वेषा यथाशास्त्रानुयायिनः । **तत्र** तस्मिन्देशे, यत्र भवतो निवासः । **ब्राह्मणा** ब्राह्मणत्वजा[3]त्याऽऽक्रान्ताः । **संमर्शिनः** संमर्शो रागद्वेषौत्सुक्यराहित्येन शास्त्रार्थनिर्णयः, स येषां नित्यमस्ति ते संमर्शिनः । **युक्ताः** कर्मानुष्ठानयोगरता नित्यनैमित्तिकानुष्ठानशीला इत्यर्थः । **आयुक्ता** अपरप्रयुक्ताः शास्त्रार्थस्य वचनेऽनुष्ठाने चान्यभीतिरहिता इत्यर्थः । **अलूक्षा** अरूक्षाः कर्णकठोरवचनपरानिष्टकारिबुद्धिरहिता इत्यर्थः । **धर्मकामा** धर्म एव कामोऽभिलाषो येषां ते धर्मकामाः । **स्युर्भवेयुः** । **यथा** येन प्रकारेण । ते यथोक्तविशेषणविशिष्टा ब्राह्मणाः । **तत्र** तस्मिन्कर्मणि वृत्ते वा । **वर्तेरन्वृ**त्तिं कुर्वीरन्यथाऽनुतिष्ठन्तीत्यर्थः । **तथा** तेन प्रकारेण । त्वमपि **तत्र** कर्मणि वृत्ते वा । **वर्तेथा** वृत्तिं कुरु तद्वत्तदनुतिष्ठेत्यर्थः । **अथ,** अथवा तेष्व**भ्याख्यातेष्वभ्युक्ता** दोषेण संदिह्यमानेन संयोजिताः केनचित्तेषु । व्याख्यातमन्यत् ।

**एष—'सत्यं वद'** इत्यारभ्य **' तथा तेषु वर्तेथाः '** इत्यन्त **आदेशः** कर्तव्यार्थः सत्यादिलक्षणः । तत्कथनेनैष उक्तार्थो वाक्यसंदर्भ **उपदेशः** पित्रादिवचनरूपः ।

---

१ ग. °त्सा क° । २ ग. °त्पादे वि° । ३ ग. °णजा° ।

**एषोक्ता** वाक्यसंततिर्वेदोपनिषद्वेदरहस्यबुद्धिः । **एतदुक्तं** वाक्यजातम् । **अनुशासनं** राज्ञामिवाऽऽज्ञाभूतम् । एतदर्थाननुष्ठाने महतो दुःखस्य प्राप्तेर्विधीयमानत्वात्सत्स्नेहमुच्यमानत्वाद्वेदसारत्वादकरणे दुःखप्राप्तेश्चेत्यर्थः । यत्र एवं तत **एवमुक्तप्रकारं** सत्यादिकम् । **उपासितव्यं** नित्यं निरन्तरमा ब्रह्मज्ञानादा श्मशानाद्वाऽनुष्ठातव्यम् । एतदेव न त्वन्यदनुष्ठेयमेव चैतदर्थं पुनराह—**एवमु च,** एवमेव । चकारोऽवगतिसमुच्चयार्थः । अवगत्य **चैतत्**सत्यवदनाद्यभ्याख्यातेषु वर्तनान्तम् । **उपास्यमु**पासनीयं नित्यमनुष्ठेयमित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां शिक्षाध्याये दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

---

अध्ययनव्याख्यानोपक्रमोपसंहारयोः शान्तिः पठनीयेति शिष्याञ्शिक्षयितुं प्रपाठकान्ते वक्ष्यमाणविद्योपसर्गशान्त्यर्थमपि कृतायाः शान्तेः फलं दर्शयन्नुक्तामेव शान्तिमनुवाकेन पुनः पठति कानिचित्पदान्यन्यथयित्वा—**शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।** वदिष्यामीतिपदस्थलेऽवादिषमवत्विति पदस्थल आवीदिति विशेषः । शेषं शमित्यारभ्य शान्तिरित्यन्तं समानपाठं समानार्थम् । अवादिषमुक्तवानस्मि । आवीत्पालनमकरोत् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां शीक्षाध्याय एकादशोऽनुवाकः ॥ ११ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दस्य कृतौ तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां प्रथमः शीक्षाध्यायः समाप्तः ॥ १ ॥**

---

## अथ द्वितीयो ब्रह्मवल्ल्यध्यायः ।

तत्र प्रथमोऽनुवाकः ।

---

यदर्थं पूर्वः प्रपाठकः प्रवृत्तस्तां ब्रह्मविद्यां विवक्षुस्तस्यामत्यन्तमादरार्थं प्रकारान्त-

---

१ ग. °षोक्तवा° । २ क. ग. °ज्ञामाज्ञा° । ३ ग. एवमु° ।

रेण पुनः शान्तिं पठति—**सह** समम्। **नावावाम्**। **अवतु** साधनज्ञानेन ब्रह्म रक्षतु। **सह नौ** व्याख्यातम्। **भुनक्तु** फलज्ञानेन पालयतु। **सह** समं **वीर्यं** विद्यातेजोतिशयो जीवन्मुक्तिलक्षणस्तं **करवावहै** करवाव। **तेजस्वि** वीर्यवत्तमं **नावा**वयोः। **अधीतं** गुरुमुखादवगतम्। **अस्तु** भवतु। अथवा तेजस्विनावावां भवावेति शेषः। तेजस्विनोरिति वा व्याख्येयम्। अधीतमस्तु तेजस्वीति शेषः। किं बहुना **मा विद्विषावहै** प्राणिभिः परस्परं वा विद्वेषं मा करवावहै। **ॐ शान्तिः शान्तिः शान्तिः,** व्याख्यातम्।

पूर्वप्रपाठकारम्भे सूचितब्रह्मविद्याया इदानीं सूत्रेण फलमाहाधिकारिप्रवृत्तिसिद्धये—**ब्रह्मवि**द्ब्रह्मसाक्षात्कारवान्। **आप्नोति** मोक्षं प्राप्तकण्ठस्थाभरणवत्प्राप्नोति। **परं** ब्रह्मेदमेस्मीत्यविद्यातत्संस्कारशून्यत्वेनाखण्डैकरसमात्मानमवगत्य स एव भवतीत्यर्थः। **तत्त्र** ब्रह्मणि ब्रह्मविदः परप्राप्तौ च। **एषा** वक्ष्यमाणमन्त्रभूता। **अभ्युक्ता** सर्वतः सर्वार्थप्रकाशकत्वेन कथिता। वेदपुरुषेणेति शेषः। **सत्य**मनृतनकारार्थविलक्षणम्। तर्हि भावरूपं जडमित्यत आह—**ज्ञानं** जडविलक्षणम्। यद्यभावभावविलक्षणो भावविशेषस्तर्हि घटादिकमपि तथेत्यत आह—**अनन्तं** देशकालवस्तुपरिच्छेदशून्यम्। एतावत्येवोच्यमानेऽभावः स्यात्ततोऽस्य व्यवच्छेदार्थमाह—**सत्यमिति**। सत्यमनन्तमित्युच्यमाने जडमपि स्यात्तद्व्यावृत्त्यर्थं **ज्ञान**मित्याह। यद्यपि ज्ञानमनन्तमित्युच्यमाने न सत्यपदस्य कृत्यं ज्ञानस्यासद्विलक्षणत्वात्। तथाऽपि ज्ञानमप्यसदिति सर्वासद्वादिनः संगिरन्ते। तत्पक्षाधिक्षेपार्थं सत्यमित्याह।

अयं भावः—येनापि सर्वासत्त्वमङ्गी क्रियते तेनाप्यङ्गी क्रियत एव सत्त्वम्। अन्यथाऽसत्त्वस्याप्यनुपपत्तेः। तयोर्निरपेक्षत्वादिभ्यो हेतुभ्यः सत्त्वस्यैवाङ्गीकारः करणीयो नासत्त्वस्येति। जडवैलक्षण्यं च स्वयंप्रकाशमानानन्दात्मन एवाविद्यायाः सकार्याया जाड्ये सति दुःखानात्मत्वदर्शनात्। एवं चेज्ज्ञानमित्येवास्तु, कृतमनन्तपदेनापीति न मन्तव्यम्। अन्तःकरणाविद्यावृत्त्योरपि ज्ञानशब्दाभिधेयत्वात्तदेव ज्ञानमिदमपीतिबुद्धिनिवारणार्थमनन्तपदस्योपयोगात्पदत्रयमिदं स्वरूपलक्षणमखण्डैकरसार्थं प्रकृष्टप्रकाशश्चन्द्र इत्यादिवत्।

इदानीं लक्ष्यपदमाह लक्षणार्थसमर्थकम्। **ब्रह्म** बृहतेर्धातोरर्थभूतमभ्यधिकम्। आधिक्यं चासज्जडान्तवद्वैलक्षण्यमन्तरेण नोपपद्यते। तत इदं सत्यं ज्ञानमनन्तं **यो**ऽधिकारी। **वेद** जानाति। **निहितं** निक्षिप्तं **गुहायां** बुद्धावधिदैवाधिभूताध्यात्मभेदेन व्यवस्थितायाम्। सा च कुत्रेत्यत आह—**परम** उत्कृष्टे भूताकाशात्, **व्योमन्**व्योम्न्यव्याकृते बुद्धिकारणेऽविद्याकार्यान्तःकरणवृत्तावभिव्यक्तमेवोक्तलक्षणं ब्रह्म सर्वोऽप्यधिकार्यहमसीत्यवगच्छतीत्यर्थः। **स** ब्रह्मज्ञानी। **अश्नुते** तादात्म्येन प्राप्नोति। **सर्वान्कामा**न्निखिलान्कामनाविषयान्। **सह** युगपत्क्रममन्तरेणेत्यर्थः। केन रूपेण

---

१ क. °र्वेपाठकाधिकारभेदानां सूत्रे°। २ ख. °महमस्मी°।

युगपत्सर्वान्कामान्प्राप्नोतीत्यत आह—**ब्रह्मणा** ब्रह्मतादात्म्यरूपेण। ब्रह्मणोऽपि किं रूपमित्यत आह—**विपश्चिता** स्वयंप्रकाशमानज्ञानैकरूपेण। **इति**र्मन्त्रपरिसमाप्तौ।

ब्रह्मणः स्वरूपलक्षणमुक्त्वेदानीं नगजन्मादितटस्थलक्षणं हृदि कृत्वा मन्त्रेण संक्षेपेण व्याख्यातं सूत्रं विस्तरेण व्याकरिष्यंस्तत्त्वंपदार्थयोरैक्येनाऽऽत्मनो जगत्कारणत्वमाह—**तस्मा**त्सत्यज्ञानानन्तलक्षणाद्ब्रह्मणः। **वा** आत्मत्वेन स्मर्यमाणात्प्रसिद्धात्। **एतस्माद्**बुद्धेर्द्रष्टुः स्वयंप्रकाशमानात्। **आत्मनो**ऽस्मच्छब्दप्रत्ययव्यवहारालम्बनात्। **आकाशः** शब्दगुणत्वेन प्रसिद्धोऽवकाशः **संभूत** उत्पन्नः। इदं पदं यथालिङ्गं यथावचनं पुरुषान्तेष्वनुवर्तते **आकाशादु**क्तात्। **वायुः** शब्दस्पर्शगुणो नभस्वान्। वायोरुक्तादग्निः शब्दस्पर्शरूपगुणस्तेजोधातुः। **अग्ने**रुक्ता**दापः** शब्दस्पर्शरूपरसगन्धगुणा द्रवात्मिकाः। **अद्भ्य** उक्ताभ्यः **पृथिवी** शब्दस्पर्शरूपरसगन्धगुणा कठिना भूमिः। **पृथिव्या** उक्ताया **ओषधयः** फलपाकान्ताः। **ओषधीभ्य** उक्ताभ्यो**ऽन्न**मदनीयं प्रसिद्धम्। **अन्नादु**क्ता**त्पुरुषः** स्थूलदेहः पुरुषशब्दाभिधेयः।

इदानीमेवं पुरुषमुररीकृत्याऽऽत्मनः कोशपञ्चकातीतं रूपं विवक्षन्प्रथमं कोशानाह—**स** उक्तः पुरुषः। **वै** प्रसिद्धो हस्तपादादिमा**नेष** प्रत्यक्षः। **पुरुषो** व्याख्यातम्। **अन्नरसमयः**, अन्नस्याद्यमानस्य यो रसः सारभूतः शुक्रशोणितरूपस्तस्य विकारोऽन्नरसमयः। **तस्य** पुरुषस्य पक्षिणः। **इदमेव** प्रसिद्धं मस्तकमेव। **शिरो** मस्तकम्। **अयं दक्षिणो** भुजः। **दक्षिणो** दक्षिणभागस्थः। **पक्षः** पत्रम्। **अयं** वामो भुजः। **उत्तरो** वामभागस्थः। **पक्षः** पत्रम्। **अयं** गलमारभ्याऽऽकटिस्थलं देशः। **आत्माऽऽन्तरा** धीः। **इदं** कटिस्थलादधः स्थितं पादद्वयम्। **पुच्छं** लाङ्गूलम्। लाङ्गूलस्य पुच्छत्व उपपत्तिः **प्रतिष्ठा** प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाऽऽधार इत्यर्थः। पक्षिणोऽपि पुच्छाधारत्वमस्माभिरदृष्टमपि प्रतिष्ठेति वचनसामर्थ्यात्कल्पनीयम्। **तदपि** तस्मिन्नुक्तेऽप्यर्थे पक्षिण्येष वक्ष्यमाणः। **श्लोको** मन्त्रः। **भवति** स्पष्टम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां द्वितीये ब्रह्मवल्ल्यध्याये प्रथमोऽनुवाकः॥ १॥

---

अथ द्वितीयोऽनुवाकः।

---

**अन्नाद**दनीयात्। **वै** प्रसिद्धात्। **प्रजा** जन्तवः। **प्रजायन्ते** स्पष्टम्। **याःकाश्च** याः काश्चन निखिलाः, स्वेदजाण्डजजरायुजोद्भिज्जा इत्यर्थः। **पृथिवीं** ब्रह्माण्डान्तर्बहिर्वर्तिनीं भूमिं **श्रिताः**। **अथो** अपि। अन्नजाः सत्योऽन्नेनैवादनीयेनैव। अद्यमानेन **जीवन्ति** प्राणान्धारयन्ति। **अथ** जीवैकर्मक्षयानन्तरम्। **एनद**न्नमग्निभूमिश्वकीटादि-

---

१ क. °न्नात्पु°। २ ख. °वनक°। ३ ख. °श्वविट्की°।

रूपम् । अपियन्त्यपिगच्छन्त्यन्ने विलीयन्त इत्यर्थः । अन्ततोऽन्ते । तथा च न प्रत्यक्षविरोधोऽपि । सति शरीरेऽन्नेऽप्ययस्यानभिधानात् । अन्नं चतुर्विधप्राणिजातशरीरस्योत्पत्तिस्थितिलयकारणमदनीयम् । हि यस्मात् । भूतानां चतुर्विधानां प्राणिनाम् । ज्येष्ठमतिशयेन वृद्धं कारणमित्यर्थः । तस्मात्ततः । सर्वौषधं सर्वस्य प्राणिजातस्यौषधं क्षुत्तृड्रोगस्य वारणम् । उच्यते कथ्यते ।

इदानीमन्नमयस्य पक्षिवत्कालव्याधकदर्थीकृतस्य कारणान्नप्रशंसाप्रसङ्गेनाऽऽत्मज्ञानाभिमुखत्वार्थं फलेन प्रलोभ्यान्नोपासनमाह—सर्वं निखिलं वै प्रसिद्धं ते वक्ष्यमाणाः । अन्नमदनीयम् । आप्नुवन्ति प्राप्नुवन्ति । य उपासकाः । अन्नमदनीयं । ब्रह्म सर्वस्मादधिकं ब्रह्मज्ञानेनेत्यर्थः । उपासत एकरूपेण प्रत्ययप्रवाहेण साक्षात्कुर्वते । पूर्वमन्नस्य सर्वभूतकारणत्वार्थमुक्तमिदानीं तदेव ब्रह्मतादात्म्योपासनोपपत्तये ब्रह्मसमानधर्मत्वं दर्शयितुं पुनः पठति—अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । यथा ब्रह्म भूतानां ज्येष्ठमवगतं सद्भवरोगौषधमुच्यते, तथा यस्मादन्नं भूतानां ज्येष्ठं तस्मात्सर्वौषधमुच्यते । व्याख्यातश्च पदार्थः । अपि च यथा ब्रह्मणो भूतानि जायन्ते ब्रह्मणि तिष्ठन्ति च तथाऽन्नाददनीयात्, भूतानि चतुर्विधान्यण्डजादीनि । जायन्त उत्पद्यन्ते । जातान्युत्पन्नानि । अन्नेनादनीयेन । वर्धन्ते वृद्धिं गच्छन्ति । ततो ब्रह्मणा समत्वाद्युक्तमन्नस्य ब्रह्मणा तादात्म्येनोपासनमिति भावः ।

इदानीमन्नशब्दार्थमाह—अद्यते भक्ष्यते । भूतैरिति शेषः । अत्ति च भक्षयत्यपि । चकारः कर्मकर्तृव्युत्पत्त्योरन्नशब्दे समुच्चयार्थः । भूतान्यण्डजादीनि । तस्माद्यतोऽद्यतेऽत्ति च भूतानि ततः । अन्नमन्नशब्दं तदन्नमुच्यते कथ्यते । इतिः प्रथमकोशपरिसमाप्त्यर्थः ।

तस्मादुक्तात् । वै प्रसिद्धात् । एतस्मात्प्रत्यक्षात् । अन्नरसमयादन्नरसविकारास्स्थूलदेहात् । अन्यः पृथग्भूतः । अन्तरोऽभ्यन्तरः । आत्माऽऽत्मशब्दाभिधेयः । प्राणमयः प्राणविकारः । तेन प्राणमयेन । एष प्रत्यक्षः स्थूलो देहः । पूर्णः परिपूर्णः । स प्रसिद्धः । वै स्मर्यमाणः । एष साक्षिप्रत्यक्षः प्राणमयः । पुरुषविध एव पुरुषाकार एव । मूषानिषिक्तद्रुतताम्ररसो यथा तादृगेव न त्वन्यादृशः ।

तर्हि किं पुरुषः पुरुषान्तरसदृश इति चोभयमपि स्वतन्त्रमित्याशङ्क्य नेत्याह—तस्य पूर्वस्य पुरुषविधतां पुरुषसदृशताम् । अनु पश्चात् । अयं तस्मादुत्तरः । पुरुषविधः पुरुषसदृशो न तु स्वतन्त्र इत्यर्थः । ततः पूर्ववदस्मिन्नपि कल्पना कर्तुं सुकरेति भावः । तस्य प्राणमयस्य । प्राण एवोच्छ्वासकारिणी प्राणवृत्तिरेव न त्वन्यत् । शिरो मूर्धा । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा ।

**पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।** व्यानापानौ पूर्वप्रपाठके व्याख्यातौ । आकाश आकाशस्थः समानः । पृथिवी पृथिवीस्थः सर्वप्राणकीलभूत ऊर्ध्वगाम्युदानः । अनेन हि सर्वे प्राणा ध्रियन्ते स्ववृत्तिसंकोचेन । वाय्वधिकारादाकाशपृथिवीशब्दौ यथाकथंचित्समानोदानविषयौ नीतौ । अथवा मुख्यार्थतैवानयोः शब्दयोरस्तु । तथा च श्रुतेः कोशेष्वनास्थेति व्याख्येयम् । व्याख्यातमन्यत् ॥

इति श्रीमत्परमहंसपरिव्राजिकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्मवल्ल्यध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

---

**प्राणं** मुख्यप्राणं **देवा** श्चक्षुरादयोऽग्न्यादयः । **अनु** प्राणमनु । **प्राणन्ति** चेष्टन्ते । **मनुष्या** मनुजाः । **पशवश्च** गवाद्याः । चकारः सर्वशरीरसंग्रहार्थः । **ये** प्रसिद्धार्थाः । **प्राणो** मुख्यप्राणः । **हि** यस्मात् । **भूताना** मण्डजादीनाम् । **आयु**र्जीवनकारणम् । अनेन देहेन्द्रियात्मवादो निराकृतः । **तस्मा**द्यस्मादायुस्ततः । **सर्वायुषं** सर्वायुरेव सर्वायुषम् । **उच्यते** कथ्यते । इदानीं मन्त्रोपासनवत्प्राणोपासनाफलं प्राणोपासनं चाऽऽह— **सर्वमेव** निखिलमेव । **ते** वक्ष्यमाणाः । **आयु**र्जीवनकारणं शतसंवत्सररूपम् । **यन्ति** गच्छन्ति । **ये प्राणं ब्रह्मोपासते** । प्राणं मुख्यप्राणम् । व्याख्यातमन्यत् । अन्नवत्प्राणस्यापि ब्रह्मसमानतां वक्तुं पुनरुक्तस्याभिधानम्—**प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते** । व्याख्यातम् । ब्रह्मणो यथा सर्वायुष्ट्वं तद्वत्प्राणस्यापीत्यर्थः । **इतिः** प्राणकोशपरिसमाप्त्यर्थः । “ **तस्यैष एव शारीर आत्मा यः पूर्वस्य** ” एतदनन्तरं यद्यपीतिशब्दः पठनीयः प्राणकोशस्यात्र परिसमाप्तेः, तथाऽप्यस्य वाक्यस्यान्नमयादधिकत्वाच्छङ्कोत्तरत्वाच्चैतस्मात्पूर्वपाठ इतिशब्दस्य[1] । अथवा पाठक्रमादर्थक्रमस्य बलीयस्त्वादत्र पठितस्यापि तदनन्तरं संगतिरवगन्तव्या ।

ननु—पूर्वस्मात्पुरुषादनन्यः प्राणमयस्तस्य तदन्तःपातित्वाद्धस्तपादादिवदित्यत आह— **तस्यान्नमयस्य । एष एव** समनन्तरोक्तः प्राणमय एव । **शारीरः** शरीरे भवः । **आत्मा** सर्वव्यवहारकारणत्वेनाऽऽत्मा । **यः** प्राणमयः । **पूर्वस्य** प्राणमयात्पूर्वस्य । तस्य पूर्वस्य यः प्राणमय एष एव शारीर आत्मेत्यन्वयः । अयं भावः—प्राणो न च स्थूलशरीरान्तःपातीं । तथा च सति नासापुटनिर्गतस्तद्वदेव चाक्षुषः स्यादिति । **तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव**

---

१ ख. °स्य पठितत्वात् । अ° १

**शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।** प्राणमयादुक्तात् । मनोमयो मनोविकारः । तस्य यजुर्यजुर्विषया वृत्तिः । ऋगृग्विषया वृत्तिः । साम सामविषया वृत्तिः । आदेशो यजुर्ऋक्सामसु ब्राह्मणमादेशस्तद्विषया वृत्तिः । अथर्वाङ्गिरसोऽथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणानि च तद्विषया वृत्तिः । अन्यत्पूर्वेण समानपाठम् । अन्नमयार्थस्थले प्राणमयं प्राणमयार्थस्थले मनोमयं चोक्त्वा पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्मवल्ल्यध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

अत्र हि मनोमयस्य चतुर्वेदवृत्तिप्राधान्यमुक्तम् । वेदाश्च ब्रह्मप्रकाशकत्वान्न ब्रह्मणो भिन्नाः । ततो वेदेभ्योऽभिन्नं सर्वस्य जगतः कारणं विशेषतश्च मनसः "तन्मनोऽकुरुत" इतिवचनान्मनसाऽप्यगम्यरूपं ब्रह्म वदन्मनोमयं स्तौति—**यतः** सर्वस्य जगतः कारणाद्विशेषतश्च मनसः सत्यज्ञानानन्दरूपाद्ब्रह्मणः । **वाचो** यजुर्ऋक्सामादेशाथर्वाङ्गिरसरूपा अन्याश्च । **निवर्तन्ते** ब्रह्म वक्ष्याम इति संकल्प्य प्रवृत्तास्तस्मिन्ब्रह्मणि प्रवेशमलभमाना नेति वदन्त्यो वाराङ्गना इव राजगृहाभ्याशाद्यथागतं निवृत्य भ्रष्टसंकल्पा भवन्ति । निवृत्तिस्तु प्राप्तावप्राप्तौ च संकल्पितस्य दृष्टा । तथा च किं प्राप्य निवर्तन्त इत्याशङ्क्य नेत्याह—**अप्राप्य** लब्ध्वाऽऽनन्दमित्यन्वयः । ननु वागगम्यानामपि जातीचम्पककेतकीकुसुमादिगन्धभेदानां मनसाऽवगतिर्यथा तथाऽस्त्वित्यत आह—**मनसा** यजुरादिपञ्चवृत्तिमता । **सह** समम् । **आनन्दं** हिरण्यगर्भस्याऽऽनन्दादप्यतिशयमनन्तमानन्द **ब्रह्मणः** सत्यज्ञानादिलक्षणस्य । षष्ठीयं 'शिलापुत्रकस्य शरीरम्' इतिवद्व्याख्येया । **विद्वान्** साक्षात्कारवान् । साक्षात्कारेणापगताविद्यो द्वितीयाभावान्न **बिभेति** भयं न गच्छति। **कदाचन** कदाऽपि । यस्मादेतादृशं ब्रह्मास्य कारणं तस्मादतिश्रेष्ठो मनोमय इति भावः । इतिर्मन्त्रसमाप्तौ । अथवा मनोमयकोशपरिसमाप्तौ पूर्ववदवगन्तव्यम् ।

प्राणस्यैवैकदेशो मन इति शङ्कां वारयति—**तस्यैष एव शारीर आत्मा यः पूर्वस्य ।** पूर्वस्य प्राणमयस्य । यः प्रसिद्धो मनोमय एष एव शारीर आत्मेत्यन्वयः । व्याख्यातः पदार्थः । अनेन प्राणस्याऽऽत्मत्वं निवारितम् । **तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ।**

**तदप्येष श्लोको भवति ।** मनोमयादुक्तात् । विज्ञानमयो बुद्धिविकारः । **श्रद्धा**ऽऽस्तिक्यसंपन्नबुद्धिवृत्तिः । **ऋतं** शास्त्रार्थविषये मानसव्यापारविषया वृत्तिः । **सत्यं** तस्मिन्नेव वाक्कायाभ्यामनुष्ठीयमाने तद्विषया वृत्तिः । **योगः** शास्त्रार्थविषये संदेहविपर्ययरहिता वृत्तिः । **महः**, अनया हि यागाद्यनुष्ठाने मनोभास्वरबुद्धितत्त्वं प्रथमजं महत्तत्त्वाख्यम् । प्राणमयार्थस्थले मनोमयं मनोमयार्थस्थले विज्ञानमयं पठित्वा शेषं समानपाठं पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्मवल्ल्यध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ ब्रह्मवल्ल्यध्याये पञ्चमोऽनुवाकः ।

---

**विज्ञानं** बुद्धिः । **यज्ञं** दर्शादिकं **तनुते** विस्तारयति । **कर्माणि** वैदिकानि स्मार्तान्यग्निहोत्रसंध्यावन्दनादीनि लौकिकानि च कृषिवाणिज्यादीनि । **तनुते** विस्तारयति । **अपि च** यज्ञविस्तारेणाभ्युच्चयार्थावपि चौ । विज्ञाने कर्मविस्तारादे**र्विज्ञानं** बुद्धिं **देवा** वागादयोऽग्न्यादयश्च । **सर्वे** निखिलाः । **ब्रह्म** सत्यज्ञानादिलक्षणं **ज्येष्ठम**तिशयेन वृद्धं कारणमित्यर्थः । ज्येष्ठत्वं विज्ञानस्य ब्रह्मणश्च साम्यं तयोस्तादात्म्योपासनार्थमुक्तमित्यवगन्तव्यम् । **उपासते** ब्रह्मतादात्म्येनोपासनं कुर्वते । **विज्ञानं ब्रह्म** व्याख्यातम् । **चेद्य**दि । **वेद** देवव्यतिरिक्तोऽपि जानात्युपासीतेत्यर्थः । **तस्माद्वि**ज्ञानब्रह्मोपासनात् । **चेद्य**दि । **न प्रमाद्यति** प्रमादं न गच्छति बहिर्मुखो न भवतीत्यर्थः । **शरीरे** स्थूलशरीरे । **पाप्मनो** हिरण्यगर्भप्राप्तिप्रतिबन्धकारणानि । **हित्वा** परित्यज्य । **सर्वान्नि**खिलान् । **कामान्का**मनाविषयान् । हिरण्यगर्भतादात्म्येन **समश्नुते** सम्यक्प्राप्नोति । **इति**-र्मन्त्रसमाप्तौ विज्ञानमयकोशसमाप्तौ वा पूर्ववत् ।

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।** तस्य पूर्वस्य मनोमयस्य यो विज्ञानमय एष एव शारीर आत्मेत्यन्वयः । व्याख्यातः पदार्थः । अनेन मनस आत्मत्वं निवारितम् । **तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।** विज्ञानमयादुक्तात् । आनन्दमय आनन्दविकारः सोपाधिकानन्द इत्यर्थः । प्रियं पुत्रादिदर्शनजन्यं सुखम् । मोदः पुत्रादिसंभाषणसहासनादिजन्यं सुखम् । प्रमोदः सहाऽऽसनादौ स्थितानामपि पुत्रादीनामन्यात्नुविधेयत्वजन्यं सुखम् । अभीष्टविषयस्य दर्शनं लाभो भोगश्च

---

१ ख. °क्तो जा° ।

प्रियमोदप्रमोदा इत्यर्थः । **आनन्दः** सुखसामान्यं प्रियमोदप्रमोदेष्वनुगतं सुखं ब्रह्म निरतिशय आनन्दो यस्य मात्रामुपजीवन्ति ब्रह्मादयः । यथा देहावयवाः पादयोः प्राणभेदाः पृथिव्यामुदाने वा वेदाश्च त्रयोऽपि मन्त्रब्राह्मणरूपा अथर्वाङ्गिरःसु दृष्टकर्मसाधनत्वेन, **यथा** बुद्धिभेदाः प्रथमजायां हिरण्यगर्भबुद्धौ च प्रतिष्ठितास्तद्वत्सुखसामान्यविशेषा निरतिशयसुखैकस्वभावे सत्यज्ञानादिरूपे ब्रह्मणि सर्वाधारे प्रतिष्ठिताः । स्थूलस्य देहस्याध्यात्माधिभूताधिदैवभेदभिन्नस्य ब्रह्मणः प्रथमकोशत्वम् । सूक्ष्मस्य स्थूलात्मभूतस्याज्ञानकार्यस्य क्रियाज्ञानशक्तेश्चतुर्धा भिन्नस्य सकारणस्य कोशचतुष्टयत्वं च । सूक्ष्मोऽपि विभागः स्वयं प्राणनिमित्तं हि स्थूलशरीरस्य सर्वव्यवहारं मत्वा स्थूलशरीरात्मभूतः प्राणः क्रियाशक्तिर्द्वितीयः कोशः । प्राणस्यापि मनसेतस्ततो नीयमानत्वाद्बालेनेव मत्तेभवलीवर्दस्य । ततोऽनिश्चयात्मिका ज्ञानशक्तिः प्राणात्मभूता मनआख्या तृतीयः कोशः । मनसोऽप्यनिश्चयात्मनो निश्चयपरतन्त्रत्वान्निश्चयात्मिका बुद्धिर्मनआत्मभूता चतुर्थः कोशः । बुद्धेरपि सुखपरतन्त्रत्वादवस्थात्रये कार्यकारणोपाध्यवच्छिन्नं सुखं पञ्चमः कोशः । तत्रापि प्रियमोदप्रमोदा जागरणस्वप्नज आनन्दः सौषुप्ते व्याकृतोपाधिः । इतः परं भूतभौतिककार्यस्य कारणस्य चाभावादकार्यकारणं ब्रह्म सर्वस्याऽऽधारभूतं कोशपञ्चकवाक्प्रवृत्तिकारणनिमित्तं प्रथमसूत्रेण सूचितम् । मन्त्रेण च व्याख्यातमुक्तवती श्रुतिरित्यर्थः । मनोमयार्थस्थले विज्ञानमयं विज्ञानमयार्थस्थल आनन्दमयं च पठित्वा शेषं समानपाठं पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्मवल्ल्यध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ ब्रह्मवल्ल्यध्याये षष्ठोऽनुवाकः ।

---

आनन्दब्रह्मणोरभेदाद्ब्रह्माभिधानमेवाऽऽनन्दाभिधानमिति मन्वानः पठति—**असन्नेषा**-विद्यमान एव जनैरज्ञातोऽभिभूतश्चेत्यर्थः । **स** वक्ष्यमाणः । **भवति** स्पष्टम् । **असद्**-विद्यमानं खरविषाणसममित्यर्थः । **ब्रह्मा**ऽऽनन्दमयस्य पुच्छं कारणं चेत्युक्तेनासत्त्वप्रकारेण । **वेद** जानाति । **चेद्यदि** । असत्त्वज्ञानादनर्थमुक्त्वा सत्त्वज्ञानादर्थमाह—**अस्ति** विद्यते सर्वस्य कारणत्वेन सर्वात्मत्वेन च । **ब्रह्मे**त्युक्तम् । इत्युक्तेन सत्त्वप्रकारेण । **चे**द्यदि । **वेद** जानाति । **सन्तं** विद्यमानं वाचा मनसा कायेन च पूज्यमित्यर्थः । **एनं** ब्रह्मास्तित्वज्ञानिनम् । **ततो** ब्रह्मास्तित्वज्ञानात्कारणात् । **वि**[१]**जानन्ति** । सर्वे जना इति शेषः । इतिर्मन्त्रसमाप्त्यर्थमानन्दमय [ कोश ] परिसमाप्त्यर्थं वा पूर्ववत् । **तस्यैष एव शारीर**

---

१ क. ग. °प्रज्ञा आ° । २ क. ग. °थमं सू° ।

**आत्मा । यः पूर्वस्य ।** तस्य पूर्वस्य विज्ञानमयस्य य आनन्दमय एष एव शारीर आत्मेत्यनयोर्व्याख्यातः पदार्थः ।

**अथ** कोशपञ्चकाधारब्रह्मास्तित्वनास्तित्वविज्ञानफलकथनानन्तरम् । **अतो** ब्रह्मणः सर्वात्मत्वं यतोऽस्तिनास्तिप्रत्ययौ च कर्तुं सुशकावस्मात्कारणात् । **अनुप्रश्ना** ब्रह्मणोऽस्तित्वे च तज्ज्ञानिनो ब्रह्मप्राप्तावप्राप्तौ च संदेहमनु प्रश्नाः प्रष्टव्या ईप्सितार्थविषयाः शब्दसंदर्भाः । पठ्यन्त इति शेषः । **उतापि । अविद्वान्**ब्रह्मणि संदेहविपर्ययज्ञानवान् । **अमुमानन्दमय**कारणभूतं पुच्छरूपं चास्तिनास्तित्वाभ्याममनिश्चितं वस्तुवृत्तेन । **लोकं** लोक्यमानं स्वयंप्रकाशत्वेन तज्ज्ञानिभिः । **प्रेत्य** परलोकमागत्य शरीरं परित्यज्येत्यर्थः । **कश्चन** कोऽपि । **गच्छति** प्राप्नोति । प्लुतिर्विचारार्था । **आहो** पक्षान्तरे, **विद्वान्**ब्रह्मणि संदेहविपर्ययरहितज्ञानवान् । **अमुं लोकं प्रेत्य** व्याख्यातम् । **कश्चित्**कोऽपि । **समश्नुता ३** समश्नुते व्याप्नोति । प्लुतिर्विचारार्था । **उ** अपि । अयं भावः—यद्यस्ति सत्यज्ञानादिलक्षणं ब्रह्म तर्हि प्राप्तव्यमविदुषाऽपि । न ह्यज्ञानसंशयविपर्ययैर्वस्तुनोऽन्यथात्वम् । सर्वात्मकं चेदविद्वान्न प्राप्नोति विद्वानपि न प्राप्नुयान्नियामकाभावात् । अथ नास्ति तत्तर्हि विदुषाऽपि न प्राप्तव्यम् । न हि नरविषाणादिकं तस्मिन्संदेहविपर्ययरहितज्ञानिनाऽपि प्राप्तुं शक्यम् । अथाशेषविशेषशून्यमप्यनेन प्राप्यते तर्ह्यविदुषा न प्राप्यत इति न नियामकं पश्याम इति । अनेनोक्तश्लोकार्थस्याऽऽक्षेपः कृतः ।

आस्तां विद्वदविदुषोः प्राप्त्यप्राप्ती । ब्रह्मणोऽविद्वदप्राप्त्या यत्तस्य नास्तित्वमापादयितुमिष्टं तज्जगत्कारणत्वकथनेन पूर्वोक्तेन पुनः केनचिद्विशेषेणाभिधीयमानेन निराकुर्वन्सत्त्वपक्षमर्थादादत्ते—**स** सूत्रमन्त्राभ्यां ब्रह्मत्वेनोक्त आत्माऽऽनन्दमयस्य कारणभूतः पुच्छभूतश्च प्रसिद्धः । कथमसौ नास्तीत्यर्थः । ननु सतां चेतनानां किंचित्कारित्वं दृष्टमस्य तस्मिन्सत्यस्तित्वं श्रद्दधामीत्यत आह—**अकामयत** कामनामकुरुत । कामनाविषयमाह—**बहु स्यां** नाना भवेयम् । नानाभवनेऽप्युपायमाह—**प्रजायेयो**त्पद्येय । इत्यनेन प्रकारेणेमां कामनां कृत्वा । **स** कामी **तपः** पर्यालोचनमिदमनेनेत्थमित्यादिरूपम् । **अतप्यत** सृज्यविषयमकरोत् । **स** कामुकस्तापसः । **तप** उक्तम् । **तप्त्वो**क्तविषयं कृत्वा कार्यकारणादिकं प्रथमं विचार्य निश्चित्य चेत्यर्थः । अनन्तर**मिदं** विविधप्रत्ययगम्यं कार्यजातं भूतभौतिकं चेतनाचेतनात्मकम् । **सर्वं** निखिलम् । **असृजतो**त्पादितवान् । सर्वशब्दार्थमाह—**यदिदं किंच** । यत्किंचेदं प्रसिद्धमस्तिनास्तीत्यादिप्रत्ययगम्यं यत्किमपि । तत्कार्यजातम् । **सृष्ट्वो**त्पाद्य । **तदेव** स्वसृष्टमेव । अयमेवकारो[२] देहलीप्रदीपन्यायेन तदनुना प्राविशदित्यनेन च संबध्यते । **अनु** कार्यसृष्टिमन्वेवाप्रविष्टोऽपि तु सर्वत्रावस्था-

---

१ ख. °स नेत्य° । २ ख. °पि स° ।

नादाकाशवत्प्राविशत्प्रवेशमकरोदेव । प्रविष्टशब्दप्रत्ययविषयोऽभूदित्यर्थः ।

**तदनु** कार्यं सृष्टमनु प्रविश्य प्रवेशं कृत्वा । किं तटस्थ एवायं सूत्रधारिवद्गृहं निर्माय तत्र प्रविश्य स्थितः । तथा चाऽऽत्मनो बहुभवनोपायः प्रजायेयेति दृष्टो विपरीत इत्याशङ्क्य नेत्याह—**सच्च** तेजोबन्नरूपमपि । **त्यच्च** वाय्वाकाशरूपमपि । चकारौ तद्बुद्धि समुच्चिनुतः । **अभवत्स्पष्टम्** । इदं क्रियापदं वक्ष्यमाणेष्वपि चतुर्षु पर्यायेषु संबध्यते । **निरुक्तं चानिरुक्तं च** । निःशेषमुक्तं निरुक्तं, घटः पृथुबुध्नोदराकार इत्यादि । तद्विपरीतमनिरुक्तं, जातीचम्पककेतकीकुसुमगन्धभेदादि । चकारौ पूर्ववत् । **निलयनं चानिलयनं च**, आश्रयोऽनाश्रयश्च । चकारौ पूर्ववत् । **विज्ञानं चाविज्ञानं च** । स्मृतिसंशयविपर्ययनिश्चयादि विज्ञानं तत्कारणं वा चिन्मात्रं वा । तद्विपरीतमविज्ञानम् । चकारौ पूर्ववत् । **सत्यं चानृतं च**, भावात्मकत्वे सति कश्चित्कुत्रचित्कथंचित्केनचिदपि बाधरहितं सत्यं व्यवहारतो वा बाधरहितम् । तद्विपरीतमनृतम् । चकारौ पूर्ववत् । अस्ति-नास्तीतिप्रत्ययविषयः सर्वः कार्यकारणवर्गो ब्रह्म च ब्रह्मैवाभूदित्यर्थः । ननु—स सर्वकारणं सर्वमभूदित्येतावत्प्रतीयते न तु तदसत्यं नेति वचनादित्यत आह—**सत्यं** सर्वबाधशून्यं भावरूपं ब्रह्म । **अभवदुक्तं** मूर्तादिकमभवत् । असतः सर्वात्मत्वे सर्वमिदं सर्वैः प्रत्ययैर-सदिति प्रतीयेत नरविषाणवन्ध्यापुत्रादिवत् । ततो नासत्सर्वात्मकं किंतु सदेव । प्रतीतेर-विश्वासे जीवनादिव्यवहारस्यापि दुर्लभत्वमित्यर्थः ।

**किं** सदादिकं दशविधं तद्बुद्ध्यश्चेत्येतावदेव सत्यमभवदित्याशङ्क्य नेत्याह—**यदिदं किंच**, उक्तमनुक्तं चोत्प्रेक्ष्यमाणं यत्किंचेदं निखिलमपीत्यर्थः । तन्निखिलमपि सत्याद्ब्रह्मणोऽभिन्नं तस्मिन्नध्यस्तत्वेन प्रतीयमानं प्रसिद्धम् । **सत्यं** सत्यशब्दार्हं व्यवहारक्षमत्वेन मूर्तामूर्तत्वेन च । मूर्तामूर्तविभागो भूतपञ्चक एव । तेजोबन्नानि मूर्तानि । वाय्वाकाशावमूर्तौ । कार्यकारणयोरपि मूर्तामूर्तत्वे एवमवगन्तव्ये । कार्यं सर्वः प्रपञ्चो भूतभौतिकरूपो मूर्तं स्थूलत्वात्कारणतः । विद्या त्वमूर्तं तद्विपर्ययादप्रतीयमानत्वेन वा । **इति**, अनेन प्रकारेण । **आचक्षते** कथयन्ति ब्रह्मविदः । तत्र सर्वकार्यशून्ये ब्रह्मण्यपि युक्त्यभ्युच्चयार्थस्तच्छब्दः । ब्रह्मणः सत्यत्वेऽन्यस्य चासत्यत्वे युक्तिश्चेयम् । ब्रह्मव्यतिरिक्तं यत्सत्यं तन्नित्यमनित्यं वा, नित्यत्वे कार्यता कार्यत्वे चासत्यत्वमनिच्छतोऽपि ग्रामादिकस्वजिह्वाचर्वणवदागतम् । नित्यत्वेऽप्यसर्वगतत्वे सर्वगतत्वेऽपि जाड्यत्वेऽपि भेदे स एव दोषः । तस्माद्ब्रह्मैव सत्यं न त्वन्यत् । ब्रह्मण्यध्यासोत्तत्स-

१ ख. °बाश्रार° । २ ख. °र्तामूर्तादि° । ३ क. ग एवं ते° । ४ ख. °तो प्रा° । ५ ख. °सात्तु र.त्य° ।

त्यशब्दार्हम् । यथेदंतायामध्यस्तं रजतमिदंशब्दार्हम् । **एष श्लोको भवति** व्याख्यातम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्मवल्ल्याध्याये षष्ठोऽनुवाकः ॥ ६ ॥

अथ ब्रह्मवल्ल्यध्याये सप्तमोऽनुवाकः ।

**असद्वै** सत्येऽध्यस्तं सत्यशब्दार्हं सन्नामरूपकर्मात्मकत्वेन स्थवीयो बुद्धिविषयत्वात् । तद्रहितमसत्सत्यज्ञानादिलक्षणं ब्रह्म शास्त्रप्रसिद्धं विद्वत्प्रसिद्धं वा नामरूपक्रियाहीनं जगत्कारणं सद्वा इति वक्तव्येऽसत्त्वभ्रमस्य नामरूपक्रियाहीनत्वेनोत्पादादिति कथनार्थमसद्वा इत्याह । **इदं** विविधप्रत्ययगम्यं विश्वम् । **अग्रे** विश्वोत्पत्तेः प्राक् । **आसी**द्बभूव । अविद्याशबलं ब्रह्म जगत्कारणमेवाऽऽसीन्न तु कार्यजातमित्यर्थः । **ततोऽसच्छ**ब्दाभिधेयात्कारणात् । **वै**, एव प्रसिद्धं वा । **सत्**सच्छब्दाभिधेयं स्पष्टनामरूपकर्म । **अजायत**ोदपद्यत । **तद**विद्याशबलं जगत्कारणम् । अविद्या**त्मान**मेकं चिदानन्दस्वभावम् । **स्वयमा**त्माऽविद्याया आश्रयो विषयश्च । **अकुरुत** बहुधा कृतवान् । **तस्मा**दात्मानमा (त्मन आ) त्मनैव बहुधा करणात्ततोऽविद्याश्रयविषयभूतमानन्दात्मस्वरूपं **सुकृतम्** । स्वार्थेऽयं सोः प्रयोगः । स्वेन स्वंकृतवत्स्व (कृतं स्व)कृतं स्वकृतमेव परोक्षेण सुकृतं पुण्य**मुच्यते** कथ्यते देवैः । **इति**र्मन्त्रसमाप्तौ ।

ननु—"ब्रह्मविदाप्नोति परम्" इत्युपक्रान्तं तत्र किं ब्रह्मेत्याशङ्कायां सत्यादिलक्षणं तत्स्वरूपमभिधाय तत्प्रतिपत्त्यर्थं च तस्याऽऽकाशादिकारणत्वाभिधानप्रसङ्गेन कोशपञ्चकमवतार्य पञ्चमकोशाधारब्रह्मास्तित्वनास्तित्वज्ञानाभ्यामर्शनिर्णययोरभिधानेन प्रश्नेषु समागतेषु सन्निर्णयार्थमिदं 'सोऽकामयत' इत्यारभ्य 'सुकृतम्' इत्यन्तमुक्तमस्तु[2] तत्तथाऽपि सर्वकारणब्रह्मावाप्तौ न पुरुषार्थ आनन्दावाप्तेरेव तथात्वादित्यत आह—यत्प्रसिद्धं जगत्कारणम् । **वै** स्मर्यमाणं तद्ब्रह्म । **सुकृतम**विद्यायाः स्वात्मरूपमेव कर्म कर्तृभावेन कृतवत् । **रस** आनन्दद्रवः स्वयंप्रकाशमानानन्द इत्यर्थः । **वै** प्रसिद्धो वैषयिकसुखरूपेण सर्वप्रियतमत्वेन वा स्मर्यमाणो वा । **स** मोक्षे भावीदानीं परोक्ष एव प्राणिनां रसः **रसं** सुकृताभिन्नमानन्दात्मस्वरूपम् । **हि** यस्मादेव । रसं लब्ध्वेति द्वाभ्यां शृङ्खलान्यायेन संबध्यते । रसमेव न त्वन्यत् । **अयम**धिकारी । **लब्ध्वा** प्राप्यैव न त्वन्यथा । **आनन्दी** प्रत्यक्प्रकाशमानानन्दात्मस्वरूपः । **भवति** स्पष्टम् । तस्मात्पुरुषार्थो ब्रह्मप्राप्तिरित्यर्थः ।

ननु—सुकृतस्य ब्रह्मण आत्माभिन्नस्याऽऽनन्दत्वं भवतोच्यते । प्रतीतिश्च विपरीते-

१ घ °त् । तत्प्रहि° । २ ख. °स्तु तत्तथा । तथाऽपि ।

स्याशङ्क्य तदुत्तरत्वेनान्यथानुपपत्तिमाह— **क** आत्मनोऽनानन्दत्व आनन्दात्मव्यतिरिक्तः । **हि**र्हेत्वर्थः । **एव** नाम । **क**स्तु नामा[1]**न्यादपा**नचेष्टां कुर्यात् । **को** व्याख्यातम् । **प्राण्यात्**प्राणचेष्टां कुर्यात् । **यद्यद्येष** स्वयंप्रकाशमानः । **आकाशः** आकाशवत्सर्वगत आकाशशब्दाभिधेयो वा । देशकालवस्तुपरिच्छेदशून्य इत्यर्थः । आकाश इति सप्तम्यन्तत्वपक्षे हार्दाकाशेऽविद्याशबलित इति व्याख्येयम् । **आनन्दः** परप्रेमालम्बनत्वेनोपलक्षित आनन्दात्मा । **न स्यान्न** भवेत् । अयमर्थः—आत्मकामाय सर्वा लौकिक्यो वैदिक्यश्चेष्टाः । प्राणधारणमपि । आत्मा चेद्दुःखं दुःखसाधनं वा स्यात्तदानीं वृश्चिकतज्जन्यदुःखवद्धेयः स्यात् । दुःखसाधनत्वे वाऽऽत्मार्थं भार्यादिकं प्रियं न स्यात् । ततः सुखत्वं परिशिष्यते । अभावस्यासत्त्वे नामाऽऽत्मनो दुःखाभावत्वं प्रतीतिविरुद्धम् । सुखस्यापि जायमानस्य वेद्यस्याऽऽत्मार्थत्वेन प्रियता दृष्टा । न तु स्वरूपेण । अन्यथा वैर्यादिगतस्यापि तस्य प्रियता स्यात् । तेन नित्यस्वयंप्रकाशमानानन्दात्मा परप्रेमालम्बनत्वेनाङ्गीकरणीयः । परप्रेमालम्बनत्वं च तदर्थलौकिकवैदिकजीवनचेष्टान्यथानुपपत्त्या कल्प्यते । आत्मनोऽनानन्दत्वे न काऽपि चेष्टा स्यादिति । ननु—यद्ययमानन्दरूपस्तर्हि किमर्थमयमानन्दार्थं लोकः साधनमादत्त इत्यत आह—**एष** आकाश आनन्दात्मा स्वयंप्रकाशमानोऽप्यनाद्यविद्यावृतः साधनसाध्यादिभावेन व्यवस्थितो **हि** यस्मात्तस्मादिति शेषः । **एवै**षशब्देन संबध्यते । एष एव साधनं साध्यं च वस्तुतोऽज्ञातात्मयाथात्म्यसाधनतारतम्येनापसारिताविद्यातारतम्यादाविर्भूतात्मसुखतारतम्यरूपः । अविद्यादशायामा**नन्दयाति,** आकीटपतङ्गमाब्रह्म च निखिलं जगदा योनिप्रादुर्भावादा मोक्षसाक्षात्काराच्चाऽऽनन्दयति । आनन्दात्मनि साक्षात्कृते न साध्यसाधनादि(दी)ति भावः । तत्साक्षात्करणात्प्राक्साध्यसाधनादेरपि वस्तुतस्तदात्मकत्वात्तस्यैव सुखदातृत्वमविरुद्धमित्यर्थः ।

ननु—आत्मनोऽस्तित्वे स्थिते विद्वानेव कदा कथं प्राप्नोतीत्यत आह—**यदा यस्मि**न्काले । **हि** यस्माद्विदुषो ब्रह्मप्राप्तौ नियामको हेतुर्हिनोच्यते । ब्रह्मसाक्षात्कारवत्त्वेनापगताविद्यत्वादित्यर्थः । **एव,** अयं पार्थसारथिवत्कालवाचिना विद्वद्वाचिना लाभवाचिना च संबध्यते । यदैव न त्वन्यदा । **एष** विद्वानेव न त्वन्यः । **एतस्मिन्ना**त्मनो भेदरहिते सत्ये रसे । **अदृश्ये** बाह्यान्तरेन्द्रियज्ञानाविषये । **अनात्म्य** आत्मन इदमात्म्यं त्रिविधं[2] शरीरं न यस्यासावनात्म्यस्तस्मिन् ।

ननु—सर्वज्ञानाविषयोऽशरीरोऽपि वागगोचरः पदार्थो नरविषाणादिर्दृश्यत इत्यत आह—**अनिरुक्ते** निरुक्तिशून्ये वाचामगोचर इत्यर्थः । ननु—वाचामगोचरोऽपि साश्रयः पदार्थो दृष्टो यथाऽविद्या सदसद्भ्यामनिरुक्त्या विषयेत्यत आह—**अनिलयने** निल-

1 घ. 'मान्यां चेष्टां । 2 घ. विविधं ।

यनमाश्रयस्तद्धीने। ननु—प्राकृते प्रलये तत्रैव प्रतिष्ठां सर्वोऽपि विन्दत इत्यत आह—**अभयं** भयं प्रकृतिस्थाः संस्काराः प्रकृतिश्च भयानकसंसारहेतुत्वात्तच्छून्यमभयमित्यर्थः। अभयं यथा तथेति व्याख्येयम्। **प्रतिष्ठा**मिदमहमस्मीति तादात्म्येन प्रतिकूलसंस्काररा-हित्यलक्षणेन प्रकर्षेण स्थितिम्। **विन्दते** लभत एव। **अथ** तदा **सोऽस्मि**न्प्रतिष्ठां प्राप्तो विद्वान्। **अभयं गतः,** भयमविद्यातत्संस्कारा द्वैतरूपास्तच्छून्यमभयं स्वयंप्रकाश-मानानन्दात्मस्वरूपाविर्भावं **गतः** प्राप्तः। **भवति** स्पष्टम्। जीवन्मुक्तः सर्वदा भवतीत्यर्थः।

ननु विद्वानविद्वानपि ब्रह्मणि प्रतिष्ठित एव तस्य सर्वाधारत्वात्ततोऽविदुषोऽपि प्रेतस्य ब्रह्मप्राप्तिः स्यादित्यत आह—**यदा** यस्मिन्काले। **हिं**हैतौ। यस्माद्ब्रह्मणि प्रतिष्ठितोऽ-प्यविद्वान्ब्रह्माहमस्मीति ब्रह्म न प्रतिपद्यते निधिस्थ इव जात्यन्धो निधिम्। **एव** पूर्ववत्। **एष** प्रसिद्धः संदिहानो विपर्यस्तोऽज्ञानी च। **एतस्मि**न्स्वात्माभिन्ने ब्रह्मणि, **उदपि**। **अरमल्पम्**। **अन्तरं** भेदम्। **कुरुते** स्पष्टम्। **अथ** तदा **तत्तस्य** संदिग्धस्य विपर्य-येस्थस्याज्ञानिनश्च। **भय**मविद्यातत्कार्यतत्संस्कारजन्यमध्यात्माधिभूताधिदैवभेदभिन्नं वाचि मनसि कायेऽसह्यदुःखकारणं जन्मादि। **भवति** ब्रह्मैव संदेहविपर्ययाज्ञानैरुक्तभयरूपं भवति स्रीगव सर्पाद्याकारैः। ननु अविदुषस्तथाऽस्तु यस्तु शास्त्रीये कर्मण्यधिकृतो विद्वां-स्तस्य ब्रह्मविद इव ब्रह्मप्राप्तिरित्यत आह—**तत्त्वे**वं ब्रह्म भयरूपम्। तुशब्दः शङ्का-निवारणार्थः। शास्त्रीये कर्मण्यधिकृतस्य विदुषो ब्रह्मविदश्च न साम्यं भिन्नाभिन्नबुद्धित्वेन विरुद्धत्वात्। **एव** तदेव न त्वन्यत्। **भयं** व्याख्यातम्। **विदुषः** कर्मविद्याविदः। **अमन्वानस्याहं** ब्रह्मास्मीत्यभेदेन मननरहितस्य। इदमेव वैषम्यं कर्मब्रह्मविदोः। तत्त-त्राऽऽस्मत्वेनाज्ञाते ब्रह्मणि भयंकरेऽपि। **एष श्लोको भवति** व्याख्यातम्। अपि-शब्दसूचिता युक्तिः संक्षेपेणेयम्। अमृतं माता पिता बन्ध्वादि वाऽविपरीतरूपमपि स्वस्ये-ष्टकारित्वेन स्वयं विपरीतगृहीतं तदनिष्टमकुर्वदपि स्वस्यानिष्टकारि दृष्टं यथा तद्वद्ब्रह्मापि॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्ति-रीयोपनिषद्दीपिकायां ब्रह्मवल्ल्यध्याये सप्तमोऽनुवाकः॥ ७॥

---

अथ ब्रह्मवल्ल्यध्यायेऽष्टमोऽनुवाकः।

---

**भीषा** भीत्या। **अस्माद्ब्रह्मण** आत्मत्वेनाज्ञानात्। **वातो** वायुः। **पवते** वाति। **भीषा** भीत्या। **उदेत्युदयं** गच्छति। **सूर्य** आदित्यः। अस्मादित्यनुवर्तते। **भीषाऽ-स्माद्व्याख्यातम्**। **अग्निश्च** वह्निरपि दहनादिकं करोतीति शेषः। **इन्द्रश्च** त्रिलोकीना-

१ ख. 'यस्तद्या'।

थोऽपि त्रिलोकी भवतीति शेषः। आद्यश्चकारोऽनुक्तानां सर्वेषां महतां व्यापारसमुच्चयार्थः। द्वितीयो भीषाऽस्मादिति संबन्धार्थः। **मृत्युः** स्थावरजङ्गमविनाशकारी। **धावति** सर्वेषामभावाय सर्वान्प्रतिगच्छति। **पञ्चमः** पञ्चसंख्यापूरणो भीषाऽस्मादित्यनुषङ्गः। **इतिः** श्लोकसमाप्तौ।

ननु—प्रकृता ब्रह्मप्रश्ना व्याख्यातास्तत्रैव ब्रह्मप्राप्तेरपुरुषार्थत्वे शङ्किते प्रसङ्गाद्ब्रह्मण आनन्दरूपत्वमुक्तं सोऽयमानन्दो दुःखाभावो भावो वा सातिशयस्ततोऽपुरुषार्थ इत्याशङ्क्याऽऽह—**सा** प्रसिद्धा। **एषा** वक्ष्यमाणा। **आनन्दस्य** भावरूपस्य सुखस्य **मीमाꣳसा** ब्रह्मविदां सुखकारित्वेन पूजितो विचार आनन्दस्योत्कर्षवत्त्वेनाभावत्वव्यावृत्तिफलो ब्रह्मानन्दस्य सर्वस्मादधिकत्वेनापुरुषार्थत्वव्यावृत्तिफलः। **भवति** स्पष्टम्।

**युवा** षोडशवर्षमारभ्याऽऽपलितदर्शनमुपघातमन्तरेण मध्यमं वयो यौवनं तद्वानक्षीणेन्द्रियशक्तिरित्यर्थः। **स्याद्भवेत्**। यौवनेऽपि स्वभावतः शरीरस्येन्द्रियाणां वा वैरूप्यं संभावितं रोगादिनिमित्तं वा तन्निवारणार्थमाह—**साधुयुवा** कन्दर्पसमानरूपः सन्यौवनसंपन्नः। तादृशोऽपि मूर्खो मा भूदित्याह—**अध्यायको**ऽधीतसाङ्गोपाङ्गवेदः सर्वज्ञ इत्यर्थः। तादृशोऽपि केवलं स्वोदरंभरिरतिमन्दो वा तद्द्वयं तन्त्रेण वारयति—**आशिष्ठो**ऽतिशयेनाऽऽशास्ताऽतिशयेनाऽऽशुकारी च। अथाप्यतिमन्दत्वाद्व्यर्थजीवित एवेत्यत आह—**दृढिष्ठो**ऽतिशयेन दृढोऽविकृतवाक्कायमना इत्यर्थः। तादृशोऽपि बलहीनः स्यादित्यत आह—**बलिष्ठो**ऽतिशयेन बलसंपन्नः। एवंभूतोऽपि वित्तहीनः स्यादित्यत आह—**तस्यो**क्तविशेषणविशिष्टस्य। **इयं** सप्तद्वीपाब्धिवलयलोकमेखला। **पृथिवी** भूमिः। **सर्वा** निखिला। **वित्तस्य** वित्तेन दृष्टादृष्टसुखकरेण गोहिरण्यादिना। **पूर्णा** परिपूर्णा। **स्याद्भ**वेत्सर्वलक्षणसंपन्नस्य चक्रवर्तिन इत्यर्थः। **स** सर्वलक्षणसंपन्नस्य चक्रवर्तिनो जायमान आनन्दः। **एकः** एकत्वसंख्याक्रान्तः। **मानुषो** मनुष्येषु भवः। **आनन्दो** भावरूपः सुखात्मा। नातः परं मनुष्याणां सुखमित्यर्थः। **ते** परोक्षाः। **ये** प्रसिद्धाः। **शतं** शतसंख्याका **मानुषा आनन्दाः**। व्याख्यातम्। वचनं तु विशेषः।

**स** परोक्षः प्रसिद्धः। **एक** एकत्वसंख्याक्रान्तः। **मनुष्यगन्धर्वाणां** मनुष्याः सन्तो जन्मान्तरे गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वा अन्तरिक्षलोकनिवासिनोऽन्तर्धानादिशक्तिमन्तस्तेषाम्। **आनन्दः** सुखात्मा। अस्माकं चक्रवर्तिनां यथोक्तगुणविशिष्टानां शतगुणसुखं मनुष्यगन्धर्वाणां परमं सुखमित्यर्थः। **श्रोत्रियस्य** चाधीतवेदस्याप्यवृजिनत्वं चात्रार्थसिद्धमिति न पठितम्। श्रोत्रियत्वं च चक्रवर्तिनोऽस्य च समानम्। चकारो मनुष्यगन्धर्वानन्दसमुच्चयार्थः। मनुष्यगन्धर्वानन्दप्राप्तौ कारणमाह—**अकामहतस्य** तथोक्तगुणविशिष्टचक्रवर्तिसुखकामेनानिपातितस्य तदभिलाषरहितस्येत्यर्थः।

यो हि यत्राभिलाषरहितस्तस्य तद्विषयप्राप्तेः शतगुणं सुखं भवतीत्यत एव प्रथमे पर्याये श्रोत्रियस्य चाकामहतस्येति न पठितम् ।

**ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्याऽऽनन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ।** देवगन्धर्वाणां देवाश्च ते गन्धर्वाश्च देवगन्धर्वास्तेषां चाऽऽकल्पगन्धर्वशरीरप्राप्तिहेतुभूतकर्मणामित्यर्थः । पितृणां, पितृविशेषणं चिरलोकलोकानां चिराद्दीर्घस्थायिनो लोकाः कर्मफलविशेषास्ते येषां लोकास्तत्स्थानानि च चिरलोकलोकास्तेषामनेककालस्थायिनामित्यर्थः । आजानजानां कल्पादावुत्पन्नानामाजाने देवलोके जाता आजानजास्तेषां, विशेषणमिदम् । विशेष्यमाह—देवानां द्योतनात्मकानाम् । कर्मदेवानाम् । इदं श्रुतिरेव व्याकरिष्यति । पूर्ववद्विशेषणमुक्त्वा विशेष्यमाह—देवानामाजानेभ्य उत्कृष्टानां द्योतनात्मकानाम् । कर्मदेवानामित्येतद्व्याकरोति । ये प्रसिद्धा याज्ञिकाः । कर्मणाऽग्निहोत्राद्यश्वमेधान्तेन । देवान्द्योतनात्मकानपियन्ति प्राप्नुवन्ति देवत्वमुपगता इत्यर्थः । देवानां त्रयस्त्रिंशत्संख्याकानां हविर्भुजामग्न्यादीनाम् । इन्द्रस्य त्रिलोकीपत्युः(तेः) शक्रस्य । बृहस्पतेर्देवगुरोः । प्रजापतेर्विराजः । ब्रह्मणो हिरण्यगर्भस्य । नवसु पर्यायेषु प्रायः समानपाठम् । शेषं पूर्वं पूर्वं तदाद्यर्थत्वेन व्याकृत्य यथोचितं गन्धर्वादिपदैर्योजनीयम् । अकामहतत्वं च पूर्वपूर्वविषयत्वेन हिरण्यगर्भस्य यावानानन्दस्तावानानन्दो निरतिशयवैराग्य इ(ग्यमि)ति तात्पर्यार्थः । हिरण्यगर्भादुत्कृष्टस्य ब्रह्मानन्दस्य वाङ्मनसयोरगोचरत्वाद्धिरण्यगर्भानन्दमेव ब्रह्मानन्दस्य समुद्रस्योदबिन्दुसमं दिङ्मात्रमुक्त्वोपरराम श्रुतिः । अतः परं स्वयंप्रकाशानन्दात्मैव प्रमाणं नाहमिति श्रुतेरभिप्रायः ।

---

१ क. °विशिष्टास्ते । २ ख. °लोकाः स्मार्तकर्मानुष्ठानपरा देवलोकं प्राप्तास्ते° । ३ ख. °नां श्रौतकर्मानुष्ठातारोऽविद्वांसो देवत्वं प्राप्ताः क° । ४ ख. उत्कृटानां । ५ ख. °र्थः । देवाः । समुच्चयकारिणो देवयानमार्गगामिनो देवाः । देवानां ।

अनेन भावरूपो निरतिशयश्च ब्रह्मानन्द उक्तः। तथाऽपि स तु हिरण्यगर्भादपि परतो देहाद्युपाधिस्थो वा नास्मदादिरूप इत्यत आह—**स** परोक्षो हिरण्यगर्भादुत्कृष्ट आनन्दः। यश्च प्रसिद्धोऽपि, **अयं** स्वयं प्रकाशमानः। **पुरुषे** पञ्चकोशात्मके पुरुषशब्दाभिधेये ब्रह्मपुच्छत्वेनोक्तः। **यश्च** प्रसिद्धोऽपि, **असौ** परोक्षोऽस्मदादीनां प्रत्यक्षश्च विदुषः। **आदित्य** आदित्यमण्डले। चकारौ पुरुषादित्ययोर्वाचारम्भणमाहतुर्वाक्यद्वयगतौ। **स** आदित्ये पुरुषे च वर्तमानः। **एको** भेदरहितः। विदुषो ब्रह्मप्राप्तिरुक्ता यदेत्यादिना यद्यपि तथाऽपि त्वमसीति नोक्तं तदर्थं प्रासङ्गिकमैक्यमभिधाय पुनस्तत्प्राप्तिमाह—**सोऽ**धिकारी। **यो** यः कश्चन। **एवंविदा**दित्ये पुरुषे च ब्रह्मानन्दमभेदेन विद्वान्। **अस्मा**त्प्रत्यक्षात्। **लोका**द्दृष्टादृष्टसाधनफलात्मकात्। **प्रेत्य** प्रकर्षेणाऽऽगत्य मृतवदत्राभिलाषशून्य इत्यर्थः। **एतद(मु)क्तमन्नमयम**न्नविकारम्। **आत्मान**मिन्द्रियद्वारा विषयप्रापकम्। **उपसंक्रामति,** अन्नमयमध्यात्माधिभूताधिदैवभेदाभिन्नमप्यध्यस्तं वस्तुतस्त्वहमेवेदमिति सामीप्येन सम्यगवगच्छति। **एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति।** स्पष्टम्। पर्यायचतुष्टयमन्नमयवद्व्याख्येयम्। सर्वात्मत्वज्ञानेनाऽऽनन्दं ब्रह्म प्राप्नोतीत्यर्थः। **तदपि** तस्मिन्पञ्चकोशाधिष्ठाने पुच्छरूपे ब्रह्मणि रसे सर्वानन्दातिशायिन्यधिदैवादिभेदशून्येऽहमस्मीत्यवगतेऽपिशब्दाद्यो हि यदात्मा भवति सोऽसौ तस्मान्न बिभेति। न च ब्रह्मणोऽन्यदत्रास्ति किंचिद्ब्रह्माऽऽत्मा चायं ततो नास्य भीतिः कुतश्चिदिति युक्तिरुक्ता। **एष श्लोको भवति** व्याख्यातम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां द्वितीये ब्रह्मवल्ल्यध्यायेऽष्टमोऽनुवाकः॥ ८॥

---

अथ नवमोऽनुवाकः।

---

**यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति।** कुतश्चन कस्मादपि। शेषं समानपाठं मनोमयपर्यायवद्व्याख्येयम्। पूर्वं यतो मनसः कारणादिति व्याख्यातं मनोमयपर्यायप्रसङ्गात्। इदानीं संकोचे कारणाभावात्सर्वकारणादानन्दात्मन इति व्याख्येयम्। ननु—भीतिरहिताः सन्ति सहस्रशः पुण्यात्मानः संसारिण इत्यत आह—**एतं** ब्रह्मविदं **ह** प्रसिद्धं **वावैव न तपति** संतापं न कुरुते न संतापयतीत्यर्थः। मानसप्रत्यय इति शेषः। कुत्रेत्यय-

१ ख. °पि तरवम°।

मभिनयेनाऽऽह—वृद्धादेः शोकजे विचारे किमहं क्षीणशक्तिः । **साधु** शोभनं पुण्यात्मकं कर्म । **नाकरवं** न कृतवान् । आः कष्टमिति शेषः । **किमहं** व्याख्यातम् । **पापं** श्रुत्यादिनिन्दितं कर्म । **अकरवं** कृतवान् । आः कष्टमिति शेषः । **इत्यभिनयार्थः** । अनेन प्रकारेण भयरहितानामपि संसारिणां पुण्यपापाभ्यां भीतिर्नास्य स्पृष्टेत्यभिप्रायः ।

ननु—तर्हि किं लोकायतिक इत्याशङ्क्य नेत्याह—**सोऽधिकारी । यः** प्रसिद्धः । **एवं विद्वा**नहमेव निरतिशयज्ञानानन्दो न मत्तोऽन्यत्किंचिद्वस्तुभूतमस्तीतिज्ञानवान् । **एते** पुण्यपापे । **आत्मान**मानन्दात्मरूपं नैजं **स्पृणुते** प्रीणयति । सुकृतदुष्कृते अहमेवास्मीत्यवगच्छतीत्यर्थः । ततो न लोकायतिकसम इत्याह—**उभे** पुण्यपापे । **हि** यस्माद्देवैष विद्वानेवैते **आत्मानं स्पृणुते** व्याख्यातम् । सर्वात्मत्वात्पुण्यपापानुष्ठानाननुष्ठानजन्यः संतापो न तु लोकायतिकवन्नास्तिक्येनेत्यर्थः । तदेतदाह—**य एवं वेद** प्रसिद्धोऽधिकार्युक्तमानन्दरूपं निर्भेदमात्मत्वेन जानाति । य एवं वेदैष एवैते उभे आत्मानं स्पृणुते हीत्यन्वयः । ततो लोकायतिकाद्विलक्षण इति शेषः । इतिरानन्दवल्लीसमाप्तावुक्तात्मज्ञानानुकरणार्थो वा । **उपनिषत्**सर्वकारणं सर्वाधारभूतं निरतिशयानन्दैकस्वभावं निर्भेदमपगतसमस्तप्रपञ्चं ब्रह्माहमस्मीति सामीप्येन नितरां गमयित्वाऽहंममादिबन्धनानि शिथिलीकृत्याविद्यां सकार्यां ससंस्कारां सादयति विनाशयतीत्युपनिषद्ब्रह्मविद्या प्रतिपादको ग्रन्थो वोपनिषत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां द्वितीये ब्रह्मवल्ल्यध्याये नवमोऽनुवाकः ॥ ९ ॥

## इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दस्य कृतौ तैत्तिरीयोपनिषद्दीपिकायां द्वितीयो ब्रह्मवल्ल्यध्यायः समाप्तः ॥ २ ॥

---

## अथ तृतीयो भृगुवल्ल्यध्यायः ।

### तत्र प्रथमोऽनुवाकः ।

---

उक्ता ब्रह्मविद्या । ब्रह्मावगतौ चोपाया अन्नमयादयः पञ्च कोशाः । तांश्चेत्तयाऽवगन्तुमशक्तः कुतश्चित्प्रतिबन्धात्, तस्य तत्प्रतिबन्धकारणापाकरणभूतानि तपआदीनि । तपसि कारणे च ब्रह्मदृष्टिं विधातुं प्रसङ्गादुपासनान्तरार्थमपीयं वल्ल्यारभ्यते । तत्राऽऽख्यायिका गुरूपदेशादेर्ब्रह्मविद्याङ्गत्वं दर्शयितुं विद्यां स्तोतुं च । **भृगुर्नामतः । वै** प्रसिद्धः ।

---

१ ख नैनं स्पृ० ।

**वारुणिर्**वरुणस्यापत्यं वारुणिः। **वरुणं** वरुणनामानं **पितरं** भृगोर्जनक**मुपससार** शास्त्रदृष्टेन मार्गेण विद्यार्थं समीपमागतवान्। आगत्य चेदमूचे—**अधीह्य**ध्ययनं कुरु। अयमर्थः—स्मरसि त्वं ब्रह्म, ततो मह्यं वद। **भगवो** भगवन्हे पूजावन्। **ब्रह्मा**तिशयेन वृद्धं जगज्जन्मादिकारण**मित्य**नेन मन्त्रेणोपससार। अनन्तरं पिता **तस्मै** भृगव **एत**द्वक्ष्यमाणं **प्रोवाच** प्रकर्षेणोक्तवान्। **अन्न**मद्यतेऽत्ति च शरीरमध्यात्मादिभेदभिन्नम्। **प्राणं** शरीरान्तर्वर्तित्वेन वायुमत्तारमेव क्रियाशक्तिम्। इदानीं ज्ञानक्रियाशक्तीनि भोगसाधनान्याह—**चक्षू** रूपग्रहणकारणम्। **श्रोत्रं** शब्दोपलब्धिकारणम्। उपलक्षणमिदं त्वग्रसनघ्राणानाम्। **मनः** सर्वकरणसाधारणमन्तःकरणं ज्ञानशक्तिः(क्तिम्)। **वाचं** वक्तव्यकारणभूताम्। उपलक्षणमिदं पाणिपादपायूपस्थानाम्। **इत्य**नेन प्रकारेण। अयमर्थः—भोग्यं भोक्ता भोगसाधनं चेति समग्रोऽपि प्रपञ्चस्तं ब्रह्मलक्षणं च कथयिष्यामि। यावच्चास्याऽऽत्मज्ञानं न भविष्यति तावत्पण्डितंमन्यः क्वचित्क्वचिद्ब्रह्मोपासनं करोतु। तेनोपासनेन क्षीणपापो ब्रह्मावगन्तुं शक्यते न त्वन्यथेति। तदभिप्रायेण श्रुतिराह—**त**मुपदिष्टप्रपञ्चम्। **ह** किल। **उवाचो**क्तवान्वरुणः। **यतो**ऽभिन्ननिमित्तोपादानात्। **वै** प्रसिद्धानि। **इमानि** विविधप्रत्ययगम्यानि। **भूतान्याकाशादीनि** स्वेदजादीनि च। **जायन्त** उत्पद्यन्ते। **येन** जीवनकारणेन **जातान्युत्पन्नानि** सन्ति **जीवन्ति** प्राणधारणोपलक्षितां स्थितिं कुर्वन्ति। यल्लयस्थानं घटस्येव मृत्। **प्रयन्ति** गच्छन्ति स्वस्वकार्यस्वभावं परित्यजन्ति सन्तीत्यर्थः। **अभिसंविशन्ति** सर्वतः सम्यक्प्रवेशं कुर्वन्ति। **तदु**क्तलक्षणं जगज्जन्मस्थितिध्वंसकारणम्। **विजिज्ञासस्व** विशेषेण 'अहं तदस्मि' इति ज्ञातुमिच्छां कुरु जानीहीत्यर्थः। ननु मया ब्रह्म पृष्टं, भवताऽन्यदुच्यत इत्यत आह—**तदु**क्तलक्षणं **ब्रह्म** ब्रह्मशब्दाभिधेयं नान्यदित्यर्थः। **इतिः** पितुर्वचनसमाप्तौ।

**स** श्रुतपितृवाक्यो भृगुः। **तपः** पर्यालोचनमन्नादिषूक्तेषु लक्षणाक्रान्तं कतमदित्येवंरूपम्। **अतप्यत** कृतवान्। अथवा स्वधर्मवृत्तित्वं तपः कृच्छ्रचान्द्रायणादि वा। अस्मिन्पक्षे तपसा शुद्धान्तःकरणस्य मनस इन्द्रियाणां चैकाग्र्यं जायत इति व्याख्येयम्। **स** तापसो भृगुः। **तप** उक्तरूपम्। **तप्त्वा** संपाद्य।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां तृतीये भृगुवल्ल्यध्याये प्रथमोऽनुवाकः।

---

अथ द्वितीयोऽनुवाकः।

---

अतिस्थवीय(यो) बुद्धित्वेना**न्नं ब्रह्म।** त्वमेव ब्रह्मलक्षणाक्रान्तं ब्रह्मशब्दाभिधेयम्। इत्यनेन प्रकारेण **व्यजाना**द्विशेषेणावगतवान्।

तद्विज्ञानप्रकारं श्रुतिराह—**अन्नादुक्तात्** । हि यस्मात् । एवान्नादेव न त्वन्यस्मात् । **खलु** निश्चितम् । **इमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्ति,** व्याख्यातम् । यत्पदस्थलेऽन्नपदमिति विशेषः । इत्यनेन प्रकारेण । तदन्नं ब्रह्मरूपं **विज्ञाय**ावगत्य प्रत्यक्षेणोपपत्त्या चान्नस्य नाशमवलोक्यानन्तब्रह्मलक्षणाभ्यां संशयाविष्टहृदयः । **पुनर्भूय एव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच,** व्याख्यातम् । वरुणं पितरमुपससारैवेत्यन्वयः । **तपसा** व्याख्यातेन त्वया स्वयं ज्ञानेनोपायेनेत्यर्थः । **ब्रह्म विजिज्ञासस्व** पर्यालोचनेन ब्रह्मणोऽवगतिं कुरु ।

इदानीमुपेयदृष्ट्या स्तौति—**तपो ब्रह्म** ब्रह्मप्रतिपत्त्युपायभूतं तपो ब्रह्मोपेयमित्यनेनार्थादिदमुक्तं ब्रह्मज्ञानार्थिना नित्यानित्यवस्तुविवेकादिकं साधनं संपादनीयम् । तत्संपादयितुमशक्तश्चेत्तस्मिन्ब्रह्मदृष्टिं कुर्यादिति । अन्यथाऽत्र वक्ष्यमाणपर्यायत्रये च तपो ब्रह्मेत्यभिधानं व्यर्थं स्यात् । **स तपोऽतप्यत । स तपस्तप्त्वा ।** [ व्याख्यातम् । ]

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

---

**प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

**मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदार्थबोधिन्यां भृगुवल्ल्यध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ख. °दिनाऽनुसंधानं ।

अथ पञ्चमोऽनुवाकः ।

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां भृगुवल्लयध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

---

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।

यथाऽन्नस्य विनाशित्वं दोषो ब्रह्मत्वे तथाऽचेतनत्वं प्राणस्य, अनिश्चयात्मकत्वं मनसः, सुखदुःखभोक्तृत्वं विज्ञानस्य च दोषः । यद्यपि चक्षुः श्रोत्रं मनो वाचमित्युपदिष्टं न विज्ञानमिति तथाऽपि क्रियाशक्तीनां वागादीनां ज्ञानशक्तीनां च चक्षुरादीनां प्राणमनःसमानयोगक्षेमत्वात्पृथक्तद्विज्ञानं च नोक्तम् । मनसोऽपि विज्ञानतन्त्रत्वान्मनसाऽभिधीयमानत्वेन विज्ञानमप्यर्थादुक्तमेव । ततस्तद्दर्शनं दोषदृष्ट्या पितरं प्रत्यागमनं चेत्यविरुद्धम् । प्राणमनोविज्ञानानि प्राणमयमनोमयविज्ञानमयकारणान्यानन्दश्चाऽऽनन्दमयकारणम् । पुच्छं च तस्य ब्रह्मशब्दाभिधेयो मुख्यः । ततोऽस्य दर्शनानन्तरं पितरं प्रत्यागमनाभावः । **स तप** इत्यारभ्येतीत्यन्ताः प्राणमनोविज्ञानानन्दपर्यायाश्चत्वारोऽपि समानपाठा अन्नपर्यायवद्व्याख्येयाः ।

इदानीमाख्यायिकासिद्धमर्थं श्रुतिराह विद्यास्तुतये—**सा** प्रसिद्धा । एषेदानीमुक्ता । **भार्गवी** भृगुणाऽवगता भार्गवी । **वारुणी** वरुणेन प्रोक्ता वारुणी । **विद्या** ब्रह्मविद्या । **परमे** उत्कृष्टे । **व्योमन्**व्योम्न्यानन्दात्मनि । **प्रतिष्ठिता**ऽवस्थानं प्राप्ताऽऽनन्दात्मन्येव पर्यवसितेत्यर्थः ।

इदानीमानन्दात्मविज्ञानोक्तं फलमाह—[ **स** प्रसिद्धः । ] योऽधिकारी । **एवम**न्नप्राणमनोविज्ञानेभ्योऽन्तरतम आनन्दोऽहमस्मीति । **वेद** जानाति साक्षात्करोतीत्यर्थः । **प्रतितिष्ठति,** एवं ज्ञानवान्सोऽयमविद्यासंस्कारशून्यो ब्रह्मण्येवावतिष्ठते । [1]अत्रैवं प्रतिपत्तुमशक्तोऽन्नादिकोशपञ्चककारणे ब्रह्मदृष्टिं कुर्यात् । सोऽप्यन्तःकरणशुद्धिद्वाराऽस्मिञ्शरीरे शरीरान्तरे वा प्रतितिष्ठति ।

---

१ क. अथ चैवं । घ. अथ वैवं ।

य एवं वेदेत्यनेनान्नादिषु ब्रह्मदृष्टेरप्यभिधातुं शक्यत्वात्तादृशस्य प्रलोभनार्थं दृष्टं फलान्तरमप्याह—**अन्नवानित्यमन्नसंपन्नः** । **अन्नादो**ऽन्नभक्षको नीरोग इत्यर्थः । **भवति** स्पष्टम् । **महान**धिकः । **भवति** स्पष्टम् । कथं—**प्रजया** पुत्रादिसंतत्या । **पशुभि**र्गवादिभिः । **ब्रह्मवर्चसेन** ब्राह्मणजात्युचिततेजसा । न केवलमेवं किंतु **महान**धिकः । कथं—**कीर्त्या** यशसा । प्रथमो महच्छब्दस्तस्मिन्विद्याधिक्यमाह । द्वितीयस्तु प्रजादीनां कीर्त्यन्तानाम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदार्थबोधिन्यां तृतीये भृगुवल्ल्यध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

इदानीमस्यान्नब्रह्मोपासकस्य व्रतमाह—**अन्नमदनीयं न निन्द्या**न्निन्दां न कुर्यात् । तदन्नानिन्दनं **व्रतं** व्रतधारणम् । पूर्वमन्नमन्नादश्च यथास्थितमुपासनीयमिति सिद्धवत्कृत्येदानीं वैपरीत्यमाह—**प्राणो वै** पञ्चवृत्तिरेव । **अन्नमदनीयम्** । **शरीरं** स्थूलो देहः । **अन्नादम**न्नभक्षकम्, अन्नाश्रयत्वात् । **प्राणे** पञ्चवृत्तौ **शरीर**मुक्तं तदधीनस्थितित्वेन **प्रतिष्ठितं** प्रतिष्ठां प्राप्तम् ।

इदानीं वैपरीत्यमाह—**शरीरे प्राणः प्रतिष्ठितः** स्पष्टम् । तदुक्तम् । **एतच्छरीरं** प्राणरूपं प्रत्यक्षम् । **अन्नमदनीयम्** । शरीरं प्राणश्च । **अन्ने** शरीरे प्राणे च **प्रतिष्ठित**मवस्थितं वंशतृणादिष्विव गृहं, गृहे च वंशतृणादि । **स** प्रसिद्धः । **यो** यः कश्चनोपासकः । **एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति** । **अन्नवानन्नादो भवति** । **महान्भवति** । **प्रजया पशुभिर्ब्रह्मवर्चसेन** । **महान्कीर्त्या** । एतदन्नमन्ने प्रतिष्ठितं **वेद** जानाति जानीयादित्यर्थः । व्याख्यातमेतत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदार्थबोधिन्यां तृतीये भृगुवल्ल्यध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

**अन्नमुक्तं न परिचक्षीत** दीयमानमन्नं न निराकुर्यात्पात्रस्थं वा न परित्यजेत् । तदन्नापरित्यागलक्षणं **व्रतं** व्रतधारणम् । इतः परं मनो विज्ञानं चेति वक्तव्यं यद्यपि तथाऽपि तयोरपि भूतकार्यत्वात्प्राणशब्देन वायुभूतमङ्गीकृत्यान्नशब्देन भौतिकं भूतप्रसङ्गं प्रस्तावयति—**आपो वा अन्नम्** । **ज्योतिरन्नादम्** । **अप्सु ज्योतिः प्रति-**

---

१ ख. °रं प्रत्यक्षं प्रा° ।

ष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । आपो द्रवात्मिकाश्चतुर्गुणाः । ज्योतिः प्रकाशात्मकं त्रिगुणम् । शेषं प्राणशरीरपर्यायवत्समानपाठं व्याख्येयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां तृतीये भृगुवल्ल्यध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः ।

अन्नमुक्तं बह्वधिकं शास्त्रोक्तैरुपायैर्योजनादिभिः **कुर्वीत स्पष्टम् । तद्**न्नबहुकरणं व्रतं व्रतधारणम् । **पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।** पृथिवी कठिना पञ्चगुणा । आकाशश्छिद्रात्मा शब्दगुणः । शेषं समानपाठमब्ज्योतिःपर्यायवद्व्याख्येयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां तैत्तिरीयोपनिषद्दीपिकायां पदबोधिन्यां तृतीये भृगुवल्ल्यध्याये नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

**न कंचन** कमपि चण्डालान्तं ब्राह्मणादिकं **वसतावद्य** रात्रौ त्वद्गृहे वासं करिष्यामीति वसतिनिमित्तं समागतम् । **प्रत्याचक्षीत** न निराकुर्वीत । **तद्व्र**सतिनिमित्तं समागतानिवारणं **व्रतं** व्रतधारणम् । एवमेतान्युपासनानि सव्रतानि समानफलत्वादिच्छाविकल्पार्थानि । उक्तफलकाम उक्तेष्वन्यतममुपासनं कुर्यादित्यवगम्यते । अत्र च भूतपञ्चकस्य च परस्परमुपकार्योपकारकभावकथनेन सर्वाद्वैते पर्यवसानं तद्दर्शितमिति तात्पर्यार्थः ।

इदानीं ब्रह्मज्ञानोत्पादे सश्रद्धमन्नदानं कारणं तथाऽन्नमन्तरेण कर्तुमशक्यं वसताव्यप्रत्याख्यानं नान्नमन्तरेण स्यात् । न हि पूर्णोदरा अप्रार्थितान्ना वसत्यर्थं गृहस्थस्य गृहेष्वागच्छन्तो दृश्यन्ते । किंतु क्षुधार्ता एव । ततोऽन्नसंपादनार्थं गृहस्थाश्रमवासिना मुमुक्षुणाऽपि महान्यत्नः करणीय इत्याह—**तस्माद्य**स्मादन्नमन्तरेण न पुरुषार्थसिद्धिर्गृहस्थस्य ततो **यया कया च** येन केनापि **विधया**, उपायप्रकारेण याज-

१ ख. °रीरं प° ।

नाद्यन्यतमेनेत्यर्थः। **बह्वधिकमन्नं** व्रीह्यादिकं **प्राप्नुयाद्भवेत्**। यद्यप्यन्नं बहु कुर्वीतेत्यनेनैव तदुक्तं तथाऽपि तद्व्रतमित्यभिधानादुपासनाङ्गोऽयं नियमविधिरितिबुद्धिनिवारणार्थं स्वातन्त्र्येण पुरुषार्थत्वं दर्शयितुं पुनराह। ननु—अन्नं स्वोपभोगायैव संपाद्यं न त्वन्यस्मै दानाय, प्रमाणाभावात्, इत्यत आह—**अराधि** संसिद्धम्। **अस्मै गृहे** समागतायातिथये। **अन्नमदनीयम्**। इत्यनेन प्रकारेण स्वभार्यादीन्प्रति। **आचक्षते** कथयन्ति विद्वांसो गृहस्थाः[1]। अनेन गृहस्थप्रसिद्धिः प्रमाणमन्नदाने कथिता[2]।

इदानीं दीयमानेऽन्ने देशकालपात्रश्रद्धासत्कारादिसंपत्तिरङ्गमित्येतदर्थं यथा दत्तं तथैव फलं भवतीत्याह—**एतद्वै** प्रसिद्धम्। **मुखतो** मुखे मुख्ये देशे काले पात्रे च मुख्यया श्रद्धाप्रणिपातसत्कारादिरूपया वृत्त्या मुख्यमन्नमदनीयम्। **राद्धं** संसिद्धं दत्तमित्यर्थः। यदि तदा **मुखतो** मुख्ये देशे काले मुख्यया वृत्त्या मुख्यं मुख्याय। **अस्मा** अन्नस्य दात्रे। **अन्नमदनीयम्**। **राध्यते** संसिद्धं भवति। **एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते**। मध्यतो मध्यमदेशे काले पात्रे च मध्यमया वृत्त्या मध्यमम्। अन्ततोऽन्ते जघन्यदेशे काले पात्रे च जघन्यया वृत्त्या-तिरस्कारादिरूपया जघन्यम्। व्याख्यातमन्यत्पर्यायद्वयेऽपि। यत्र देशे यस्मिन्काले यद्वर्णाश्रमिणे यादृशाचाराय यस्मिन्वयसि यद्दत्तमन्नमन्यद्वा दातुरपि तस्मिन्देशे तस्मिन्काले तद्वर्णाश्रमिणस्तादृशाचारस्य तस्मिन्वयसि तादृशं तदन्नमन्यद्वा संपद्यत इत्यर्थः।

इदानीं यथोक्तविशेषणविशिष्टस्य दाने यत्फलमुत्कृष्टं तदेव तद्दानज्ञानेऽपीत्याह—**योऽ**न्नदानस्य फलाभिज्ञः। **एव**मुक्तेन प्रकारेण। **वेद**ान्नदानफलमुत्तममुपास्ते। सोऽपि मुख्य-(ख)तोऽन्नं लभत इति शेषः। तस्मान्मुखतोऽन्नं देयमिति संदर्भार्थः। एवमन्नप्राणमनोविज्ञानानां कार्यरूपेण केनचित्कारणरूपेण चोपासनान्युक्त्वेदानीमानन्दस्य ब्रह्मण उपासनान्याह—**क्षेमः** प्राप्तस्य रक्षणम्। इत्यनेन प्रकारेण। **वाचि** वागिन्द्रिये मदीया वाग्ब्रह्मरूपेत्युपासीत। तदुपासनाच्च क्षेमरूपं फलमिति तात्पर्यार्थः। अत्र क्रियापदादर्शन उपासीतेत्यध्याहारः। फलादर्शने च गुणानुरूपं फलमिति सर्वत्रावगन्तव्यम्।

**योगक्षेमः**, अप्राप्तस्य प्राप्तिर्हि योगः प्राप्तस्य परिरक्षणं क्षेमः। तदुभयरूप

---

१ ख. गृहस°। २ ख. ब्राह्मणाः। ३ ख. °हस्थान्प्रति प्रमा°। ४ ख. कथितम्। ५ ख. मध्यं व्यायास्मा अन्नदात्रेऽन्न°। ६ ख. वाक्क्षेमब्रह्म°।

आनन्दो योगक्षेमः । इत्यनेन प्रकारेण । **प्राणापानयोः** । स्पष्टम् । **कर्म** व्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । **हस्तयोः** स्पष्टम् । **गतिर्गमनव्यापाररूपं** ब्रह्म । इत्यनेन प्रकारेण । **पादयोः** स्पष्टम् । **विमुक्तिर्मलविमोचनव्यापाररूपं** ब्रह्म । इत्यनेन प्रकारेण । **पायौ** गुदेन्द्रिये । इत्यध्यात्मोपासनासमाप्त्यर्थः । **मानुषी**र्मनुष्यसंबन्धिनीः । **समाज्ञाः** सम्यगाज्ञा उपासनाः । जानीयादिति शेषः ।

**अथ** मानुष्युपासनाकथनसमनन्तरम् । **दैवी**र्देवसंबन्धिनीः । समाज्ञा इत्यनुषङ्गः । कथयामीति **शेषः** । **तृप्ति**र्ब्रह्माशनपानजा तुष्टिः । इत्यनेन प्रकारेण । **वृष्टौ** वर्षकरकासु मेघोदरान्निर्गतासु नीरधारासु । **बलं** ब्रह्मभूयसामर्थ्यभिभवकारणं सत्त्वम् । इत्यनेन प्रकारेण । **विद्युत्य**चिरप्रभायाम् । **यशः** कीर्तिरूपं ब्रह्म । इत्यनेन प्रकारेण । **पशुषु** गवादिषु । **ज्योतिः** प्रकाशरूपं ब्रह्म । इत्यनेन प्रकारेण । **नक्षत्रेषू**डुषु । **प्रजाति**र्ब्रह्म प्रजननरूपम् । **अमृतं** ब्रह्म प्रियालिङ्गनदर्शनादिरूपं मैथुनं क्षुद्रसुखरूपम् । **आनन्दो** ब्रह्म मैथुनक्रियानिवृ(र्वृ)त्तिजं सुखं पुत्रफलम् । इत्यनेन प्रकारेण । **उपस्थ** उपस्थेन्द्रिये । **सर्वं** निखिलमाकाशादिवाक्कायजातं ब्रह्म । इत्यनेन प्रकारेण । **आकाशे** भूताकाशेऽव्याकृते वा । तद्ब्रह्म । **प्रतिष्ठा** प्रतितिष्ठत्यस्मिन्कार्यकारणजातमिति प्रतिष्ठा सर्वाधार इत्यर्थः । इत्यनेन प्रकारेण । **उपासीतो**पासनं कुर्यात् ।

तत्र फलमाह—**प्रतिष्ठावा**नाधारवा**न्भवति** स्पष्टम् । **तन्मह इत्युपासीत । महान्भवति** । महो व्याहृतिरूपं तेजो वा । महान्सर्वस्मादभ्यधिकः । व्याख्यातमन्यत् । **तन्मन इत्युपासीत । मानवान्भवति** । मनः संकल्पविकल्पात्मकम् । मानोऽभिमानो मननं वा तद्वान् । अभिमानपक्षेऽखण्डिताभिमान इत्यर्थः । व्याख्यातमन्यत् । **तन्नम इत्युपासीत** । नमो नमनगुणवत् । व्याख्यातमन्यत् ।

तत्र फलमाह—**नम्यन्ते** नता भवन्ति प्राप्नुवन्तीत्यर्थः । **अस्मै** ब्रह्म नम इत्युपासकाय । **कामाः** कामनाविषयाः पुत्रादयः । **तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति** । ब्रह्म परिवृढं वेदरूपं वा । तद्वान्ब्रह्मवान् । परिवृढपक्षे स्वयं परिवृढो भवतीत्यर्थः । व्याख्यातमन्यत् । **तद्ब्रह्म ब्रह्मणो**ऽसङ्गोदासीनस्य । **परिमरः** परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्नी[1] रश्मिरिति वायुः परिमरस्तज्जनक आकाशोऽपि परिमरः । अथवा सर्वविनाशकः कालः परिमरः । ब्रह्मणा संबद्धश्च स इत्याकाशः । परिमरगुणविशिष्टः काल एव वा । सर्वोपसंहारकार्ये । **इति**, अनेन प्रकारेण । **उपासी**तोपासनं कुर्यात् । **पर्येणं** सर्वत उपासकं **म्रियन्ते** विनश्यन्ति । **द्विषन्तो** द्वेषं

१ ख. °त्योऽग्निरश्मिरिति ।

कुर्वन्तः। **सपत्नाः** कामादयो बाह्या वा वैरिणः। सपत्नीमातृजा वा। स्वस्य प्रिया अप्यसाधुत्वादज्ञानाद्वा। **परि** सर्वतः। **ये** प्रसिद्धाः। **अप्रियाः** कर्णनेत्रमनोदाहकाः। स्वस्य **भ्रातृव्या** वैरिणो द्विषन्तोऽपि, अयमस्माकं वैरी, अस्यानिष्टमस्माभिः करणीयमित्युपासके संकल्पयन्त उपासको वैते मयि वैरिण इति संकल्पं करोति येषु वैरमकुर्वाणेष्वपि ते सर्वे विनश्यन्तीत्यर्थः।

एवमानन्दे ब्रह्मण्युपासनान्युक्त्वेदानीं स्थिरचेतसमधिकारिणमुपलभ्य पूर्ववल्ल्युक्तमेवाधिदैवादिभेदरहितमानन्दात्मानमाह—**स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य।** व्याख्यातं पूर्ववल्ल्याम्। इयांस्तु विशेषः। पूर्वं विदेहकैवल्यस्याभिधानात्पञ्चकोशेषु लटः प्रयोगः। इदानीं तु जीवन्मुक्तेरभिधानात्तेष्वेव ल्यपः प्रयोगः।

**इमान्भूरादीँल्लोकान्कर्मफलभूतान्'** **कामान्नी** कामं यथाभिलाषमन्नमदनीयमस्यास्तीति कामान्नी। **कामरूपी** कामं यथाभिलाषं रूपमस्यास्तीति कामरूपी। **अनुसंचरन्नात्मसाक्षात्कारमनु,** इमाँल्लोकान्सम्यक्चरन्पर्यटन्मानुषेण शरीरेणाऽऽधिकारिकेण वा। **एतद्**वक्ष्यमाणं लोकानुग्रहार्थम्। **साम** समत्वप्रतिपादकं वचनं संसारशूलार्पितान्प्राणिनो निरीक्ष्य भृशं करुणाक्रान्तमना **गायन्न**त्युन्नताञ्शब्दान्कुर्वन्। दग्धपटन्यायेन *शरीरं गृहीत्वा**ऽऽस्ते** तिष्ठति। अतः संगच्छत हे जना मा संसारशूले पततेति श्रुतेः करुणावत्या मातुरिवाभिप्रायः। **हा३वु हा३वु हा३वु** लोकत्रयीस्थान्संबोधयति वचनत्रयेण। अहो अहो अहो इति प्लुतिः पदत्रयेऽप्याश्चर्यार्था। **अहम्,** आनन्दात्माऽसङ्गोदासीनोऽनाद्यनिर्वाच्याविद्यया। **अन्नम**दनीयमुपभोग्यमित्यर्थः। इदं भूर्लोकस्थान्प्रति। **अहमन्नमहमन्नं** व्याख्यातम्। अन्तरिक्षस्वर्लोकस्थान्प्रति वचनद्वयम्। **अहं** व्याख्यातम्। **अन्नादो**ऽन्नमत्तीत्यन्नादो भोक्ता। इदं भूर्लोकस्थान्प्रति। **अहमन्नादोऽ३हमन्नादः,** व्याख्यातम्। इदमन्तरिक्षस्वर्लोकद्वयस्थान्प्रति।

इदानीं कीर्तिकारित्वमपि स्वस्यैवेति लोकत्रयीस्थान्प्रति पूर्ववत्कथयति—**अह**२

---

* यथा दग्धोऽपि पटः किंचित्कालपर्यन्तं स्वाकारं न जहाति तथा ज्ञानाग्निदग्धकर्मा वासनाक्षयेण नष्टमपि शरीरं धृत्वा करुणाक्रान्तो गायन्नास्त इति भावः।

---

१ क. घ. अपि सा°। २ क. ग. °नप्रवणः। अ°।

**श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत्।** श्लोकः कीर्तिस्तां करोतीति श्लोककृत्। व्याख्यातमन्यत्। पूर्वं वाक्यत्रयेण संबोधनेनान्नान्नादश्लोककृत्त्वमात्मन उक्त्वा लोकत्रयीं प्रति विभागेन कार्यकारणरूपत्वमात्मन आह—**अहमानन्दात्मा। अस्मि** भवामि। **प्रथमजाः** प्रथमजो हिरण्यगर्भ इत्यर्थः। **ऋता३स्य,** ऋतस्य मूर्तामूर्तात्मकस्य सत्यस्य प्रपञ्चस्य कर्ता प्रथमेत इत्यर्थः। ऋता इति प्लुतिराश्चर्यार्था।

नन्तु—संसारात्पूर्वं देवाः प्रसिद्धा इत्यत आह—**पूर्वं** प्रथमः। **देवेभ्यो** विराडवयवभूतेभ्योऽग्न्यादिभ्यः। **अमृतस्या**मरणाधर्मिणो वेदस्य। **ना३भायि** नाभिर्मध्यं वेदरहस्यमित्यर्थः। अत्रापि नकारे प्लुतिराश्चर्यार्था। कार्यकारणहीनोऽसङ्गोदासीनोऽहं वेदगर्भ इत्येवंरूप इति **योऽन्नस्य** दाताऽऽत्मनो वा सर्वाभिन्नस्य तत्त्वमसीत्यादिवाक्येभ्यो दाता क्षुधार्तेभ्यः संसारतापतप्तेभ्यो वा **मा** माम्। अन्नमानन्दात्मरूपं वा **ददाति** प्रयच्छति। **स** उक्तो दाता। तदित्थं दानं कुर्वन्। **एवमनेन** दानेन। **आ३वा,** अवोऽवतीत्यर्थः। अकारप्लुतिराश्चर्यार्था। मां सर्वाभिन्नमपि रक्षयतीति।

नन्तु—अन्ने दीयमाने कथं भवान्दत्त इत्यत आह—**अहमन्नं** व्याख्यातम्। ननु—अन्नस्य दानेनाऽऽत्मनो वा त्वद्रक्षणजं सुकृतं भवतु दातर्यस्य तु तस्मिन्नाभिलाषः स तु त्वामन्नमात्मानं वा परस्मै मा प्रयच्छतु। भक्षयतु स्वयं काममन्नं कोऽस्यानर्थ इत्यत आह—**अहमन्नमदन्तं** मां तद्रूपमात्मानं वा दत्त्वा। **अदन्तं** भक्षयन्तम्। **आ३द्मि,** अद्मि भक्षयाम्यन्नभक्षकम्। अकारे प्लुतिराश्चर्यार्था। सर्वाभिन्नोऽप्येवं भक्षयामीति।

नन्तु यथा त्वमेनं भक्षयसि तथा त्वामप्यन्यः। यथा मण्डूकः क्षुद्रं जीवं तं सर्पः मकरो विश्वस्य विचित्रशक्तिभूताक्रान्तत्वात्ततो न भवतः प्राप्तिः पुरुषार्थ इत्यत आह—अहमानन्दात्मा **विश्वं** निखिलं **भुवनं** भवन्त्यस्मिन्भूतानीति भवनं भवनमेव भुवनम् अविद्यातत्कार्यतत्संस्कारजातं कार्यकारणरूपमित्यर्थः। **अभ्यभवाम**भ्यभवं स्वकीयेनाऽऽनन्दात्मरूपेण देशकालवस्तुपरिच्छेदशून्येन चरमवृत्तिसाक्षात्कारविषयेण निखिलमिदमात्मरूपकारणेन परिभवामि। अतो न मम कश्चन भक्षकः किंत्वहमेव सर्वस्य। ततो न मत्प्राप्तिरपुरुषार्थ इत्यर्थः।

नन्तु—सर्वाभेदेऽन्येभ्यः कस्तवेऽप्यतिशय इत्यत आह—**सुवर्नं,** सुवर्णस्तत्समानवर्ण आदित्य इव सुवर्णः। **ज्योती**ज्योतिः प्रकाशः स्वयंप्रकाशानन्दरूपोऽहं ततो मय्यतिशय इत्यर्थः। इदानीं श्रुतिराह—**योऽधिकारी। एव**मुक्तप्रकारमानन्दात्मानम्

१ क. °भज इ°। २ ख. °त्मरवरू°। ३ क. ग. °स्त्वति°। ४ ख. °ह–सुवर्णस्त°। ५ क °भ्यस्यति°।

वेद जानाति साक्षात्करोतीत्यर्थः । सोऽपीमाँल्लोकानित्यादिनोक्तं फलं प्राप्नोतीत्यभिप्रायः । इत्युपनिषत् । व्याख्यातं पूर्ववल्ल्याम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यध्याये दशमोऽनुवाकः ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ तैत्तिरीयोपनिषद्दीपिकायां तृतीयो भृगुवल्ल्यध्यायः समाप्तः ॥ ३ ॥

---

समाप्तेयं शंकरानन्दी तैत्तिरीयोपनिषद्दीपिका ।